# मधुरवाणी

## A Handsome Donation.

Finance Minister C. D. Deshmukh
Patronizes "Madhurawani"

It is a matter of joy and pride to mention that no less a person than the Hon. C. D. Deshmukh, Finance Minister India Government has been pleased to donate Rs. 100/- in recognition of the meritorious service of 'the Madhurawani' the only magazine of its kind in the whole of Southern India, that has been striving to propagate the study of Sanskrit for the last two decades. The donation is a token of the love he bears for Sanskrit and his sincere desire to encourage every effort to promote its study. With patrons like the Hon. Deshmukh to back up our effort, we have every reason to expect a brighter future for the Madhurawani and the Sanskrit language.

*The Editor*
***Pandharinathacharya Galgali.***

# अनुक्रमणिका



१८ अग्रिमाङ्के पुरणीया समस्या

“राजते राजतेजः”

पूरणावधिः भाद्रपदः पूर्णिमान्तः



॥ श्रीशः शरणम् ॥



# मधुरवाणी

सुधानिष्यन्दिन्या मधुरमधुरालापकलया खलावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

संपादकः-पं. गलगलीपण्ढरीनाथाचार्यः संचालकः-पं. गलगलीरामाचार्यः

१७ वर्षे ] आषाढाङ्कः [ ४ संचिका

## मङ्गलम् ।

राधे! मन्नयनेऽधुनैव पतितो यो वालुकायाः कणः ।
फूत्कुर्वन्मुखवायुनाऽपनय तं द्रागित्यभिव्याहृताम् ॥
स्थित्वाऽग्रे सविधे तथा विदधतीमाश्लिष्य गाढं हरिः ।
सञ्चुम्ब्याधरबिम्बमच्छनयनोऽस्मीत्यालपन्स्यान्मुदे ॥ १ ॥

मध्यान्हातपबाधयाऽजनि शिरश्शूलं महन्मेऽधुना ।
राधे! शामयपाणिपल्लवपरामर्शेन तत्सत्वरम् ॥
इत्युक्तां स्वशिरस्तलाहितकरामाकृष्य संश्लिष्य तां ।
संदीयामृतमाधरं गतरुगाख्यायी स मायी मुदे ॥ २ ॥

लग्नं पादतलेऽङ्ग कण्टकमुखं सूच्या तदुच्चाटये- ।
त्युक्तामूरुतले निधाप्य चरणं प्रेम्णाऽऽमृशन्तीं शनैः ॥
राधां कण्टकिताखिलाङ्गलतिकां दृष्ट्वा हसन् कण्टका- ।
लङ्कारः सुखदस्तवायमिति संश्लिष्यन्हरिः पातु नः ॥ ३ ॥

## मासावतरणिका ।

दृश्येताद्य पयोधरोन्नतिरहो नार्यम्बरे नाम्बरे
धारा चातकपोतकर्षकचलन्नेत्राञ्चलेष्वम्भसाम् ॥
पङ्कं पापिकृतौ च ताडित[1]समुल्लासोऽपि शालागृहे
धान्याभावत एव दुर्दिनमसावाषाढकस्ते क्रमः ॥ १ ॥

---

१ ताडितः = तडितः सम्बन्धी ताडनं च ।

# भाष्यमङ्गलम् ।

## अहो भाग्यमहो भाग्यं मध्वमार्गानुवर्तिनाम् ।

परमहंसपरिव्राजकत्वाद्यनेकबिरुदालङ्कृताः श्री श्री १०८ श्रीसत्यप्रमोदतीर्थयतिवराः सत्सिद्धान्तश्रवणकुतूहलिनां धारवाडनागरिकाणां बहुविधप्रार्थनानुरोधेन मासद्वयं यावद् श्रीमद्ब्रह्मसूत्रभाष्यप्रवचनेन अन्वगृण्हन् शिष्यवृन्दम् । प्रतिदिनं मङ्गलमये प्रभातसमये श्री यतीन्द्राणां मुखारविन्दाद् आनन्दतीर्थभाष्यं श्रोतुं शताधिका एव तत्वबुभुत्सवः अहमहमिकया आगच्छन्ति स्म । सन्ध्याकालेऽपि सहस्राधिका एव नगरनरनार्यः श्री श्रीस्वामिपादानां भाषणं श्रोतुं सोत्साहं संमिलन्ति स्म । यतिकुलमण्डनमणीनामेतेषां वक्तृत्वप्रभावेण धर्मोपदेशपरिणामेण च बहव एव सुधारका त्यक्तशिखा मुक्तयज्ञोपवीता महानास्तिका अपि परमास्तिकाः पश्चात्तापदग्धाश्च भूत्वा 'शिष्यस्तेऽहं शाधि माम्' इति स्वामिपादानेव शरणमनुप्रपन्नाः ।

ग्रन्थसमाप्त्यनन्तरं चरमदिने श्रीभाष्यमङ्गलमहोत्सवः महता समारम्भेण निर्वर्तितः श्रीपादैः । दूरदूरदेशेभ्यः बहीयांस एव पाठप्रवचनपटीयांसो विद्वांसः समागता आसन् । तद्दिने श्रीचरणाः स्वर्गङ्गाप्रवाहवद् निरर्गलं निर्गलन्त्या अस्खलितया वाण्या श्रीमद्भाष्यस्य बहुभागमनूद्य सकलवेदान्तसारमेव संक्षेपेण प्रत्यपीपदन् । 'ॐ अथातो ब्रह्मजिज्ञासा' इत्यारभ्य सकलसूत्राण्यपि श्रीरामशब्दार्थपरतया व्याख्यातुं शक्यन्ते इति स्थालीपुलाकन्यायेन अनुवाद्यप्रादर्शयन् । सर्वेऽपि पण्डितप्रकाण्डाः यतिपुङ्गवानां पाण्डितीप्रकर्षं दृष्ट्वा आश्चर्यचकिता अभूवन् । तीर्थप्रसादादिभिश्च धन्यममन्यन्त आत्मानम् ।

---

## सुभाषितम् ।

स्यादत्यन्तनिरक्षरः क्षितिपतिः श्रीकारमात्राश्रयात् ।
मंत्री तत्कथितार्थलेखनपरः तत्सेवको जायते ॥
अध्येता तदगारमेव भजते विद्वांस्तु तं याचते ।
यावान् यस्य गिरा समं परिचयस्तावान् विदूरे श्रियः ॥

# संपादकालोकः



### अर्थमन्त्रिणाम् अनुकरणीयम् औदार्यम्

## केन्द्रमन्त्रि श्रीचिन्तामणिमहोदयानां मधुरवाणीपक्षपातः

भारतस्य प्रधानामात्यः पण्डितजवाहीरलालमहोदयः कुशल एकः रत्नपरीक्षक एव । सः भारतरत्नाकरं समालोड्य चतुर्दशरत्नान्येव निर्वाच्य सचिवासनेषु स्वयमभ्यषिञ्चत् । तस्याश्च महामन्त्रिमणिमालिकाया मध्ये चिन्तामणिरिव राराजते अर्थमन्त्री श्रीमान् देशमुखोपाव्हश्चिन्तामणिमहोदयः । तमेनं चिन्तामणिं नारायण इव कौस्तुभमणिं स्वहृदयसंबन्धिनमेवाकलयति पण्डित नेहरूमहोदयः । नैकभाषा परिचयेन नानाशास्त्रपाण्डित्येन अनेकपरीक्षाधिगतयशसा सर्वतोमुखप्रतिभया च मन्त्रिमण्डले कोहिनूररत्नवत् देदीप्यते देहलीराजधान्यामयं स्वनामधन्यो देशमुखमहोदयः ।

एते च देशमुखमहोदयाः महोच्चतमस्थाने स्थिता अपि 'विभवगुरुभिः कृत्यैः प्रतिक्षणमाकुला अपि' मधुरवाणीं नैव विस्मृतवन्त इति हन्त महानेव नः सन्तोषः। 'श्री. सी. डी. देशमुख रिझर्वब्यांक गवर्नर बॉम्बे' इति पुरातनं मुंबैसङ्केतं परिवर्त्य दिल्लीसङ्केतेन देशमुखमहोदयानां सविधे मधुरवाण्याः चै. वै. ज्ये. त्रय एवाङ्काः प्रेषिताः। 'साङ्किकाः सम्प्रेष्य पत्रमपि तेभ्यो विलिख्य सहायार्थं प्रार्थना कर्तव्येति आसीन्नोविचारः। परन्तु एवंविधेभ्यो महतो महीयेभ्यः कथं वा विलेख्यं पत्रम्। विलिखितेऽपि तदवलोकनाय तेषामवकाशः कुत्र? तेषामाप्तकार्यदर्शी 'अनुपयुक्तमिदं पत्र'मिति धूलीकुण्डे निक्षिपेत्। इति अनन्तचिन्ताचक्रमारुह्य विचारव्यग्रेषु अस्मासु दिल्लीतः देशमुखमहोदयानां सकाशादागतम् अकस्मादेव एकं पत्रम् शतरूप्यकात्मक-मन्यद् चिक्कणपत्रं च ( Cheque )। तदालोक्य 'चिन्तामणीन्द्रमिव चिन्तितदं दरिद्राः' वयमपि अमन्दानन्दतुन्दिला एव अभूम। केवलं शतरूपकलाभ एव अस्मदानन्दस्य न हेतुः किन्तु देशमुखसदृशा अपि महाजनाः सत्स्वपि सहस्र-कार्यकलापेषु तत्रैव अवकाशं कल्पयित्वा सादरमालोकयन्ति इमां मधुरवाणीम्। आनन्दन्ति च तस्या मधुरमधुरालापकलया। विनोदयन्ति च बहुलकार्यभार-भुग्नमुद्विग्नं च स्वकीयं मनः मधुरवाण्याः परिहासविजल्पितैः। अनुभवन्ति च ब्रह्मानन्दसहोदरं कमपि आनन्दरसम् इति। तदर्थं च चाणक्यवद् अर्थशास्त्र-चतुरान् श्रीचिन्तामणिमहोदयान् सानन्दम् अभिनन्दामः सहस्रशः कोटिशश्च धन्यवादान् वितरामः।

इमे खलु संस्कृतप्राणाः संस्कृतपण्डिताश्च श्रीदेशमुखमहोदयाः इतः प्रागपि बहोः कालात् पूर्वमेव मधुरवाण्या अर्थलुब्धा भावमुग्धाः सौन्दर्यवशीकृतचेतसश्च आसन्। यदा च 'रिझर्वब्यांक गव्हर्नर'पदाधिष्ठिता भूत्वा मुम्बापुर्यां वसन्ति स्म तदैव हि एते मधुरवाण्या संस्कृतसेवां समीक्ष्य समाहिता संतुष्टाश्च भूत्वा सार्धशत१५०रूप्यकदानेन समन्वगृण्हन् इमां। तदारभ्य एते उच्च-उच्चतर-उच्च-तमस्थानानि संस्कृताभ्यासनिशितकुशाग्रकुशलबुद्धिवैभवेन आरोहन्तः अद्य स्वतन्त्र-भारतस्य अत्यन्तमहत्वपूर्णाम् आर्थिकशाखां अतिदक्षतया वहंति निर्वहन्ति च।

मधुरवाणी एतेषामुत्कर्षमात्मन एव उत्कर्षमाकलयति । हर्षोत्कर्षम् च भजते । नूनमद्य तस्याः सर्वाण्यपि सङ्कटानि परास्तानि इति मन्येहम् । साक्षादर्थमन्त्रिण एव यस्याः संरक्षणं निरंतरजीवनं सर्वतोमुखप्रगतिं च कामयन्ते का नाम तस्या आर्थिकी अनुपपत्तिः । स्वयं चिन्तामणिरेव यस्या जीवनचिन्तां सन्तन्तनीति का वा कीदृशी वा तद्विषये चिन्ता । वयमेतदर्थे श्रीचिन्तामणिमहोदयेभ्यो ऋणीभवामः । अन्यानपि उच्चतमाधिकारस्थितान् संस्कृतप्रणयिनः सचिवान् राज्यपालान् परदेशप्रेषितराजदूतांश्च श्रीदेशमुखमहोदयानां मार्गमनुसर्तुं मधुरवाण्या विषये सक्रियसहानुभूतिं दर्शयितुं च सादरं प्रार्थयामः । केन्द्रमन्त्रिणः राज्यपालाश्च यदि इच्छन्ति तदा किं नाम असाध्यम् ? महाधिकारिणः संस्कृतप्रणयिनो यावन्तो विद्यन्ते तावन्त एव यदि मनः कुर्युः कियन्मात्रेयं द्विसहस्ररूप्यकैरपि पोष्या अल्पीयसी पत्रिका । भगवानेव तेषां तथाविधां मतिं प्रदाय संस्कृतमुद्धरतु । मधुरवाणीमुन्नमयत्विति च नाथामहे वयम् ।

## नमो वाकं प्रशास्महे

मधुरवाण्या संस्कृतसेवां दृष्ट्वा तुष्टान्तरङ्गाः तस्याश्च दयनीयां दीनदुर्दशां च निरीक्ष्य विद्रुतान्तःकरणाः केचन महाभागाः स्वयं प्रेरणया अयाचिता अपि विशेषधनं संप्रेष्य समन्वगृण्हन्नः । तेषां च अव्याजबन्धूनां कृपालूनां महोपकारं कैर्वा शब्दैः पारयामो वर्णयितुम् । ईदृशानां अत्युदारमनसां महनीयानां परमानुग्रहेणैव एवं विधेऽपि महार्घता काले निरातङ्कं प्रचलति नियतवेलं मधुरवाणी । वाणीजीवनजीवातुभूतान् भूतानुकम्पिन एतान् महोदारान् सानन्दमभिनन्दामः । सोत्साहमभिवन्दामहे च ।

तत्र च सन्ततवेदान्तपाठप्रवचनपरायणाः व्याख्यानविख्यातकीर्तयः दुर्वादिनिग्रहपटीयांसः श्रीभण्डारगिरिमठाधीश्वराः श्रीश्रीस्वामिपादाः दशरूप्यकान् आशीराशीन् फलमन्त्राक्षतादींश्च कृपया प्रेषयित्वा कृतार्थानकुर्वन्नः । एवमेव अधिकाधिकदानेन प्रतिवर्षं सर्वपीठाधिपतयः समनुगृण्हीरन्नः संस्कृतपत्रिकामित्याशास्महे ।

निवृत्तन्यायाधीश्वरा श्री अनन्तराव असुण्डीमहाभागा बाल्यादेव संस्कृत-प्रणयिनः मधुरवाणीपक्षपातिनश्च । एते महानुभावा इदानीं "कदा वाराणस्या-ममरतटिनी रोधसि" इति स्वकीयं चिराभिलषितं पूरयितुं काशीं गत्वा गङ्गा-स्नानगङ्गाधरदर्शनादिभिः निमिषमिव नयन्ति दिवसान् । एते काशीत एव दशरूप्यकान् संप्रेष्य मधुरवाण्यामात्मीयभावनां सविशेषप्रणयं च प्रादर्शयन् । तदर्थमेतेभ्यो अनन्तरावमहोदयेभ्यो अनन्तानेव धन्यवादान् समर्पयामः ।

संस्कृतसाहित्यचंन्द्रिकाया सरसनैककाव्यनिर्माणकलाकोविदायाः श्री क्षमादेवीरावमहोदयाया नाम को नाम न जानाति संस्कृतज्ञः । अनया च साक्षात् सरस्वतीस्वरूपया विदुषीमण्या मधुरवाण्याः कृते पञ्चदशरूप्यान् संप्रेष्य उपकृता वयम् । 'विद्वानेव विजानाति विद्वज्जनपरिश्रमम्' इति न्यायेन वाणीपरिश्रमं आत्मनः हृदयानुमानेनैव ज्ञात्वा प्रतिवर्षं नैकरूप्यकप्रदानेन विशेषसाहाय्यमारचयन्तीयं मनीषिमण्डलीमण्डनमणिः क्षमादेवी नितरां श्लाघ-नीया सुतरामभिनन्दनीया च ।

'सन्देशद्वयसारास्वादिनी' नामकाया लेखमालाया लेखकः श्री ए. व्ही. गोपालाचार्यः त्रिचनापल्लीवास्तव्यः दशरूप्यकान् स्वसन्तोषेणैव संप्रेष्य लेखन-कलाचातुर्येण सह आत्मन औदार्यमपि व्यञ्जयत्यञ्जसा । तमेनं सरललेख-प्रदानेन विपुलधनदानेन च मधुरवाणीमुपकृतवन्तं प्रियसुहृदं सादरमभिनन्दा-मस्तमाम् ।

अखिलकर्णाटक एव सुप्रसिद्धे पाण्डुरङ्गीकुले लब्धजन्मानः सकल-शास्त्रपारदृश्वनां श्रीकृष्णाचार्याणां तनुजन्मानः श्रीगुरुराजाचार्याः मधुरवाणी माधुरीं स्वादं स्वादं सन्तृप्तान्तरङ्गाः प्रमुदितमानसाश्च भूत्वा रूप्यकदशकं वितीर्य परमानन्दसागरे न्यमज्जयन्नः । न्यायवेदान्तादिविविधशास्त्रावगाहन-विशदशेमुषीका अपि एते अन्वर्थनामधेया गुराचार्या हृद्यानवद्यगद्यपद्यनिर्माण-विद्यायामपि लब्धवैशारद्याः विद्यावाचस्पतय इव विद्योतन्ते । तदेतेभ्यः शतशो धन्यवादान् वितीर्य द्रव्यदानेनेव लेखश्लोकादिदानेनापि अनुगृण्हन्तु न इति संप्रार्थयामः दार्शनिकप्रवरानेतान् ।

अन्येऽपि संस्कृतानुरागिणः श्रीमन्तः धीमन्तः एतेषां महानुभावानां-मार्गमनुसृत्य जीवयन्तु मधुरवाणीं संभावयन्तु सुरवाणीं सभाजयन्तु च आर्य-संस्कृतिमार्षविद्यां चेति साञ्जलिबन्धं प्रार्थयामः। इतरेषां केषांचित् सहाय-कारिणां नामानि अवकाशाभावादग्रिमाङ्के प्रकाश्येरन्।

## एभ्यो महद्भ्यो नमः

केचन महोदारा वाचकमहोदयाः संपादकानां सकाशात् वार्षिकधन-प्रेषणाय पत्रं वा पापीयसीं व्ही. पीं. वा अनपेक्ष्यैव स्वयं प्रेरणया सुरवाणी-प्रणयेन च प्रणुन्नाः अयाचिता अपि ग्राहकधनं स्वयं प्रेषयित्वा सातिशयमदयन्त अस्मासु। तेषामुपकारभरमानतेन शिरसा सादरं संस्मरामः कृतज्ञताबुद्ध्या। तेषां पुण्यात्मनां स्वनामधन्यानां नामावलिः

(१) श्री संस्कृतसाहित्यचन्द्रिका सौ. क्षमादेवी राव मुम्बै १५
(२) श्री पं. पाण्डुरङ्गिगुरुराजाचार्याः धारवाड १०
(३) श्री शेषगिरिराव नायिक बागलकोट ५
(४) श्री नागेशवनमाली ओक ५
(५) श्री दादाचार्य काळे हैदराबाद ५
(६) श्री वासुदेवभट्ट बी. ए. आलूर ५
(७) श्री वैद्य सि. शास्त्री जि. आराध्य शहापूर ५
(८) श्री भीमराव कृष्णराव हरिहर बेळगांव ५
(९) श्री सुब्रह्मण्यमठाधीश्वरस्वामिपादाः अबिड्-रोड हैदराबाद ५
(१०) श्री ज्योतिमार्तण्डवसन्तिलालशर्माज्योतिषी ५
(११) श्री एस्. सुब्रह्मण्यम् क्यानोनोरा ( सौथ क्यानरा ) ५
(१२) श्री हेड् मास्तर न्यू इंग्लिशस्कूल पूना ५

# मित्रलाभः

प्रीताः प्रीतिप्रमुखवचनं स्वागतं व्याहरामः

## " भारतीविद्या "

**भारतीविद्यापरिषदः हिन्दी–संस्कृतोभयभाषात्मकं मासिकं मुखपत्रम्**

**वार्षिकदक्षिणा ४–४–०**

संपादकः—**स्वामी चिन्मयानन्दपुरी**

व्यवस्थापकः—**श्री रामचन्द्रसक्सेना** एम्. ए. **मकरन्दनगर**
( फतेहगड कन्नौज उ० प्र० )

एकान्तमनोरम आकारः मसृणतमानि पत्राणि क्रान्तिदर्शिनः विचाराः सरससुन्दरा भावबन्धुरा च लेखशैली, ओजस्विनी प्रसादभूयिष्ठा च भाषा अत्युपयुक्ता अचर्चितपूर्वा वैविध्यपूर्णा विषयाः, देवभाषा–राष्ट्रभाषयोः मधुर-मिलनं हृदयङ्गमो रससङ्गमश्चेत्येवमादिरेवात्र समुदितः सर्वो गुणानां गणः इमां '**भारतीविद्या**' नाम्नीं द्वैभाषिकमासपत्रिकां पत्रिकासाम्राज्यसिंहासन एव प्रतिष्ठापयति। अस्याश्च प्रियसुहृदो दर्शनेन हृष्टा मधुरवाणी सानन्दमुद्गिरति "भारते भातु भारतीविद्या"।

यद्यप्यत्र पत्रे संस्कृतहिन्द्योः समावेशः माध्वीकमृद्वीकमेलनवत् "आदत्ते हि तयोः प्रयोग उभयोरामोदभूमोदयम्"। किन्तु भारतीयसंस्कृति-मूलभूतस्य संस्कृतस्य प्रसारैकलक्ष्याया अस्याः पत्रिकाया बहुभागं हिन्दी एव निगिरति। तपस्विनी देवभाषा तु पञ्चषपुटपरिमिति परिखायामेव ससङ्कटं चङ्क्रमीतीति चेखिद्यते नश्चेतः। अतोऽत्र वयं संस्कृतप्राणान् सम्पादकस्वामि-पादानेव सविनयं प्रार्थयामः यद् अस्यां च भवतां भारतीविद्यायां सुरभारत्या एव प्राधान्यं विशेषव्याप्तिश्चास्तु येनास्या नाम सार्थकी भवेत्। इयं च पत्रिका सर्वत्रापि प्रसिद्धिं प्रतिष्ठां प्रगतिं प्रसारं च प्राप्नोत्वित्याशास्महे।

# शुद्धिगङ्गावतारः ।

[ उपन्यासः ]

## प्रथमस्तरङ्गः ।

( ले०—श्री पं० मेधाव्रताचार्यः कविरत्नम् )

सदा वितनुते सुमङ्गलमहो ! सतां संगमः ।  [ प्रकृतिसौन्दर्ये ]
लभस्व राज्यश्रियमञ्जसा प्रजा
भवन्तु भव्याभ्युदयप्रयोजनाः ।
यशस्सरिन्निरितरन्नरा वरं
हरन्तु तापं तव वैरिसंभवम् ॥  [ प्रकृतिसौन्दर्ये ]

शिवनृपतिजनन्याः श्रीजिजामातृदेव्या
हृदयहिमगिरीन्द्रादुद्गता शुद्धिगङ्गा ।
अमृतजलतरङ्गैर्वेदमन्त्रोपमाङ्गै-
र्जयति जगति धर्मभ्रष्टनुद्धरन्ती ॥

प्रसन्नतां या न गताभिषेकतस्तथा न मम्लौ वनवासदुःखतः ।
मुखाम्बुजश्री रघुनन्दनस्य मे सदास्तु सा मञ्जुलमङ्गलप्रदा ॥ [तुलसीरामा०]

आर्यावर्तीयार्यसाम्राज्यमङ्गलमयदिनाभ्युदयांशुमाली महामहिमशाली राजपुत्रदेशीय वन्दनीय महावीरराजन्यकुलारविन्दवृन्दानन्दनारविन्दबन्धुर्दयासिन्धुर्गोविप्रप्रतिपालकः श्रीवेदधर्मसंचालकः शूरशिरोमणिः श्रीशिवाजिराजो हिन्दुसाम्राज्यस्य प्रथमं विजयमङ्गलमुहूर्त्तस्तंभं सुलतानदुर्गे निचखान । महाराष्ट्रस्वातन्त्र्यदेव्याः स्वराज्यमन्दिरस्य तदेव दुर्गं तोरणं संकल्प्यासौ महावीरस्तस्य तोरणदुर्गमिति सार्थकं नाम चकार किल !! तदनु षट्संवत्सरमितेऽल्पीयसि काले महाराष्ट्रीयवीरवरै राजकीये धार्मिके च क्षेत्रे यानि यानि निर्माणविनाश-

कर्माणि चक्रिरे तेषां समेषां सिंहावलोकनं संक्षेपेण वयमस्मिंस्तरङ्गे कर्त्तुमभिलषामः ।

सप्तदशशताब्द्या एतस्मिन्नल्पसमयेऽपि परकीयशासने कथावशेषे सति दाक्षिणात्यहिन्दुवीरैः संभूय निजराष्ट्रोन्नतिः कियत्या द्रुतगत्या कृतेत्यस्या यथार्थकल्पनावगमाय तत्पूर्ववर्त्तिवैभवसम्पन्नविजयनगरसाम्राज्यविध्वंसः कथं संघटितः कथञ्च तदानीन्तनीयार्य्याणां क्षात्रवृत्तेः परिभ्रंशः समजनि खल्विति समतीतघटनाचक्रस्य समालोचनमस्माभिः क्रियमाणमादावसांप्रतं न स्यादिति मन्यामहे ।

सृष्टिकालादारभ्यार्यावर्त्तीयराजकीयोत्क्रान्तेः सूक्ष्मनिरीक्षणेनास्मभिरिदमेव विज्ञायेत यत्—कस्याश्चिदपि नूतनाया राज्यघटनायाः पूर्वभूमिका भक्तशिरोमणीनां साधुमहानुभावानां दृढतरतपश्चर्यया विरचिता भवति । तदनु तस्यामेव नव्यराज्यस्य मनोरमं भव्यमन्दिरं निर्मीयते । तन्नियमानुसारमेव विजयनगरसाम्राज्यं निरमीयत । चतुर्दशशतकारम्भे देवगिरिमहीसुरतैलंगणान्तर्गतवरंगलप्रमुखराजधानीनां यादवहोयसळवल्लाळवरंगळादिदाक्षिणात्यराजरत्नानां राज्यानि विनष्टान्यभूवन् । प्रायः सकलं भारतवर्षं यवनाधिपत्यप्रभावितमभूत् । राजकीये धार्मिके वा वातावरणे भारतीयानां मस्तकमवनतमेवासीन्नितान्तम् । विशालानि देवमन्दिराणि धरणिसात्कृतानि । दक्षिणदेशस्यातुला संपत्तिरुत्तरस्यां दिशि नीताऽभवत् । सर्वत्र धर्मो मरणशय्यां गत इवादृश्यत । हिन्दूनां हिन्दुत्वविलयस्य कष्टमयः समयः समासन्नोऽभूत् । ईदृशे विपन्मये समये परमकारुणिकस्य परमेश्वरस्य प्रेरणया विमलसलिलविहितविचित्रप्रदेशप्राणिजनतोत्तुङ्गभद्रायास्तुङ्गभद्राया नद्या दक्षिणरोधसि श्रीरामसेवकवालिराजराजधान्याः किष्किन्धाया अवशिष्टरजःकणरचितशृंगेरीमठस्याधिपतिः श्रीमज्जगद्गुरुर्विद्यारण्यस्वामी माधवाचार्यो धर्मस्य राजनीतेश्च सहकारितां संपाद्य राज्ञः संगमस्य सूनुं हरिहररायाभिधं स्वान्तेवासिनं विधाय तस्मै यथेष्टमार्थिकं साहाय्यं प्रदाय 'बुक्काख्य' राजवंशस्याधिपत्यं प्रस्थाप्य विजयनगरे भारतसाम्राज्यमस्थापयत् ।

तथैव श्रीसायणाचार्यसदृशो राजनयधुरन्धरः सर्वशास्त्रपारंगतः कार्यकर्ता मन्त्रिमण्डलमण्डनो नरेन्द्रसभाममण्डयदिति सोऽयं मुसलमानानां प्रभुशक्तिमत्र- रोध्यातितरां तामशिथिलयत् । सार्द्धशतसंवत्सरीयभाविराजशासने च हिन्दूसम्राजो बहामनीयवनसाम्राज्यमपि निजप्रभावेण स्वायत्तमकार्षुः । परं देशस्य दुर्दैवतो वा, अनन्तरवर्त्तिमन्त्रिगणदुर्वर्त्तनेन वा, स्वैरस्त्रैणान्यायिदुर्णीतिराजपुरुषाणां राष्ट्रघातिदुर्व्यवहारेण वा पंचषष्ट्युत्तरपञ्चदशशततमे १५६५ खिस्ताब्दे तालिकोटसमराङ्गणे विजयनगरवर्त्तिवैभवसमृद्धसाम्राज्यं धूलिसात्कृतं सपत्नैः ।

इत्थमाय्यावर्त्ते सपादशतद्वयहायनानि यावद् देदीप्यमाने स्वातन्त्र्यसूर्य- मण्डले पारतन्त्र्याभिख्यं खग्रासग्रहणं संलग्नम् । दौलतीययवनसेनानायकानां कृतघ्नता विश्वासघातिता चांशतो विजयनगरसाम्राज्याधःपाते निमित्तमासीत् । अली अदिलशाह—अलीबेरीदशाह—इब्राहिमकुतुबशाह—हुसेननिजामशाहेत्य- भिधानानां चतुर्णां तत्कालिकानां सत्ताधीशानां हीना वैरशोधनवृत्तिः सन्धिनियमानुगुणं वर्तनस्य चाप्रामाणिकतैव नूनमितिहासकारणपरम्परावलोकनेन महत्त्वमयी वार्ता खलु!! परन्तु यवनाधिपतीनां तादृशे प्रवञ्चनजाले रामरायसमानो राजनीतिकुशलो विचारशीलः कर्तव्यपरायणः सेनानायकः स्वसामर्थ्यविषयक- मिथ्याभिमानेन बलित्वेन निपतितो राष्ट्रस्य च पाराधीनतासंपादने कारणतां गत इति घटितघटनाया अस्या अङ्गीकाराहते नान्यगतिरस्ति!! अस्तु ।

१५६५ पञ्चषष्टयुत्तरपञ्चदशशततमात् ख्रीस्ताब्ददारभ्य १६४६ षट्चत्वरिंशदधिकषोडशशततमवत्सरान्तराले काले भारतीयानां पारतन्त्र्यं कीदृश- मासीद् दुर्बलहिन्दूप्रजासु च चन्द्रहासबलेन यवनाधिपत्यधारिणः स्वं कुरानधर्मं कया रीत्या प्राचीचरन् मूसलमानेतरधर्माभिमानिजनता च 'जजिया' समाख्येन अन्याय्यकरेण कियती हतवीर्या समजनिष्टेति वृत्तान्तस्यास्य यथार्थकल्पनोपर्युक्त- विवेचनतो वाचकमहोदयानां सारल्येन स्यात् !!

आर्यप्रजानां सर्वत ईदृश्यामवनतदशायां साधुश्रेष्ठा भगवद्भक्तिपरायणाः श्रीमदेकनाथतुकारामप्रमुखा भारतखण्डनिवासिनामार्याणां सनातनधर्मविषयिणीं निष्ठां वा श्रद्धां वा सुदृढामचलां विदधिरे, राजसवृत्तेः क्षात्रतेजसस्साह्ययोगिनी-मावश्यकीं मनोभूमिकां चापि जनयाम्बभूवुः । तस्मादेव कारणात् पुण्यश्लोकः पवित्रहृदयः श्रीशिवराजसन्निभो महावीरः स्वस्य कार्यकौशलस्यालौकिकस्य कर्तव्यस्य च परां काष्ठां प्रदर्शयाञ्चक्रे । एतस्मिन्नेव कर्मणि पुनः कर्मयोगिनो राष्ट्रीयसाधुरत्नस्य नैष्ठिकब्रह्मचारिणः श्रीरामदासस्वामिन-स्तपश्चर्यैश्वर्यसहायतया श्रीमदेकनाथश्रीतुकारामप्रचालितानिवृत्तिपरभागवतधर्मे नितान्ताभिन्नप्रवृत्तिसंमेलनेन देशस्य परिवर्तितपरिस्थित्यनुरूपकर्मयोगपुरस्कर्ता स्वार्थत्यागी प्रवृत्तिमार्गनामा नवः पन्था निर्मितोऽभूत् । स एव च परस्ताद् राष्ट्रीयकार्यकर्तॄणां नीतिविदां राजपुरुषाणां राष्ट्रधर्मरूपेण परिणमन्नुदयोन्मुखं महाराष्ट्रं कूटनीतौ निपुणं विधातुं समर्थः समजनि । परन्तु कथाप्रसंगोऽयं पश्चाद्वर्णयिष्यमाणवृत्तान्ते यथावसरं समेष्यतीति श्रीमान् युवकवीरमणिः शिवराज उपक्रान्ते राष्ट्रकार्ये (१६५१) एकपञ्चाशदुत्तरषोडशशततमेशवीयवर्ष-पर्यन्तं कियत्साफल्यं समपीपददित्यस्य समासतो दिग्दर्शनं कृत्वा वयं प्रकृत-कथामनुसरिष्यामः ।

श्रीमत्समर्थरामदासः स्वामी राष्ट्रधर्मक्षेत्रे प्रवृत्तिपरं कर्मयोगस्वरूपं नूतनं तत्त्वं प्रोतवानिति श्रीशिवराजो नैजे राजकीयोद्योगे समुज्ज्वलं यशः सम्पादितवान् । नवीनराजनीतिचातुर्यबलेन च विजयपुरीयादिलराज्यायासौ स्वहस्तकौशलमपि सम्यक् प्रदर्शितवान् । अस्या नवीनाया विद्युच्छक्तेराघातेन आदिलसाम्राज्यस्य सिंहासनाधिपतयोऽकस्मादजागरुः । एतस्य नव्यस्यान्दोलनकारिणो वीरस्य च योग्यसमये कथं प्रतीकारः करणीय इति विचारसागरेऽमी न्यमाङ्क्षुः ।

विजयपुराध्यक्षैः श्रीशहाजीराजाय भूमिभुक्त्वेन पुण्यपत्तन—सूपेन्दा-पूरवाईनामकाः प्रान्ताः प्रदत्ता आसन्निति तेषां प्रान्तानां प्रबन्धपर्यवेक्षणकार्यभारः शिवराजाधीनोऽभवत । अस्यावसरस्य लाभमादायायं राष्ट्राभ्युदयाकाङ्क्षी श्रीशहाजी-

राजतनूज इमं भूमिमुक्तस्वरूपप्राप्तप्रदेशं स्वराज्यकार्यक्षेत्रं विरच्य तदन्तर्गतप्रजा-सहानुभूतिं सम्पाद्य १६४६ ख्रीस्ताब्दतः १६४८ तमाब्दं यावदमुष्य प्रदेशस्य समन्ताद् विराजमानानि महत्त्वशालीनि दुर्ग्गाणि विजित्यामुंबालसाम्राज्यमस्थिर-यत् । अनन्तरं १६४९तमे ख्रिस्ताब्दे कल्याणप्रान्तस्थकोषागारं लुण्ठित्वा कल्याणं कोङ्कणप्रान्तश्चार्यसाम्राज्ये प्रवेश्यायं महाराष्ट्रराष्ट्रपतिस्तत्प्रान्तयोः संरक्षक-दुर्ग्गाण्यपि वशंवदानि विधाय 'राजापुर'पर्यन्तं महाराष्ट्रीयाधिपत्यं प्रास्थापयत् । महाराष्ट्रीयाणाममुनाऽतर्कितेन राज्यविस्तारेणाक्रमणधाष्टर्येन च श्रीशहाजीराज-शत्रुराजभिः श्रीमोहम्मदशाहयवनाधिराजः सममेव भृशमभ्यर्थितस्ततस्तेन घोरपडे-बाजीद्वारा शहाजीराजः प्रगृहीतो बन्धनालये स्थापितश्च तथैव निश्चितावधौ शिववीरे सशिरोनमनं यवनप्रभोश्चरणयोः शरणमप्रपन्ने, विहितापराधानां खेद-प्रदर्शनं विधाय बलादधिकृतप्रान्तेषु दौलतीयाधिपत्येऽमुना पुनरसमर्पितेषु, शिवराजस्यामुष्मिन्नादेशातिक्रमणे शहाजीराजस्य प्रच्छन्नानुमतिरिति सम्प्रधार्य यवनाधिराजः शहाजीराजं भित्तौ संनिचित्य व्यापादयिष्यतीति प्रकाशमादेश-पत्रमप्रथयत् ।

श्रीमोहम्मद अदिलशाहाख्यस्यामुं दृढनिश्चयमवगम्य श्रीशीवाजीवीरो राजमाता श्रीजिजाबाईदेवी सकलराजमन्त्रिणश्च चिन्तासन्तानवितानैकतानमान-सास्सन्तः—'धर्मसंकटादस्माद् वयं कथं मुच्येमहि' इति निरन्तरमंत्रणां कर्त्तु-मुपाक्रमन्त । अन्ततोऽस्यां कोमलपरिस्थित्यां 'कण्टकेनैव कण्टकम् अपसारयेत् ।' इति श्रीरामदासीयतत्त्वमनुसृत्य दिल्लीपति श्रीशहाजहानयवनसम्राजः सविधे राजपुत्रमुरादबक्षद्वाराऽऽवेदनपत्रं प्रेषयित्वा शिववीरो मोगलवंशीयानां सेवा-स्वीकरणाविर्भावं व्याजतो व्यतानीत् । एवञ्च यवनाधिराजसकाशाद् विजापूर-राज्याध्यक्षसमीपे श्रीशहाजीराजविमोचनाय तीव्रनिर्देशः संप्रापितस्तेन । तथापि मोहम्मदशाहमेदिनीशः शहाजीराजं त्रिचतुराणि वर्षाणि दृढबन्धनागारे स्थापित-वानेव !! ईदृस्यास्तदानीन्तनीयपरिस्थित्याः परिचयं प्रदाय पुण्यश्लोक श्रीशिव-वीरनिवासेन पवित्रीकृतायां पुण्यनगर्यां प्रवेष्टुं वाचकजनान् वयं प्रार्थयामहे ।

ईशवीये दशमे शतके राष्ट्रकूटानां ताम्रपटे पुण्यनगर्यां नाम 'पूनकवाडी'ति समुपलभ्यते। श्रीमालोजीसंपादितभूमिभुक्त्वे ग्रामोऽसौ बभूव। १६०४ई. संवति श्रीशहाजीराजेन श्रीदादोजीकोंडदेवहस्तेनायं ग्रामो निवासितजनसंख्यया संवर्द्धितः। १६३७ सनपर्यन्तं भूमिभुक्त्वकार्यस्यायमेव ग्रामो मुख्यं स्थानमासीत्। एतस्मादेव स्थानान्महाराष्ट्रमहीमहेन्द्रः श्रीशिवराजो भारतसाम्राज्यसंस्थापनाया दीर्घोद्योगं विदधे। राजदुर्गग्रहणपर्यन्तं पुण्यनगरमेव भारतसाम्राज्यस्य राजधानी समवर्तत; तदनन्तरमपि च विशिष्टप्रसंगे विश्रान्तेर्वा राज्यकार्यभारगुप्तमन्त्रणाकरणस्य वा सुतरां सुविधाजनकं स्थानमवर्तिष्ट। १५७३ त्रिसप्तत्युत्तरपञ्चदशशतमिते शकाब्दे चैत्रमासीयप्रभातसमयस्य सुषमा कथं नु वर्ण्यताम्!! व्यलसदुषासि पञ्चवादनवेला। प्रादीप्यततरां तेजःपुञ्जशालिनः शुक्रस्य परितः पृथिव्यां सुप्रभा। मन्ये भारतसाम्राज्योदयसमये राष्ट्रदेवी सुबालेऽस्मिन्स्वराज्ये आत्मीयतया निवसन्ती वसन्तर्तुराजस्य सुप्रभातकालेऽसुष्मिञ्छुक्रतेजःपुंजशोभमानदिव्याम्बरंपरिधाना सौभाग्यालङ्काररूपपुण्यभूमिपुण्यतिलकसमशुक्रतारासमलङ्कृतसुन्दरललाटप्रान्ता रसिकप्रेक्षकजनमनो हरन्ती व्यराजततराम्।

यं सौन्दर्यरमणीयतमं प्रासादं प्रवेष्टुमनसो वयं स्मः खलु तस्मिन् पुण्यनगरस्थराजमहालयेऽस्मिन् प्रातःकालेऽपि समन्ततस्समुज्ज्वलप्रकाशश्चाकचक्यमवालोक्यत। द्वारपालमारभ्य राजन्यकुलतिलक श्रीवसुमतीवासवशिवाजिवीरपर्यन्तं सकलमानवा हरिकीर्त्तनकीर्त्तनीय मधुरनामघोषरससागरे निमग्ना अभूवन्। मध्ये मध्ये करतालाङ्कितमृदङ्गानां श्रवणमधुरमधुरो निस्वनस्समश्रूयत। तस्मिन्नेव च गायकानां मञ्जुलमञ्जुला ध्वनिमाला सम्मिलिताऽजायत। चैत्रशुक्लनवमीप्रत्यूषेऽपि तत्र नामकीर्तनोत्सवः प्रवर्तमान एवासीत्। [ क्रमशः ]

---

# विमर्शवेदिका

**ऋजुपाणिनीयम्** ( भारतधर्ममहामण्डलप्रकाशनम् )

**पाणिनीयप्रबोधः** ( पूर्वार्धः )

**शास्त्रिग्रन्थमालायाः दशमं कुसुमम्**

**पाणिनीयप्रबोधः** ( उत्तरार्धः )

**शास्त्रिग्रन्थमालायाः एकादशं कुसुमम्**

श्रीमद्भिः महामहाध्यापकैः महापण्डितैः दर्शनकेसरि श्रीगोपालशास्त्रिभिः विरचितमिदं ग्रन्थरत्नत्रयं सादरं समीक्ष्य सम्यक् सूक्ष्मदृशा परीक्ष्य च नितरां परितुष्टा वयम् । गहनगहने अतिविषमतमे संस्कृतव्याकरणकान्तारे प्रविष्टा इदानीन्तनाः सुकुमारमतयः छात्रा दिग्भ्रान्ताः प्रतिहतबुद्धयो नैराश्येन ततः परावर्तन्ते । फणिन इव फणीन्द्रावतारपाणिनेरतिमात्रं बिभेति विद्यार्थिवर्गः । सिद्धान्तकौमुद्यध्ययने बद्धादराणामपि अद्यतनानाम् अप्रबुद्धबुद्धीनां विद्यार्थिनां सिद्ध एव अन्तश्छात्रवृत्तेः । तत्वबोधिनी अपि तेषां सत्वभेदिनी एव भवति । बाला वा प्रौढापि वा मनोरमा न कदाचिदपि तेषां मनो रमयति प्रत्युत भ्रमयति बुद्धिम् । अलसान् मन्दमतीन् अधुनातनान् अधीतिनः भाष्यं भीषयति । वार्तिकम् आर्तिकं भवति । शेखरो भीकरो भासते । पाणिनये विधीयते प्रणामो दूरादेव । अरुचिमेव उत्पादयन्ति वररुचेर्वाचः । प्रदीयते च पतञ्जलिशास्त्राय तिलाञ्जलिः नवयुगीनछात्रैः । कात्यायनं विद्यार्थिहत्यायनमेव मन्यन्ते मत्या बाला वयसा प्रौढाः । वरं मरणं न कठिणं व्याकरणम् इति ततः परावृत्य सुलभं साहित्यं पठन्ति । काव्यनाटकादिवाङ्मयं न्यायवेदान्तादिशास्त्राणि च अभ्यस्यन्ति । अत्र खलु भारते भूयसा परिदृश्यन्ते विना व्याकरणज्ञानलवं तर्कचूडामणयः वेदान्तभास्कराः मीमांसाविद्वांसः साङ्ख्ये च सङ्ख्यावन्तः ।

बहूनामेव हि महामहोपाध्यायानां पश्चानिमेवपर्यन्तमपि भाषणं शास्त्रशुद्ध-पञ्चवाक्यविलिखनं वा दुश्शकमेव भवति । अत एव हि 'पण्डिता मौनं भजेयुः'। वस्तुतस्तु "अव्याकरणमधीतं भिन्नद्रोण्या तरङ्गिणीतरणम्" एव । परन्तु संपूर्ण-व्याकरणाध्ययनमपि समुद्रतरणमिव सामान्यैर्दुश्शकमेव । इमां च कठिनतामा-लोक्यैव स्वर्गीय पं. मदनमोहनमालवीयमहोदयः पण्डितपरिषदि कदाचिदब्रवीत् । तत्तु शास्त्रिवाक्येनैव समुपदर्शयामि । "श्री मालवीयोऽवदत् —

> " विकृतो बहुशो यस्मात् संस्कृतं कठिणायितम् ।
> भवद्भिः क्रियतां यत्नः सारल्ये व्याकृतेर्ध्रुवम् ॥
>
> अष्टाध्यायी च समाश्रिता पाणिनीया क्रमाद् भवेत् ।
> कण्ठस्थीकृत्य यां छात्रः स्वयं सूत्रार्थमुन्नयेत् ॥
>
> तद्रीत्यैव प्रयोगाणां स्याद्ग्रन्थः साधकोऽपरः ।
> येन व्याकरणज्ञाने सारल्यं स्याच्च लाघवम् ॥
>
> प्रवृत्ताःस्युर्यतः सर्वे संस्कृताध्ययने मुदा ।
> इत्याभाष्य पुनः प्राह मां संबोध्य स वै मुनिः ॥
>
> शास्त्रिन् भारोऽयमासक्तस्त्वय्येवेत्यवधार्यताम् ।
> ओमित्युक्त्वा तदाज्ञां तां समादृत्याहमुक्तवान् ।
> भगवन् ! अयमादेशः सिद्ध इत्यवगम्यताम् ॥ "

एवं पं. मदनमोहनमालवीयस्य इच्छानुसारेण टीकोपटीका व्याख्योपव्याख्योपोप-व्याख्यादिभिर्दुरूहं महासागरमिव अपारमतिविस्तृतं च द्वादशवर्षनिरन्तराध्ययनैक-समधिगम्यम् पाणिनीयशास्त्रं सुलभं कतिपयमासमात्राध्ययनबोध्यं सर्वसामान्य-बुद्धिभिरपि छात्रैरल्पायासेनैव समधिगम्यं च विधातुं श्रीदर्शनकेसरि गोपालशास्त्रिभिः महानेव प्रयत्नो विहितः । अत्र छात्राणां सुखबोधाय विविधप्रयोगसंसाधनक्रमः धातूनां चोपसर्गसंयोगेन भिन्नभिन्नार्थसूचना सन्धी-नामनुगमाय निष्कर्षप्रदानम् छात्राणां स्वतः सूत्रार्थकरणाय मार्गदर्शनं च

सम्यगेव हि कृतमास्ते । व्याकरणशास्त्रे प्रविविक्षूणां छात्राणां मन्दमतीनामपि मनागपि मनीषाक्लेशो माऽभूदिति महता प्रयासेन महामहाध्यापकैः पाणिनीय-सूत्रोदधिं निर्मथ्य त्रीणीमानि ग्रन्थरत्नानि समुन्नीतानि । एतेषामध्ययनेन नूनं जडमतिरपि छात्रः द्वित्रमासावधौ पर्याप्तं व्याकरणज्ञानमासादयितुं पञ्चषण्मा-भ्यन्तर एव च स्वतः पाणिनीयसकलसूत्रार्थकरणसामर्थ्यमपि किञ्चिदिवाधिगन्तुमलं भवति । पाणिनेः ३९९६ सूत्रेषु केवलं ११८७ सूत्राण्येव समुद्धृत्य सुसंगतरीत्या संयोज्य क्रमबद्धः अतिसंक्षिप्तः संग्रहः महता कौशलेन विहितोऽत्र वरीवर्ति । अल्पायासेनैव व्याकरणज्ञानमधिजिगमिषूणां जिज्ञासूनामतीवोप-युक्तानीमानि त्रीण्यपि पुस्तकानि । एभिश्च ग्रन्थैः अतीवोपकृतः संस्कृतसंसारः छात्रसमाजश्च । तदर्थं शास्त्रिमहोदयेभ्यः सहस्रशः धन्यवादान् वितरामः । एतद्ग्रन्थानामुपयोगः इयानेवेति वक्तुमेव न शक्यते । लेखपरिणाहभिया अत्रैव विरिरंसामः । सर्वथा सर्वैरप्यवश्यमेव संग्राह्यमिदं पुस्तकत्रयमिति । प्राप्तिस्थानमतीताङ्क एव निदर्शितम् ।

---

# विनोदवाटिका

कस्यचिद् सुप्रसिद्धगायकस्य संगीतश्रवणानंतरं विदूषकः रोदितुमुपा-क्रमत । सर्वेऽप्यागत्य कारणमपृच्छन् । तदा सोऽवदत्– ममैकस्य मृतस्य मेषस्य स्मरणमभवत् । तस्यापि ध्वनिः एतद्गायकस्यैव आसीत् ।

× × × ×

कश्चिद्गायकः—द्वित्रगीतानि संगीय विदूषकमपृच्छत् "किं पुनरन्यां गीतिकां गायामि ?"

विदूषकः—यथेच्छं गीयताम् । मयातु कर्णशष्कुल्यन्तरे तूलं पिण्डीकृत्य निवेशितमास्ते ।

---

# सत्याग्रहकथा

## अथ चतुर्थोऽध्यायः

ले०—वेदान्तरत्न श्री ओड्लमने पाण्डुरङ्गशास्त्रिणः
अंकोला–कारवार

**जीवानन्द उवाच–**

वृत्तान्तोऽयं मृशं श्राव्यः शुश्रूषां प्रेरयत्यहो ।
ततः किमभवत्तात ! कथ्यतां कृपया हि मे ॥ १ ॥

**काश्यप उवाच–**

आयर्विन इतो गत्वा लण्डनं सनृपैः समम् ।
अमन्त्रयन्मन्त्रिभिस्ते चक्रुः शून्याकृर्तिं सभाम्[1] ॥ २ ॥

तत्सभार्थं समाहूतास्तत्रत्यैरधिकारिभिः ।
भारतीया गान्धिमुख्या अग्रण्योऽपीतरे तथा ॥ ३ ॥

अगमन् गान्धिमुख्याश्च तन्निदेशानुसारतः ।
तथैवास्पृश्यवर्गस्य श्मश्रुलानां तथैव च ॥ ४ ॥

अग्रण्यौ जग्मतुस्तत्र तत्रत्यैरधिकारिभिः ।
वावदूकैर्महाधूर्तैः सत्कृताः सर्व एव ते ॥ ५ ॥

श्मश्रुलाग्राणिना साकं तत्रस्थैरधिकारिभिः ।
मन्त्रयित्वा च रहसि भेदोपायपरोक्तिभिः ॥ ६ ॥

ततः शून्याकृतिं गोष्ठीं विविशुः सर्व एव ते ।
स्वस्वस्थानेषु सर्वेषु चोपविष्टेषु सत्वरम् ॥ ७ ॥

भेदोपायप्रवीणैस्तैः पाश्चात्यैरधिकारिभिः ।
सभाकार्यमुपक्रान्तं महताडम्बरेण च ॥ ८ ॥

---

१. गोलमेजपरिषद् ।

उपन्यासे भारतीयराज्यतन्त्रं प्रकृत्य च ।
श्रीमान् गान्धी राज्यतन्त्रमस्मत्तन्त्रं विधीयताम् ॥ ९ ॥
इति सुस्पष्टमवदद्धितैषी भारतस्य च ।
तदैकान्ते मन्त्रिताश्च लुब्धैः साम्राज्यवादिभिः ॥ १० ॥
श्मश्रुलास्तु 'प्रदातव्यान्यधिकारपदानि च ।
अधिकान्येव स्वीयेभ्यः' इति ते प्रत्यवस्थिताः ॥ ११ ॥
तथैव च तदा तत्र चण्डालाः प्रत्यवस्थिताः ।
तदाब्रवीन्मेकूडोनाल्डः सभाध्यक्षो विचक्षणः ॥ १२ ॥
'भारते भारतीयेभ्यो यवनाः कूर्चशालिनः ।
सन्ति ते स्तोकसङ्ख्याकास्तद्रक्षावश्यकी यतः ॥ १३ ॥
ततोऽधिकाधिकरणापेक्षा तेषां च यौक्तिकी ।
समाधानं विना तेषां स्वराज्यं वो न दीयते ॥ १४ ॥
इति तां समितिं सोऽपि विराममनयत्तदा ।
आपातरमणीयं तन्मेकूडोनाल्डेन भाषितम् ॥ १५ ॥
अल्पत्वं वा बहुत्वं वा सङ्ख्यानिष्ठं च रक्षणे ।
प्रयोजकं नेति कथं न ज्ञेयं कृतिमानिभिः ॥ १६ ॥
यथैकोऽपि बली सिंहो यतो हन्ति बहून् रुरून् ।
यथा वैको महामत्स्यो यतोऽत्ति शफरान् बहून् ॥ १७ ॥
यथा वैको महाभेको बहून् दर्दुरशावकान् ।
यथा वैको महामल्लः परानाक्रमतेऽबलान् ॥ १८ ॥
प्रबलो दुर्बलान् हन्तीत्येष न्यायः सनातनः ।
रूढो न ज्ञेय आबालं कथं चतुरमानिभिः ॥ १९ ॥
एवं संरम्भादराभ्यां महद्भ्यां रचिता च सा ।
शून्याकारा च परिषत्प्राकारफलदाभवत्[३] ॥ २० ॥

---

२. गोलमेजपरिषद् । ३. शून्यफलदा ।

गान्धौ तदा प्रस्थिते च सभामुद्दिश्य 'लण्डनम्' ।
मध्यवर्त्यधिकारी च पुरायर्विन नामकः ॥ २१ ॥

गान्धिना यत् समं साम 'शीधुपाननिरोधनम् ।
अभारतीयवस्तूनां विक्रयप्रतिबन्धनम् ॥ २२ ॥

कृषीवलेभ्यो दीनेभ्यो विचारेण विना न हि ।
करग्रहणमि'त्यादि चक्रे क्षोभनिवृत्तये ॥ २३ ॥

समुल्लङ्घ्य च तत्सर्वमितरे चाधिकारिणः ।
विलिंग्टनाभिधानोऽसौ तत्स्थानं चागतोऽधुना ॥ २४ ॥

प्रान्ताधिपतयः सर्वे तन्निदेशानुवर्तिनः ।
कृषीवलेभ्यो निःस्वेभ्योप्यगृण्हंश्च हठाद्बलिम् ॥ २५ ॥

तथैव चक्रिरे तत्तन्निरोधकनिरोधनम् ।
कृषीवलानां शरणं श्रीप्रयागनिवासिनम् ॥ २६ ॥

श्रीजवाहिरलालाख्यं बध्वा कारागृहेऽक्षिपन् ।
अत्रान्तरे 'लण्डन'तः प्रस्थितो निजनीवृतम् ॥ २७ ॥

मुम्बापुरीं तोरणैश्च पताकाभिरलङ्कृताम् ।
श्रियामरावतीतुल्यां जनसम्मर्दसङ्कुलाम् ॥ २८ ॥

सूर्यमण्डलमेद्यग्रहर्म्यप्रासादमण्डिताम् ।
अनेकाभिर्विचित्राभिर्विपणीभिरलङ्कृताम् ॥ २९ ॥

श्रीमान् गान्धी समायातोऽत्राग्रणीभिश्च सत्कृतः ।
तैः समावेदितोऽत्रत्यवृत्तान्तो निखिलस्तदा ॥ ३० ॥

मध्यवर्त्यधिपादीनां निशम्योत्सामवर्तनम् ।
स चाति खिन्नहृदयो वैद्युतेन च तन्तुना ॥ ३१ ॥

पिपालयिषया साम मध्यवर्त्यधिपं द्रुतम् ।
व्यजिज्ञपत 'पूर्वसाम परिपाल्यं यथायथम् ॥ ३२ ॥

यद्यत्र वो विवक्षा चेद्युष्माभिस्तर्हि सत्वरम् ।
आवेदनीयो गृह्णामि युष्माकं दर्शनं' त्विति ॥ ३३ ॥

ततो विज्ञापनां तस्य न्यक्कृत्यादूरदर्शिना ।
मध्यवर्त्यधिपेनैव तदादेशानुवर्तिभिः ॥ ३४ ॥

प्रान्ताधिपैश्च सकलैः प्रजाविद्रोहतत्परैः ।
'या राष्ट्रीयसभा सापि तस्या उपसभा अपि ॥ ३५ ॥

विधातव्या न हि तथा तासां गेहानि तद्धनम् ।
तद्धूमशकटं वै तत्सत्ताकं मुद्रणालियः ॥ ३६ ॥

तत्पुस्तकं च यच्चान्यत् तत्सर्वं राजतन्त्रकम् ।
तत्प्रवृत्तिप्रवृत्तेश्च प्रकाशः प्रतिषिध्यते ॥ ३७ ॥

तथैव क्वापि समितौ भाषणं प्रतिषिध्यते ।
ग्रामे नगर्यां सञ्चारो मुहूर्तात्परतो निशि ॥ ३८ ॥

वङ्गे भानूदयाद्भानोरस्तावधिगृहाद्बहिः ।
न यातव्यमिति द्वारि स्थापिता यामिकाः क्वचित् ॥ ३९ ॥

निषिध्यते तथैकत्र पञ्चाधिकजनव्रजः ।
वन्दीकृतानां सन्देशो मुद्र्यते वृत्तपत्रके ॥ ४० ॥

यस्मिन्मुद्रणयन्त्रे च राजायत्तं च तद्भवेत् ।
बलिर्न देय इति ये जनानुपदिशन्ति ते ॥ ४१ ॥

बन्धनार्हास्तथा दण्ड्या भवेयुर्नात्र संशयः ।
न कुर्यान्निर्मितिं नूनं पटानां तन्तूनां तथा' ॥ ४२ ॥

इत्याद्या 'ऑर्डिनन्सा'ख्या नियमाः सम्प्रवर्तिताः ।
ततो जनौघः प्रक्षुब्धो झञ्झावातेरितो यथा ॥ ४३ ॥

( क्रमशः )

( म. वा. पञ्चदशवर्षीयाङ्केषु ग्रन्थस्यास्याध्यायत्रयं प्रकाशितम् )

# पतिव्रता मङ्गला

( ले०—म. पं. वासुदेवाचार्य बागेवाडीकरशास्त्री, सोलापूर )

" दिष्ट्या वर्धतेतरां युवराजो रूपवद्वधूलाभेन । यत्सत्यं कोटाधिपतेः कनीयसी कन्या रूपवत्यन्वर्था खलु । परं परां लावण्यवतीं तस्या ज्यायसीं भगिनीं यः कोऽपि न पश्येत् तावदेव रूपवतीं सुरूपवतीं मन्येत " । इति कश्चिद् वयस्यो रहसि नर्मगोष्ठीप्रसङ्गतः सम्पत्स्यमानविवाहमङ्गलं बुन्देलानां युवराजं सपरिहासमुवाच । ततो युवराजोऽब्रवीत् । किं सत्यमेव कोटाधिपतेर्ज्यायसी दुहिता जयशीलमीराधिपस्य भार्या मङ्गला लावण्यातिशायिनीदृशीति । ततोऽपरःप्राह— " निजलावण्येन तिरस्कृतकामजाया तत्रभवती लावण्यवती स्वभगिन्या विवाहमहोत्सवार्थमत्रैव सम्प्राप्ता राजमन्दिरमेवाधिवसति । प्रकोष्ठस्थस्य पारिहार्यस्य दर्शने किम् प्रयोजनमादर्शेन । तत्प्रत्यक्षीकरोतु युवराजः " इति । " अथ सम्प्रति साऽस्मत्सम्बन्धिनी । तस्या दर्शने कः प्रत्यवाय " इति ब्रुवन्तं तं सोऽब्रूत— " भवान् भावी बुन्देलानां पतिः स्वायत्तां सर्वां सम्पदमुपभोक्तुं निःसंशयं प्रभवति " इति ।

अनेन परिहासेनोन्मार्गगामी राजपुत्र उन्मना बभूव । कोटाधिपस्य कनीयस्या कन्यायाः परिणयोऽचिरादेवानेन राजपुत्रेण सह भविता । स च निजदुहितुर्विवाहार्थमत्रैव वरमन्दिरं सपरिवारः समुपस्थितः । अन्ये च बहवो राजकुलसम्बन्धिनस्तदर्थमेव समुपस्थास्यमानो आसन् । परिजना उद्वाहसम्भारव्याप्रृताः । राजपुत्रस्तु कामसिंहः श्यालिकाकामपरायणः निशायां शयनागारं प्रविष्टो राजकुमारः स्वदासीमेकां नितान्तं विश्वासस्थानमाहूय तस्यै स्वमभिलाषमकथयत् । " यथाज्ञापयति युवराजः " इत्युक्त्वा ततो निर्गत्य स. जयशीलमीराधिपस्य राज्ञीं प्रावेशयत् । पाटलं दुकूलं वासो वसानां परिमिताभरणा-

मनुपमलावण्यवतीं नभोऽवतीर्णां सुरसुन्दरीमिव लक्ष्यमाणां रत्नखचितया कृपाणाधिष्ठितया मेखलया परिणद्धमध्यां तां प्रविशन्तीं विलोक्य कामी कामसिंहोऽधिकतरं सकामोऽभवत् । असाधारणया मुखश्रिया विराजन्ती पुरः सरन्ती सा निर्व्याजेन सौजन्येन प्रेम्णा च भाविनमावुत्तं सस्मितं व्याहरत् । "आज्ञापयत्वावुत्तः किमर्थं स्मरणीयतां नीतोऽयं जनः" इति । अनेन प्रश्नेनोद्दीपितः सः प्रत्यब्रवीत्—"भवादृश्यास्त्रिभुवनसुन्दर्या दर्शनेनात्मानमनुग्राहयितुम्" इति । सम्प्रति भवन्तो नः सम्बधिनः संवृत्ताः । सम्बन्धिनां भवतां प्रणयं विहन्तुं नार्हामः । इत्युक्तवतीं तां "आसनपरिग्रहं करोतु भवती" इत्यूचिवान् स कामान्धो मृणालकोमलं तस्याः वामलोचनायाः वामपाणिं स्वपाणिनाऽगृह्णात् । सपद्येव कृपाणमाकृष्य तं कृपाणं दुर्मेधसं तस्मिन्नेव करे कठोरं प्राहरत् । अभाषत च—"कामान्ध, नराधम, पतिव्रतायाः पवित्रं देहानलं कामप्रेरितः स्पृशंस्त्वं कालप्रेरितः शलभ इव सकुलोऽचिरादेव भस्मसाद् भविष्यसि । वीरसिंहो भर्त्ता मे नेदं भार्याधर्षणं मर्षयिष्यते । मङ्गलमयोऽयं प्रसङ्गस्त्वयाऽमङ्गलेनामङ्गलतां नीतः" इति । एवमुक्त्वा क्रोधाध्मातमानसा कोपारुणलोचना विप्रकृता भुजगीव निःश्वसती तस्मान्मन्दिरान्निर्ययौ । निर्गत्य च विश्वासभाजनं स्वदूतं स्वभर्त्रे त्वरया विसृष्टवती वाचिकं च सन्दिष्टवती—"नाथ, दुष्टाशयेन बुन्देलकुलपांसुलेन कुमारेण कामसिंहेन कामान्धेन सता सती रहस्यहं दुर्वासनया संस्पृष्टा । तत्क्षणमेव क्रोधाविष्टया मया सतीस्पर्शाभिलाषुकः स एव करः स्वेन कृपाणेन च्छिन्नः । कुलाङ्गनादूषकः स दुर्मतिर्यावत् तवायुधेन निधनं नोपेयात् तावदहं नोदकस्य बिन्दुमपि पातुं व्यवस्येयम्" इति ।

एवं सन्दिश्यानुपदमेव स्वयमपि स्वां राजधानीं प्रतस्थे । प्रस्थितां निशम्य प्रथममेवानेन दैवदुर्विलसेन राजपुत्रस्य दुराचरणेन चिन्तातुराः प्रधानामात्यास्तामनुनेतुं प्रायतन्त । परं न कोऽपि तां दुर्निग्रहां निग्रहीतुं

शशाक । "त्वां कामयमानं तं कामिनं सकुलमुत्सादयितुं ससैन्यः प्रस्थितोऽहम्" । पत्युः सन्दिष्टं पथि निशम्य किञ्चित्समाहितमानसा सा कञ्चिदध्वानं गत्वा स्वभर्तारमेव दृष्टवती । पूर्वं विदितवृत्तान्तोऽपि तस्या भर्ता तन्मुखाद् भूयः श्रुतनिखिलवृत्तस्तां समाश्वास्य कथञ्चिदापृच्छ्य निजपत्न्या दूषयितुर्वधाय दुर्धर्षेण रणाभिनिवेशिना महता बलेन परिवृतो बुन्देलानभिययौ । अभियोक्तारं भार्याधर्षणेन प्रकुपितं विग्रहाभिलाषिणं तं रणजित्सिंहं मन्त्रकुशालो मन्त्री मार्गे समुपस्थायोपसान्त्वयन्नाह—"ननु वीर, रणोत्साहं विजहाहि । शान्त एधि । संबन्धिनः कुलं मानीनशः । उदायुधो मा भूः" इति । कथञ्चिदप्यननुनेयः स तमविगणयन् पुरस्तात् सम्प्रस्थितः ।

अन्ततस्तयोः सेनयोस्तुमुलं जन्यं सञ्जज्ञे । तस्मिन् सङ्गरे महाघोरे बुन्देलानां महत् सेनाबलं प्रनष्टम् । वृद्धो बुन्देलाधिपो हतः । यदा युध्यमानो राजकुमारः कामसिंहो हृदयनिविष्टां परदारवासनां दारयितुमिव हृदयप्रविष्टेन रणजित्सिंहस्य खड्गेन प्रहृतो मृत्युना वव्रे तदैव जयशीलसेनाशान्तिं प्राप ।

अथोपशान्तवैरो रणविरतो रणजित्सिंहः स्वश्यालिकां द्रष्टुं राजकुलं प्रविष्टः । प्रविष्टमात्र एव सोऽनुमरणोद्यतामसंपन्नविवाहकौतुकां तां विलोकयामास । कस्याप्युपदेशेन करुणकरुणेनाक्रोशेन वा साऽनुमरणव्यवसायात् कथञ्चिदपि न विरराम । उपरतस्य वाग्दत्तस्य पत्युः प्रज्वलितां चितां सर्वेषां वीक्षमाणानां सस्मितं सोल्हासं श्वशुरगृहमिव प्रविवेश ।

---

विदूषकः—जाते कं वा परिणेतुम् अभिलषसि ?
सुताः—प्रामाणिकं वाक्कीलम्
विदूषकः—हुं मूढे, कन्यया एक एव वरः वरणीयः

---

# समस्यापूर्तयः ।

धत्ते कलङ्किनमहो शिरसा शिवोऽपि
चन्द्रं यथा परहितानुरतं तथैव ॥
तं जातिसङ्करकलङ्कितमार्यपुत्रम्
श्रीमज्जवाहरममुं भुवि हिन्दुमाता ॥ १ ॥

स्वार्थप्रकाशकरमात्महितं यथेन्दुम्
धत्ते कलङ्किनमहो शिरसा शिवोऽपि ॥
कांग्रेसभक्तजनता स्वहितानुरक्तम्
सर्वाधिकारसुपदे स्वजनं तथैव ॥ २ ॥

**श्रीतर्कतीर्थ नीलकण्ठशिवाचार्यः,**
**हूलीबृहन्मठाध्यक्षः**

कान्तं प्रशान्तगुणवन्तमहीनवृत्तं
तेजस्विमण्डलगतं हरिपादसक्तम् ॥
दुर्वर्णमप्यभिजनो बहुमानयेत
धत्ते कलङ्किनमहो शिरसा शिवोऽपि ॥ ३ ॥

सेव्यो गणैर्महितभूतिविराजमानो
दुर्गाश्रयो विशदगोत्रगतोऽपि धीमान् ॥
निन्देन्न दुर्गतमसारधिया कदाऽपि
धत्ते कलङ्किनमहो शिरसा शिवोऽपि ॥ ४ ॥

**श्रीसोदेमठीयः अलेवूरु सीतारामाचार्यः**
**वेदान्तव्याकरणशिरोमणिः विद्वान् संस्कृतमहापाठशालापण्डितः**
**उडिपि ( दक्षिणकन्नड )**

लोके तृणीकृतजनं करुणार्द्रचित्तः
धीर स एव सततं पतितञ्च धत्ते ॥

विस्मृत्य तस्य लघुतां सहसा किलेत्थम्
धत्ते कलङ्किनमहो शिरसा शिवोऽपि ॥ ५ ॥

पं. बादरायणकाश्यपः आत्मकूर

आस्था नृणां बलवती गदपीडितानां
वस्तुन्यभीष्टगुणभाजिनि दूषितेऽपि ॥
शैत्यं ह्यपेक्ष्य शशिनं विषदग्धदेहो
धत्ते कलङ्किनमहो शिरसा शिवोऽपि ॥ ६ ॥

**डॉ. भागवत नारायणशर्मा**, एम्. एस्. सी., पी. एच्. डी.
विज्ञानविभाग प्राध्यापकः कर्णाटक कॉलेज, **धारवाड**

न्यूनः कलाभिरिति धिङ् न चकार चन्द्रम्
तापापनोदनपटुः स्वकरैः सुधांशुः ॥
मत्वेवमाशुगुणशोधनतत्परोऽमुं
धत्ते कलङ्किनमहो शिरसा शिवोऽपि ॥ ७ ॥

शान्तिप्रधानपुरुषो जगति प्रपूज्यः
सत्यं विधातुमिदमाशुवचो महात्मा ॥
दक्षेण शप्तमपि चन्द्रमसं सुशान्तम्
धत्ते कलङ्किनमहो शिरसा शिवोऽपि ॥ ८ ॥

**पं. बाळाचार्यः मंगळवेढे हुबळी**

धत्ते रमापतिरहो शयनेऽहि राजं
धत्ते शिवाऽपि भुवि वाहनमाशु सिंहम् ॥
ईशा निषिद्धमपि शुद्धिमलं नयन्ति
धत्ते कलङ्किनमहो शिरसा शिवोऽपि ॥ ९ ॥

**पं. नन्दलालशर्मा तिवारी बबायी** ( राज्यस्थान )

यः संमतो बहुगुणैर्महतां तदीयो
दोषोऽल्पकोऽपि विदितः समुपेक्षणीयः ॥
आनन्दनं द्विजपतिं सकलं सुधांशुं
धत्ते कलङ्किनमहो शिरसा शिवोऽपि ॥ १० ॥

**श्रीशिवनाथशास्त्री शिन्त्रे, लोणावळ**

वृद्धिक्षयादिविकृतिव्यथितं दयालुः
धत्ते कलङ्किनमहो शिरसा शिवोऽपि ॥
दृष्टा च तेन रजनी हिमरश्मि सङ्गात्
हन्त प्रभोर्हि महिमा सुतरामगम्यः ॥ ११ ॥

साधुर्हि दीनदलितानुकम्पमानः
तद्दोषमप्युपनियम्य गुणांस्तनोति ॥
संत्यज्य वारिधिभवां नवरत्नराशिं
धत्ते कलङ्किनमहो शिरसा शिवोऽपि ॥ १२ ॥

**पं. आत्माराव शामराव दिवगी,**
**निवृत्तपोस्टमास्तर, हुबळ्ळी**

प्रायोऽपकारिमनुजं भजते च लक्ष्मीः
पापः प्रसन्नहृदयो लभते सुखानि ॥
चित्रं न तद्यदि खलो बहुमानपात्रम्
धत्ते कलङ्किनमहो शिरसा शिवोऽपि ॥ १३ ॥

**शा. गो. रावळे बी. ए.**
**नागपूरम्**

यः कालिदासभवभूतिकविप्रबन्धे
देवादिदेव इति कीर्तितकीर्तिपुञ्जः ॥

सोयं पुरन्दरविधिप्रमुखैः प्रगीतः
धत्ते कलङ्किनमहो शिरसा शिवोऽपि ॥ १४ ॥

**के. आर. श्रीपतितन्त्री**, साहित्यशिरोमणि
एस. एम्. एस. पी. संस्कृतपाठशाला **उडिपी**

उन्मत्तमप्यतिरुषा परुषाक्षरैश्च
निर्भर्त्सयन्तमपि मूढमतिं स्वशिष्यम् ॥
क्षाम्यन्ति हन्त गुरवः कृपया महान्तः
धत्ते कलङ्किनमहो शिरसा शिवोऽपि ॥ १५ ॥

**साहित्यरत्न गलगली रामाचार्याणाम्**

पत्राणि नैव मसृणानि, नचोपरिष्ठात्
चित्राणि, न प्रकटनं समये, न वार्ताः ॥
**वाणी** तथापि **मधुरा**ऽद्रियते सुधीभिः
धत्ते कलङ्किनमहो शिरसा शिवोऽपि ॥ १६ ॥

**सम्पादकस्य**

---

# लोकभ्रमः ।

एकस्मिन् दिने सुन्दरता कुरूपता च मिलित्वा समुद्रतीरं प्रति स्नानार्थं अगच्छताम् । तत्र तीरे स्वस्वधौतवस्त्राणि निधाय उभे अपि सलिलमवतीर्णे । तत्र समुद्रनीरे निमज्जनोन्मज्जनोत्पलवनादिभिः स्वच्छन्दं सानन्दं जलक्रीडामकुरुताम् । ततः स्नानक्रियां समाप्य कुरूपता प्रथमत उत्थिता । तीरमागत्य सा अनवधानेन सुन्दरतायाः वस्त्राणि परिधाय देशांतर-मगच्छत् । ततः सुन्दरता जलविहारानन्तरं तीरमागता । तत्र स्वस्य वस्त्राणि न आसन् । तदा तत्रस्थानि कुरूपतायाः एव वस्त्राणि परिधाय सापि जनपदं गता । तद्दिनादारभ्य मृत्पिण्डबुद्धिः लोकः वेषानुसारेण सुरूपतामेव कुरूपतां कुरूपतामेव च सुरूपतामाकलयति । ( ले.—खलील गिब्रान ).

---

# कलहव्यसनम्

एकस्मिन् ग्रामे द्वौ सहोदरौ आस्ताम् । तयोः पितुः मरणानन्तरं कनिष्ठः ज्येष्ठं प्रति अवदत्—"भ्रातः, आवयोः पैतृकधनस्य विभागः भवतु" इति । तदा

ज्येष्ठः किञ्चिदिव विषण्णः अवदत्—सहोदर, कुतो वा इदानीं विभागः ? सर्वमपि द्रव्याधिकारम् आर्थिकविनिमयादिव्यवहारं च त्वमेव कुरु । मम तु द्रव्यलोभः अधिकाराशा वा नास्ति"

क०—नहि नहि विभाग एव भवतु । साधु वर्तते तव विचारः । मयैव सर्वमपि महता श्रमेण कर्तव्यम् । त्वया तु स्वस्थमुपवेष्टव्यं महाराजवत् । यथेष्टमशितव्यम् । स्वच्छन्दं वर्तितव्यम् । मया पुनः व्यवहारस्य सर्वोऽपि क्लेशः अनुभोक्तव्यः । कियान् स्वार्थः ? मास्तु एतत् । विभाग एव भवतु ।

ज्ये०—तर्हि त्वमेव स्वस्थमुपविश । अहमेव सर्वं कलयामि । त्वं तु केवलं आहारनिद्रा........

क०—केवलम् आहारनिद्राभयादिकमेव किं मम कर्तव्यम् ? किमहं पशुः ? बहवः दृष्टाः ईदृक्षाः हितबन्धवः मया । मां क्वचिदपि कोणे तूष्णीम् उपवेशयित्वा सर्वमपि पैत्रकं धनं गिलङ्कर्तुं तव इदं साहसं परिदृश्यते। भ्रातुः गलङ्कर्तनाय सम्यगेव उपायः आविष्कृतः । नूनं गोमुखव्याघ्र एवासि त्वम् । तव सहवास एव मास्तु मम । दूरादेव नमामि । देहि मम पूर्णभागम् ।

तदा कनिष्ठस्य कठिनवचनैः मर्माहतः ज्येष्ठभ्राता अवदत्—

"यथा तुभ्यं रोचते तथैव भवतु" इति कथयित्वा सर्वमपि धनं द्वेधा व्यभजत् । अन्ततः एकं प्राचीनं पीताम्बरं विभजनीयमासीत् । ततः ज्येष्ठः अवदत्— "अस्य विभागः मास्तु । अहमेव एतत्पीताम्बरं गृण्हामि" इति ।

क०—साधु भ्रातः साधु । ईदृशस्वार्थसाधूनां धूर्तवृत्तिः मम पुरः न चलति । तस्यापि विभाग एव भवेत् ।

ज्ये०—अरे, नाहमेतत् ज्येष्ठ इति गृण्हामि, किन्तु तन्मूल्यपरिमितं धनं तुभ्यं दत्वा ततो ग्रहीष्यामि ।

क०—नहि नहि मा दर्शय ईदृशम् औदार्यम् । परमपुरातनम् अल्पमूल्यम् इदं पीताम्बरं कतिपयकाकिणीः दत्वा ग्रहीतुमिच्छसि किम्? नाहं मूर्खः मत्तो वा । न एवं विधैः मधुमयैः वाक्यैः मम वञ्चना सुलभसाध्या । अत्र विचार एव मास्तु । प्रथमतो विभज्यतामिदं पीताम्बरम् ।

ज्ये०—तर्हि भवानेव अस्य मूल्यं दत्वा गृहाण ।

क०—साधु ज्येष्ठभ्रातः साधु । जगति किं कोपि मनुष्यः पितुः पदार्थं रूप्यकान् दत्वा क्रीणाति पुत्रः । अहो धनलोभिना त्वया विभागक्षण एव पैत्रकपदार्थानां विक्रयः प्रारब्धः । धन्यः आवयोः पिता यस्य ज्येष्ठपुत्रः सर्वस्वविक्रयाय सन्नद्धः । धनं दत्वा गृहीतव्यं चेत् पुराणतमं जीर्णं शतच्छिद्रमुद्रितम् इदं पीताम्बरं कुतो वा ग्राह्यम् । किं पत्तने देशे आपणा सर्वे प्रणष्टाः? महानुभावोऽसि । अलं तव पाण्डित्येन । सत्वरं विच्छिद्यतां पीताम्बरमिदम् ।

ज्ये०—अये मास्तु धनम् । तथैव त्वमेव गृहाण इदं पीताम्बरम् नाहम् एकां पैकाम् अपि तदर्थम् इच्छामि ।

इति उक्त्वा तस्य हस्ते पीताम्बरं प्रायच्छत् । तद् गृहीत्वा कनिष्ठः किञ्चिदिव विचार्य तत्पीताम्बरं प्रतियच्छन् अवोचत्—

क०—बन्धुमहाशय, विलक्षणा तव बुद्धिः । तव सर्वप्रतिभाबन्धुघातपातविचारेषु एव व्ययीभवति नूनम् । ज्ञातः ते अभिप्रायः । इदम् एकं पुराणपीताम्बरं दत्वा आत्मनः उदारदृष्टिं बन्धुप्रेमाणं महत्वं च लोके प्रदर्शयित्वा मम तु क्षुद्रबुद्धितां कृपणताम् अपकीर्तिं च जगति ख्यापयितुं त्वया इयं युक्तिः कृता । मृत्पिडबुद्धिः अहम् आदौ तव इदं बन्धुघातकमुपायं न अविदिषम् । इदानीं च दैववशात् सर्वमपि कापट्यं ज्ञातुमलं भवामि । अलमलम् ईदृशैः कुचोद्यैः । तीव्रमिदानीमत्रैव अस्मिन्नेव क्षणे पीताम्बरं द्वेधा विच्छिन्धि । नो चेत्...............

तदा ज्येष्ठः निरुपायः भूत्वा किमपि अभाषमाणः तूष्णीं पीताम्बरम् अमूल्यं विच्छेत्तुं प्रवृत्तः । तदा कनिष्ठः क्रोधतप्तः उच्चैराक्रोश, अरे मुग्धभ्रातः इदानीमपि किमपि किञ्चिदपि रोषं द्वेषं परुषाक्षरं वा उच्चर । विना कलहं कीदृशो विभागः ।

---

समाप्तः पाठः । नादिता घंटा । प्रचलितः शिक्षकः । तदा कौचिद् उभौ बालकौ मुष्टीमुष्टिकलहं कर्तुं प्रवृत्तौ । तदा शिक्षकः तत्समीपं गत्वा किमर्थं कलह इत्यपृच्छत् । तदा एक आह— "आचार्य अद्य युष्माकं पाठे "ज्ञातं किं ज्ञातं किं" इति शब्दानां अष्टोत्तरशतम् उच्चारितम् । मया लक्ष-पूर्वकं सावधानमनसा परिगणितम् । परमयं वदति केवलं शतकृत्व एव युष्माभिः 'ज्ञातं किं' इति शब्दोच्चारणं कृतमिति । मिथ्यावादी अयं दण्डनीय इति ।

× × ×

कस्यचित् प्रवक्तुः भीकरं भाषणं द्विघण्टाकालं यावत् प्रचलितं सर्वेऽपि जना उत्थाय स्वस्वगृहं गताः। एकः परं उपाविशत्। भाषणकारः सोत्साहं जगाद– "एकोऽपि विद्यते हन्त भाषणं श्रोतुमुत्सुकः" उपविष्टः अब्रवीत– नहि नहि। नाहं तत्र भाषणं श्रोतुमुत्सुकः। परं तव भाषणानन्तरं मम भाषणमस्ति। अतोऽहमुपविष्टः।

× × ×

कृषिशालायां शिक्षकः—अयि छात्राः गोमयः किमर्थमावश्यकः?

एकः छात्रः—गृहाङ्गणसंशोधनाय।

अन्यः—बहिर्भित्तिविलेपनाय।

अपरः—सम्यक् संशोष्य इन्धनरूपेण उपयोगाय।

इतरः—वस्तुतस्तु दीर्धभाषणव्यसनिनां गौरवप्रदर्शनाय।

× × ×

कश्चित् जनप्रियमन्त्रीश्वरः कर्षकाणां सभायां भाषमाणः अहमपि एकः कर्षकः इति भृतिजीविनां सभायामहमपि एकः भृत्युपजीवीति कर्मचारि-सभायां अहमप्येकः कर्मचारीति च वदन् जनैः महत् करताडनं कारयति स्म। एकदा विधवासमाजे भाषमाणः अभ्यासबलात् अहमपि यूयमिव विधवा........... तदा अर्धोक्त एव काचित् वीरविधवापुरस्सृत्य "न वयमस्माकं समर्थसमाजे सर्वतो दुर्बलानां सचिवानां प्रवेशाय अनुमतिं दास्यामः" इत्यवदत्।

× × ×

रमा—(उमाया गृहं गत्वा) पत्रलेखनाय मषीकुंडं देहि।

उमा—तव गृहं मा नय मषीपात्रम्। अत्रैव तदुपयोगं कुरु।

अन्येद्यू रमाया गृहं प्रति उमा आगत्य अवदत्

उमा—संमार्जनीं देहि।

रमा—तव गृहं प्रति मा नय अत्रैव तदुपयोगं कुरु।

# नियमावलिः

(१) मधुरवाणीनाम्नीयं संस्कृतपत्रिका प्रतिमासं पौर्णिमायां प्रकाशते.

(२) अस्यां प्रायः प्रत्यङ्कमेका लघुकथा, सनातनधर्मविषयकाः प्रबन्धाः प्राचीनसाहित्यं चान्ये प्रचलितविषयका विवेचनात्मका लेखाः प्रकटीक्रियेरन् । सनातनधर्मद्रोहिणो लेखा नावकाशं विन्देरन् । ग्राहकेतरेषां लेखाः पद्यानि वा न प्रकाश्येरन् ।

(३) पत्रिकाया अस्याः अग्रिमदेयं मूल्यं मार्गव्ययसहितं रूपकपञ्चकम् । अङ्कस्यैकस्याणकाष्टकं मूल्यम् । द्वीपान्तरवासिनां तु वार्षिकं मूल्यं सप्तरूप्यात्मकम् । विना मूल्यमादर्शसञ्चिका न प्रदीयेत । तदिच्छुभिश्च आणकाष्टकमूल्यानि शुल्कपत्राणि प्रहीयन्ताम् ।

(४) मधुरवाण्याः श्रेयोभिवृद्धये दशरूपकाणां दातारः सहायकाः, पञ्चविंशतिरूपकप्रदाः पोषकाः, पञ्चाशद् रूप्यकदायिनोऽनुग्राहकाः शताधिकप्रदाः संरक्षका इति व्यपदिश्येरन् ।

(५) मधुरवाण्यां नीरजा असुवाच्याक्षरा एकपार्श्वे एवालिखिता लेखा नावसरमासादयेयुः । लेखपरिवर्तनादिषु निरनुयोज्याधिकाराः खलु संपादकाः । अप्रकाशिता लेखा विना प्रापणव्ययं न प्रतिप्रहीयेरन् ।

(६) लेखा, विज्ञापनानि, समलोचनापेक्षिणो ग्रन्थाः, पत्रिकाश्चेत्यादिसकलं **मधुरवाणी कार्यालय बागलकोट** इति संकेतेन प्रेष्यम् ।

पत्रं मूल्यधनं वा प्रेषयद्भिः निजसंकेतादिकं देवनागरीलिप्यैव सुस्पष्टं विलेखनीयम् । भूतपूर्वैर्ग्राहकैः पत्रस्य धनस्य वा प्रेषणसमये ग्राहकसंख्यालेखनं नैव विस्मरणीयम् । उत्तरप्रेप्सुभिरवश्यं प्रेषणीयः प्रापणव्ययः ।

संपादक मधुरवाणी

**मधुरवाणी कार्यालय, पो. मु. बागलकोट,**

**जि. विजापूर ( कर्नाटक )**

**Regd No. B. 3664.**



श्री Registrar
Gurukul University
Post Gurukul Kangri

## दीपावली-विशिष्टाङ्कः

ऐषमः कार्तिकमासस्य दीपावलीसूचिका **दीपाङ्कः** अथवा देशभक्ताङ्को भविष्यति । तत्र च दीपावली विशेषाङ्के दीपाङ्के भारतकुलदीपकानां श्री लोकमान्यटिळक, महात्मा गान्धी, पं. नेहरु, डॉ. राजेन्द्रप्रसाद, चक्रवर्तिराजगोपालाचार्यप्रभृतीनां सुप्रसिद्धानां देशभक्तानाम् अत्युज्ज्वलानि जीवन-चरित्राणि प्रकाशयितुमभिलषामः । अतः सरसलेखकैः लोकमान्यानां नेतृणां, स्वातंत्र्यान्दोलने हुतात्मनां वीररमणीनां, क्रान्तिकारकाणां स्वदेशात् निष्कासितानां कारागृहे एव मृतानां मारितानां ताडितानां पीडितानां च देशबन्धूनां रोमहर्षणानि विचित्राणि जीवनचित्राणि विलिख्य प्रेषणीयानि । चरित्राणि अतीव संक्षिप्तानि अत्यन्तसरलान्येव तस्मिन्नङ्के अवकाशमासादयेयुः । त्वर्यतां नवकविभिः ।

Printed at his Manohar Printing Press, Belgaum
by Venkatesh Yalloji Shahapurkar and Published by
Pandharinath Acharya Karmacharya Galgali, at H. No. 242,
Bagalkot, Dist. Bijapur.

॥ श्रीशः शरणम् ॥

# मधुरवाणी

## संस्कृतमासपत्रिका





संचालक :
पं. गलगलीरामाचार्यः
संस्कृतसाहित्यरत्नम्

सम्पादकः
पं. गलगलीपण्ढरीनाथाचार्यः

---

१८७४ शकस्य

वार्षिकं मूल्यम् रूपकपञ्चकम्

बागलकोट

# अनुक्रमणिका



## अङ्गीकरणीया सूचना

अनेनाङ्केन मधुरवाण्याः सप्तदशे वर्षे समाप्तोऽष्टमो भागः । तथापि महाभागैर्ग्राहकैर्मूल्यसाहाय्यदाने भागो न स्वीकृत इति मधुरवाणी खिद्यति तपस्विनी नितराम् । अतः सर्वैरपि ग्राहकैर्मासार्धे एव मूल्यप्रेषणानुग्रहणेन जीवनीया मधुरवाणी करुणयाऽत्रस्यामिति ।

व्यवस्थापकः

॥ श्रीशः शरणम् ॥




सुधानिष्यन्दिन्या मधुरमधुरालापकलया खलावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

१७ वर्षे ] भाद्रपदाङ्कः [ ६ संचिका

## मङ्गलम् ।

रे रे वारणबुद्धिराशु मधुपा मय्यत्र सन्त्यज्यताम् ।
स्वामिन् वारणधीस्तवैव, न हि नः, सा तु त्वया त्यज्यताम् ॥
किं वोऽन्तमर्द आगतो? बहिरपि स्यन्दत्यहो ते मदः ।
एवं गण्डनिलीनगुञ्जदलिभिर्वादी गणेशो मुदे ॥ १ ॥

मातङ्गप्रमुखोऽपि मङ्गलमयः सर्वैर्द्विजैः पूजितः ।
भक्तेभ्योऽभिमुखः प्रसन्नवदनो यो वक्रतुण्डोऽप्यहो ॥
नित्योद्यन्मदमेदुरोऽपि च दयासिन्धुश्च बन्धुः सताम् ।
अंहःखण्डनपण्डितो दिशतु शं वेतन्डतुण्डोऽनिशम् ॥ २ ॥

यस्मिन् केलिकुतूहलेन जगतीं दन्ताग्र उद्बिभ्रति ।
उल्लाघाः फणिनः स्तुवन्ति च मुदा स्वैरं चरन्ति क्षितौ ॥
वाहो निन्दति मूषकः पुनरिमे शंसन्ति दिग्दन्तिनः ।
कूर्मो नन्दति भारमुक्तिमुदितो सोऽयं गजास्यो मुदे ॥ ३ ॥

## मासावतरणिका ।

शुण्डाग्रेण गजाननेन सकलं व्योमोदमाकर्षितम् ।
आचान्तं किमु पक्षमासपितृभिः किं भानुना शोषितम् ॥
दुःख्यत्कर्षकदीननेत्रपुटतो नान्यत्र पाथःकणाः ।
भाद्रोऽयं किमु जीवतामपि नृणां श्राद्धाय बद्धादरः ॥ १ ॥

## नीतिवाक्यानि ।

अनुगन्तुं सतां वर्त्म कृत्स्नं यदि न शक्यते ।
स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति ॥ १ ॥

प्रत्यहं प्रत्यवेक्षेत नरश्चरितमात्मनः ।
किमु मे पशुभिस्तुल्यं किं नु सत्पुरुषैरिति ॥ २ ॥

सद्भिरेव सहासीत सद्भिः कुर्वीत संगतिम् ।
सद्भिर्विवाहं मैत्रीं च नासद्भिः किञ्चिदाचरेत् ॥ ३ ॥

न द्विषन्ति न याचन्ते परचिन्तां न कुर्वते ।
अनानीता न चायान्ति तेनाऽस्मानोऽपि देवताः ॥ ४ ॥

## सुभाषितम् ।

वेदव्यासः स इह दश यो वेद वेदाक्षराणि ।
श्लोकं त्वेकं परिपठति यः स स्वयं जीव एव ॥
आपस्तम्बः सकिल कल्पयेत् सम्यगौपासनं यः ।
कष्टं शिष्टक्षतिकृति कलौ कार्श्यमृच्छन्ति विद्याः ॥

१ भाद्रपदकृष्णपक्षे क्रियमाणस्य महालयश्राद्धस्य पक्ष इति तन्मासस्य पक्षमास इति च दैशिको व्यवहारः ।

# संपादकालोकः

## किं नो राज्येन ?

प्राप्तं स्वाराज्यम् अधिगतं स्वातन्त्र्यम् । गताः खलु गौराङ्गाः । कृता च पाश्चात्यानामुत्तरपूजा भारतीयैः 'यान्तु दैत्यगणाः सर्वे' इति मन्त्रेण । आगता अस्मदीया एव अधिकारिणः । ब्रिटीशानां विसर्जनं विधाय दिल्लीवल्लभ-सिंहासने आस्माकीनानामेव आवाहनं विहितम् । अस्माकमेव अद्य सर्वकारः । अथवा वयं वा वयमेव वा सम्प्रति सर्वकारः । सर्वेऽपि जना आनन्देन उत्साहेन उन्मादेन उल्लासेन अभिमानेन च नरीनृत्यन्ति । आत्मीया एव अधिकारिण इति स्वस्व कार्याणि सर्वेऽपि साध्नुवन्ति । यदा परकीयशासका आसन् तदा ते एतद्देशीयानां सुखदुःखानि नैव विचारयन्ति स्म । भारतीयानां सूचनां याचनां प्रार्थनां वा न कदाचिदपि कर्णे कुर्वन्ति स्म । 'ऊर्ध्व-बाहुर्विरौम्येषः न च कश्चित् शृणोति माम्' इति भारतीयाः आक्रोशन्ति स्म ।

अहो इतःपरं भारतीया एव अधिकारिणः भरतर्षभा एव राजमहाराजाः । पुनरपि भोजविक्रमराजकालीना परिस्थितिरेव आगच्छति । पुनरपि भारते तत्र तत्र सर्वत्रापि विद्वद्गोष्ठ्यः कविसम्मेलनानि पण्डितसभाश्च संभवेयुः । संस्कृत-प्राचीनग्रन्थानां पठनपाठनाध्ययनाध्यापनादिपरम्परा पुनरपि यथापूर्वं प्रचलिष्यति । पुनरपि देशे देशे ग्रामे ग्रामे पत्तने पत्तने च संस्कृतपाठशालाः परिशोभन्ते । महानगरेषु च नालन्दा तक्षशिला विक्रमशिलादिसदृशाः संस्कृत-विश्वविद्यालयाः पुनः प्रस्थाप्यन्ते । अचिरादेव च संस्कृतं वा संस्कृतानुप्राणिता संस्कृतमयी एव वा अन्या कापि भाषा राष्ट्रभाषा भवेत् । ततः संस्कृतपत्र-पत्रिकाणां सर्वत्रापि विशेषप्रचारो भवेदिति शताधिका एव आशाङ्कुराः संस्कृतपण्डितानां मनोमन्दिरेषु नवीनमेव प्रकाशं व्यकिरन् ।

परमद्य जनता स्वस्वाभीष्टसिद्धिं सद्य एव लभते आत्मीयाधिकारिणां सहायेन । स्वकीयसर्वकारेण बहव एव हि व्यापारिणः लक्षाधीशाः संवृत्ताः लक्षाधीशाः कोटीश्वराः अब्जेश्वराः कुबेरकुमारा एव च संपद्यन्ते । औद्योगिकक्षेत्रेऽपि भारतीया अद्य महतीमेव प्रगतिमुन्नतिं च अधिगच्छन्ति । कृषिविषयेऽपि महान्त एव प्रयत्नाः सर्वकारेण अनुष्ठीयन्ते । इमां भारतमातरं सुजलां सुफलां सस्यश्यामलां द्रुमदलशोभिनीं सुखदां च कर्तुं प्रतिवर्षं कोट्यधिकरूप्यका व्ययीक्रियन्ते । ज्ञानविज्ञानकलाकौशल्याभिवृद्धयेऽपि विशेषप्रोत्साहनं दीयते । साहित्यसङ्गीतसमुन्नतयेऽपि प्रयत्यते । राष्ट्रपतिभिः भारतसुप्रसिद्धानां बहूनां सङ्गीतरत्नानां सत्कारः देहलीराजधान्यां निर्वर्तितः । प्रान्तीयभाषाभिवृद्धये च जलवद् द्रव्यं व्ययीक्रियते प्रान्तीयसर्वकारैः केन्द्रसर्वकारेण च । तत्तत्प्रान्तीय भाषागताः पुस्तकपत्रपत्रिकादयः विपुलधनदानेन प्रोत्साह्यन्ते । प्रान्तभाषाकवयः ग्रन्थकाराः ग्रन्थाश्च बहुमान्यन्ते सत्क्रियन्ते च । राष्ट्रपतिभिः दाक्षिणात्यविद्वांसः द्राविडभाषाभिज्ञाः पुरस्क्रियन्ते राजगौरवेण आद्रियन्ते च । तदेतत्सर्वमवलोक्य सर्वेऽपि जनाः आप्तं स्वाराज्यफलम् । सार्थकं खलु अस्मत्स्वातन्त्र्यमिति कृतकृत्यतानिश्वासं मुञ्चन्ति । सिद्धं नः समीहितम्' इति समादधाति च । परंतु

## संस्कृतस्य तु का गतिः ?

स्वातन्त्र्यलाभानन्तरं भगवती देववाणी अपि अतीव आनन्दमन्वभवत् । संस्कृतपण्डितैस्तु शतशः सत्यनारायणव्रतान्यनुष्ठितानि । सहस्रशो नारिकेलफलानि देवालयदेहलीषु आस्फोटितानि । बहुभ्य एव बालकेभ्यः दीनेभ्यः याचकेभ्यः मोदकवितरणमपि कृतम् ।

परंतु हन्त समतीताः पञ्चसंवत्सराः प्राप्तस्य स्वराज्यस्य । षष्टिसङ्ख्याका विगताः खलु मासाः लब्धस्य स्वातन्त्र्यस्य । परं सर्वकारेण केन्द्रीयेण प्रान्तीयेन वा न केनापि विचारिता सुरभाषायाः परिस्थितिः । न कोऽप्यनुष्ठितः संस्कृतो-

त्कर्षप्रयोजको व्यापारः । नैकोपि परिचिन्तितः देवगवीसमुत्कर्षावह उपायः । पण्डितानाम् मनोरथा यत्र यथा उत्पन्ना तत्रैव तथैव विलीनाः । केन्द्रमन्त्रिभिः राष्ट्रपतिभिश्च व्यापारिण आहूयन्ते व्यवहाराजीविन आकार्यन्ते । शिल्पिनः सत्क्रियन्ते । सङ्गीतज्ञाः सम्मान्यन्ते । कार्मिकाः पुरस्क्रियन्ते । तत्तद्भाषा-पण्डिता अपि सबहुमानमाद्रियन्ते । इतरभाषावृत्तपत्रव्यवसायिनोऽपि सर्वमन्त्रिभिः सर्वाधिकारिभिश्च सम्बोध्यन्ते सम्प्रार्थ्यन्ते आदिश्यन्ते उपदिश्यन्ते च । परन्तु संस्कृतपण्डितानां संस्कृतकवीनां संस्कृतपत्रसम्पादकानां च राष्ट्रे आवाहनमेव नास्ति । दूरेऽस्तु आदरणकथा । संस्कृतज्ञानामधुना सर्वदापि विसर्जनमेव । न जानीमो वयमत्रेदृशोपेक्षाकारणं सुरसरस्वत्याः । किमपराद्धं तपस्विन्या सुरभाषया वराकैः संस्कृतपण्डितैर्वा ? परकीयसत्तायां यादृशी परिस्थितिरासीत्सैव ततोप्यपकृष्टैव च निकृष्टा दयनीया शोचनीया च दुर्दशा अद्य विद्यते संस्कृतस्य । 'किं नो राज्येन गोविन्द' इति निराशोद्गारमेव आविष्कुर्वन्ति संस्कृतपण्डिताः "किं कुर्वे भरतेश यत्पुनरहं दीनो भवानीश्वरः" ।

---

## संस्कृतपरिषत् ।

अहमदाबादस्य श्रीबृहद्गुजरातसंस्कृतपरिषदः प्रमुखपदमलङ्कर्तुं भारतीयोच्चतमन्यायालय—न्यायाधिपतिः ( जस्टिस सुप्रीमकोर्ट दिल्ली ) स्वनामधन्यः श्री एन्. एच्. भगवतीमहोदयः स्वीयां स्वीकृतिमदात् ।

महागुर्जरस्य संस्कृतविद्यालयानां माध्यमिकशालानां ( हाईस्कूल ) चाध्यक्षशिक्षकमण्डलाभ्यां समुत्साहितेयं परिषत्संस्कृतविभागे आचार्यान्ताः, प्राचीनसंस्कृतिविभागे च "संस्कृतभूषण" इत्युपाध्यन्ताः परीक्षाः प्रदापयति । लघुना कालेनैवास्याः परीक्षासु षट्सहस्रमिताः परीक्षार्थिनः समाविष्टा इति सन्तोषास्पदमिति सूचयति—

**स्वामी रामेश्वर पुरी**
परीक्षा मन्त्री,
**श्री बृ. गु. संस्कृत परिषद् अमदाबाद.**

# भारते भातु भारती ।

( कवि—क. वे. कृष्णमूर्तिशर्मा डेक्कन कालेज रिसर्च इन्स्टिट्यूट, पूना )

कराञ्चितविपञ्ची सा विरिञ्चिसहधर्मिणी ।
प्रपञ्चतमसां हन्त्री सर्वत्र समुदञ्चतु ॥ १ ॥
श्रुत्यब्धिपारदृश्वानः स्मृतीरुपनिबध्य नः ।
धर्मतत्त्वमुपादिक्षन्ये प्राञ्चस्तान्मुनीन्नुमः ॥ २ ॥
षड्दर्शनीपरिश्रान्ता भारते यद्दधुः पुरा ।
वैदुष्यं यदि तच्चान्द्रं शनैर्बिम्बमिवाह्रसत् ॥ ३ ॥
श्रुतित्रय्यन्तयोगज्ञास्तपःशक्त्या यमार्जिजन् ।
प्रभावं मुनयः सोऽद्य न विद्वत्सूपलभ्यते ॥ ४ ॥
व्यासवाल्मीकिसंदृब्धेतिहासद्वयमाश्रिताः ।
कवयः कृतिभिः स्वाभिर्दिक्षु पप्रथिरे भृशम् ॥ ५ ॥
यद्धि शब्दार्थगाम्भीर्यं तत्कृत्योर्दृश्यते द्वयोः ।
तद्गृह्णन्त्यपरे, दुग्धं सुरभेरिव तर्णकाः ॥ ६ ॥
कवयः कालिदासाद्याः शास्त्रकाराश्च भूरिशः ।
राजसंसत्स्वराजन्त दिवि दीप्ता इवोडवः ॥ ७ ॥
सञ्चिक्युः काव्यमाध्वीकं सुमनोभ्यः क्रमान्नृपः ।
सुमनोभ्य इव क्षौद्रं भृङ्गा यद्धि स्वदामहे ॥ ८ ॥
रसवत्काव्यपीयूषधाराभिरभिपूरिते ।
प्रासादे, कविसद्मानि कटाक्षाः प्राविशञ्छ्रियाः ॥ ९ ॥
राज्ञीवान्तः पुरादेत्य सौविदल्लानुगां वधूम् ।
कव्युपस्थापितां वाणीमञ्छिष्यत्कोषतोऽब्धिजा ॥ १० ॥
सुविस्तीर्णेऽपि राष्ट्रे यदाज्ञामन्वसरन्प्रजाः ।
स राजा सार्वभौमोऽपि सत्कवीनां वशेऽभवत् ॥ ११ ॥

इत्थं लक्ष्मीसरस्वत्यौ त्यक्त्वा वैगुण्यमात्मनोः ।
सद्व्याविव चिरं विद्वद्भूषितं सौधमोषतुः ॥ १२ ॥
बीज—क्षुप—द्रु—पुष्पाम—फल—चक्रभ्रमोपमः ।
कालेन कालवशगानुभयान्विदधेभवः ॥ १३ ॥
भूत्वा वाक्पतयोऽप्येते वशमीयुरवाक्पतेः ।
यस्य रेखा समुत्कीर्णा व्यतीये नापि दैवतैः ॥ १४ ॥
पुष्पवद्वंशदीपेषु शान्तेषु विधिवात्यया ।
का क्षुद्रक्षितिपानां वा कवीनां वा कथा भुवि ॥ १५ ॥
काव्यशास्त्रप्रबन्धाः प्राप्रचिता दुर्ग्रहार्थकाः ।
स्वपन्ति कोशागारेऽद्य कृपणद्रविणोपमाः ॥ १६ ॥
सर्वतन्त्रस्वतन्त्राणामपि वंशोदिताः क्वचित् ।
स्वकुलागतशास्त्राणां ददुर्हन्त तिलाञ्जलिम् ॥ १७ ॥
गतानुगतिकत्वस्य दासभूतास्तथा परे ।
शास्त्रज्ञानविमूढानां पन्थानं प्रतिपेदिरे ॥ १८ ॥
कालेन जीविकोपायविद्यार्जनपरायणैः ।
नीतोपहास्यतां शास्त्राधीत्यध्यापनपद्धतिः ॥ १९ ॥
ग्रन्थांस्तालादिपर्णेषूत्कीर्णवर्णान्सुरक्षितान् ।
कर्णाकर्णिकयाऽग्रीष्म क्षिप्तानर्णसि बालिशैः ॥ २० ॥
अदित्सन्तो बहिः केचिदीर्ष्यया प्राकृतीः स्वयम् ।
जुगुक्षन्तः कीटजग्धाः कृत्वा मौढ्यादनीनशन् ॥ २१ ॥
एवं संस्कृतविद्यायां लुप्तायां क्रमशो भुवि ।
शास्त्राणि बोधकाभावाद्धन्त निद्रान्ति नः क्वचित् ॥ २२ ॥
शुश्रूषायासितच्छात्रान्सानुकम्पेक्षितैः पुरा ।
सर्वज्ञान्गुरवश्चक्रुरिति पौराणिकी कथा ॥ २३ ॥

न शिष्याननुकम्पन्ते गुरवो न च तैरिमे ।
यथावद्बहुमन्यन्ते सेयं नूतनपद्धतिः ॥ २४ ॥

पाश्चात्त्यैरादृताद्यैषा वाणी तत्राभिवर्धते ।
एकैरनादृता पुत्रैरप्यन्यैः रक्ष्यते जनी ॥ २५ ॥

कालेन भारती भूमिः स्वातन्त्र्यं प्रापिताधुना ।
उद्दिधीर्षन्त्यमूं विद्यां प्राज्ञाः केचित्प्रयत्नतः ॥ २६ ॥

प्राच्यप्रतीच्यसंस्कृत्योः सूक्ष्मतत्त्वविमर्शकाः ।
प्राचीकशन्बहून्ग्रन्थान्विद्वद्भिरभिनन्दितान् ॥ २७ ॥

अज्ञातप्राक्तनग्रन्थमूल्याः संस्कृतनिन्दकाः ।
मातृका ये दिधक्षन्ति नूनं ते देशदूषकाः ॥ २८ ॥

अद्याप्यश्रुतनामानो ग्रन्थाः सन्त्येव भूरिशः ।
ते सर्वे राजकीयामां वशे नेयाः प्रयत्नतः ॥ २९ ॥

यद्याधुनिकविद्वद्भिः प्रकाश्येरन्परिष्कृताः ।
प्राग्ग्रन्थास्तत्प्रणेतॄणां संवर्धेरन्यशोलताः ॥ ३० ॥

सुदि शुभ्रस्य चन्द्रस्य किरणानां विजृम्भणम् ।
न हि नीडस्थिता घूका अलं रोद्धुं खरैः रुतैः ॥ ३१ ॥

यदि राष्ट्राधिनेतारः शास्त्राणामपि रक्षणे ।
यतेरन्प्राच्यविद्येमगव्युच्छिन्ना भविष्यति ॥ ३२ ॥

गवेषयित्वा शास्त्रज्ञांस्तानध्यापनकर्मणि ।
नियोज्य विद्याशालाभी रक्षेयू राष्ट्रगौरवम् ॥ ३३ ॥

अद्य राष्ट्राधिनेतार आश्रितश्रमवारकाः ।
सुमनोवर्धनैर्भान्तु वसन्तर्तुद्रुमा इव ॥ ३४ ॥

भाग्यदा भारतीयानां भाषाणां जननी चिरम् ।
भासयन्ती धियं पुंसां भारते भातु भारती ॥ ३५ ॥

---

# वन्दे मातरम् ।

ले०—**प्राणनाथ गलगली** आङ्ग्लशालाशिक्षकः **बनहट्टी.**

सा अतीव दरिद्रा आसीत् । बहवः तस्याः पुत्रा आसन् । स्वस्य पुत्राणां रक्षणायैव सा जीवति । सर्वमपि दुःखं सहते । सायंकालपर्यन्तं भिक्षाम् अटति । भिक्षाटनेन लब्धं सर्वमपि अन्नं रात्रौ तनयान् भोजयति । पश्चाद् किञ्चिद् अवशिष्टं चेत् स्वयमपि खादति । नोचेत् तथैव उदरम् आकृष्य स्वपिति । एकस्मिन् दिने कुत्रापि भिक्षा न लब्धा । गृहे श्रीमन्तः तिरस्कारम् अकुर्वन् । काश्चिद् धनिकाः स्त्रियः 'रक्षितुं यदि योग्यता नास्ति, तदा पुत्राः कुतः प्रसूताः ?' इति उपाहसन् । अपमानेन उपहासेन च रुष्टा गृहं प्रतिनिवृत्ता । धर्मशालाया बहिरङ्गणे ज्येष्ठपुत्री स्थिता आसीत् । तस्याः कक्षे एकः बालकः "अन्नम् अन्नम् इति रोदिति । सा बाला 'अरे माता आगच्छति अन्नम् आनेष्यति, मा रुदिहि" इति सान्त्वयति । अत्रान्तरे माता आगच्छति । सर्वे बालका 'अन्नं देहि आहारं देहि' इति वदन्तः तदभिमुखं धावन्ति । परं सा अद्य रिक्तहस्ता । भिक्षापात्रे एकोऽपि रोटिकाशकलो नास्ति । तदा सर्वे बालका उच्चैः तारस्वरेण "मातः क्षुधा बाधते, किञ्चिदन्नम् दिश, क्षुधया मरिष्यामः सत्वरं देहि" इति रुदन्ति सकरुणम् आक्रोशयन्ति । वदनोदरं दर्शयन्ति । क्षुधाहता क्षितितले विलुठन्ति विलपन्ति च । तदा क्रुद्धा संत्रस्ता च माता सर्वानपि ताडयति । सर्वेभ्योऽपि कठोरेण करतलेन कपोलचपेटिकाः ददाति । 'यदि क्षुधा इति वदथ तर्हि मारयामि' इति भीषयति । तदा सर्वेऽपि शिशवः भयभ्रान्ता वेपन्ते । एकः शिशुः आशया आगत्य भिक्षाभाण्डं लेढि । तदवलोक्य मातुः हृदयं, विद्रवति । दुःखम् उद्रिक्तं भवति । 'अये हतभागिन्या मम उदरात् कुतो वा यूयमुत्पन्नाः' धिङ्मां दुष्टां नष्टां कठोरहृदयाम् । क्षुधाक्रान्ताः शिशवः मया निर्दयं ताडिता एव । नाहं मनुष्या किन्तु राक्षसी एव' इति आत्मानं निन्दन्ती सुतान् अङ्के शाययित्वा उच्चै रोदिति ।

तदा चारुचन्द्रः आगच्छति । तद् दृश्यं दृष्ट्वा स "अये शालिनि कियान् वा ते हठः । चिरादेव प्रार्थयमानः अस्मि । देहि प्रणयभिक्षाम् । तेन तव पुत्राः प्रतिदिनं पञ्चभक्ष्यपक्वान्नानि यथेच्छं भुञ्जन्ति । महाप्रासादे सुखेन वसन्ति, तत्रापि भिक्षाटनप्रसङ्गो न कदाचिदायाति । अल्पस्य हेतोः बहु हातुमिच्छसि । विचारमूढेव प्रतिभासि । आयाहि मम गृहम् । पश्य मां सकृदपि प्रेमकटाक्षेण । गृहाण इमानि खाद्यानि' इति उक्त्वा मोदकलड्डुकादिभरितं पात्रं पुत्राणां पुरः स्थापयति । तदा सा क्रुद्धसर्पिणीव फूत्कुर्वन्ती 'दुष्ट चण्डाल निस्सर गृहादस्मात्, प्राणानपि मुञ्चेयम् । नतु सतीधर्मम् । कामम् उपहसन्तु मां दरिद्रा इति जनाः । सानन्दं सहे । किन्तु व्यभिचारिणीति अपवादं न कदाचिदपि सहे । मम प्राणान् प्राणेभ्योपि प्रियतरान् पुत्रानपि बलिं दत्वा सतीत्वं रक्षामि । निर्गच्छ अस्मात् स्थानात् । तव पापिष्ठं मुखमपि इतःपरं मा दर्शय' इति उक्त्वा तस्य खाद्यपूरितं पात्रं बहिः रथ्यायाम् अस्यति । तदा सोपि चारुचन्द्रः 'भवतु तव मदः अद्यापि न गतः । स्वपातिव्रत्यरक्षार्थं निरपराधान् शिशून् आहुतीकरोषि । कियत्स्वार्थम् । न त्वं माता । किन्तु पातिव्रत्यपिशाची । नरराक्षसी' इति वदन् गृहं गतः । तदा तस्या बालकाः रथ्यायां पतितानि लड्डुकानि अपूपान् मोदकान् पूरिकांश्च धावित्वा गृण्हन्ति । आनन्देन खादन्ति । उल्हासेन नृत्यन्ति । माता तु तदवलोक्य पुनः द्विगुणितक्रोधा तत्करगतानि खाद्यानि आकृष्य पादेन अवमर्दति । तदा शिशवः रोदन्ति । तदा कोपतप्ता तान् यथेच्छं ताडयति । मूर्खाः मारयामि सर्वानपि अद्यैव' इति कठोरा प्रहरति । तदा तस्याः प्रहारेण मूर्च्छितः भवति एकः शिशुः । प्रहारेण भूमौ पतति । देहल्याम् अवघट्टनेन तस्य शिरः स्फोटितं भवति । धाराकारेण रक्तं संस्रवति । तदा भीता भूत्वा तं शिशुम् अङ्के गृण्हाति । बलवान् शिरसि आघातः । रक्तधारा उच्छलति । त्रीणि दिनानि नास्ति आहारः । पृष्टोदरम् एकीभूतमिवास्ते । अस्थिपञ्जरमात्रावशिष्टं शरीरम् । शीतोपचारैः कथञ्चिद् संज्ञां लभते शिशुः । तदा सः शिशुः क्षीणस्वरेण उदरं प्रदर्श्य मातः क्षुधा, अन्नम्, एकं केवलम् अन्नं, म्रियेहम् उपवासेन, मातः चारुणा

दत्तानि खाद्यानि कुतो वा न खादयासि । किमस्मान् क्षुधया हन्तुमिच्छसि ? इति वदन् पुनः अशक्त्या मूर्छितः । तदा पुनः शीतोपचारेण पुनरुज्जीवितः । पुनः क्षुधा क्षुधा क्षुधा इति वाचा मातुः हृदयं विद्रयाति । चिन्तास्तम्भिता भवति । किं कर्तव्यमूढा उपविशति । बाला उच्चै रोदितुं प्रारभन्ते । एकस्तु बालः रोदितुमपि अशक्तः वदनोदरं दर्शयति । तदा सा माता झटिति उत्तिष्ठति । शिशुं तत्रैव त्यजति । बाष्पान् अवमृजति । बहिर्धावति । चारुचन्द्रस्य गृहमागच्छति । कोणे चारुचन्द्र एकाकी पर्यङ्के निर्निद्रः शालिनीम् एव स्मरन् स्वपाति । अकस्मात् शालिनी आगत्य पुरस्तिष्ठति । तदा चारुः 'त्वम्, अत्र मम गृहे, कथमिदम्, किमयं स्वप्न उत माया, किं त्वं सत्यम् आगता ? ।

सा—सत्यमागता ।

किमर्थम् ।

तव कामनां पूरयितुम् ।

किं तर्हि अहमालिङ्ग्य संचुम्बामि ।

आम् ।

एहि प्रिये एहि । मम अद्य सफलः चिरकालीनो मनोरथः । सर्वस्वमपि तव पादतले समर्पयामि । इत एहि आलिङ्ग माम् । आस्वादयामि अधरम्'

इति वदन् शालिनीसमीपमुपसर्पति । कामान्धः प्रेमोद्रिक्तश्च भूत्वा तां रभसादाकृष्य रतिक्रीडां कर्तुं धावति । परं शालिनी तत्रैव निश्चला तिष्ठति । दीनदृष्ट्या तं विलोकयति । तां दृष्टिं विलोक्य तां दीनतां ताम् आर्ततां च दृष्ट्वा चारुचन्द्रस्य चित्तं दोलायते । तस्या सजलनेत्रे पुनः पश्यति । विलक्षणा कान्तिः, अपूर्वं तेजः । तद् दृष्ट्वा चकितः धर्षितः भवति चारुः । कामवृत्तिः अस्तमिता भवति । दुष्टवासना स्वयमेवोपशान्ता भवति । मातृशक्त्या आकृष्टः पादयोः पतति । अञ्जलिं बद्ध्वा 'मातः क्षमस्व अमुं नरपशुम् । त्वं मम माता । पुत्रार्थे पातिव्रत्यबलिदानाय सिद्धा त्वं सत्यं माता । मम सर्वस्वमपि भवदधीनम् । गृहीत्वा अनुगृहाण । वन्दे मातरम् ।

---

# विरोधभक्तिः ।

ले०—आत्माराम शामराव दिवगी,
निवृत्त पोष्टमास्तर, हुबळी.

शिष्यः—हे गुरुनाथ, कृपानिधे, कैवल्यधामन्, त्वया प्रसन्नेन उपदिष्टः भक्तियोगः सावधानं मया श्रुतः, श्रद्धया आस्थास्यामि तमेव अद्यप्रभृति। किं तु भूयोऽपि कश्चित् संन्देहः उपजातः अस्मिन् विषये मम चेतसि। तं निवारयितुम् अर्हति श्रीगुरुवरः। सकलसंशयनिरसनेन निःसन्देहवृत्तिं मयि आधातुं त्वदृते न कोऽपि अन्यः समर्थः। भवदमृतवाणीम् आकर्णयितुं उत्सहते मे मनः।

गुरुः—निवेद्यतां तव शङ्का निःशङ्कम्। अभयमस्ति तव।

शिष्यः—स्वामिन्, एवमस्ति मम शङ्का। हिरण्यकशिपु, रावण, कंस, शिशुपालादिदैत्याः उग्रकर्माणः दम्भमानमन्दान्विताः जगतः क्षये सदा निरताः, पापात्मानः, श्रीहरेः परमद्वेष्टारः भगवता संहृताः सन्तः अन्ते सायुज्यं प्राप्नुवन् इति पुराणान्तरेषु आख्यातमस्ति। एषां दुरात्मनां हृदये भक्तिलेशोऽपि अवस्थातुं नाशक्नोत्। एवं सति, सायुज्यमुक्तिं कथं लब्धवन्तः एते? किंबहुना भक्तिवैराग्यज्ञानं विना मोक्षः कथं साध्यः इति बलवती मे शङ्का। तस्याः समाधानं याचे मम गुरुदेवस्य मुखेन।

गुरुः—यथार्था तव शङ्का खलु। श्रूयतां तावत्। दयाघनः परमेश्वरः सर्वभूतान्तरात्मा वर्तते। स एव सकलभावानां कर्मणां च अधिष्ठाता प्रेरकश्च। न तस्य कोऽपि द्वेष्यः न वा प्रियः अस्मिन् जगति। समत्वेन समवस्थितः सर्वभूतेषु भगवान् श्रीहरिः। प्रेम्णा वा वैरेण वा भयेन वा अहर्निशं तस्य चिन्तनं तत्त्वतः निदिध्यासनमेव परिणमति, भृंगकीटकन्यायेन भगवत्साधर्म्याय प्रभवति च। वैरभावस्य परमावधिः आत्यन्तिकीं भीतिमुत्पाद्य तद्योगात् सकलविषयेषु इहामुत्र भोगेषु च विरक्तिं हेयबुद्धिं च उपजनयति। एवं भगवद्भीतिग्रस्तं तस्य दानवस्य चित्तं सर्वत्रावस्थितं श्रीहरिमेव पश्यति।

तेन व्यतिरिक्तं स्थलं क्षणमपि द्रष्टुं न शक्यते तेन। न केवलं बाह्यजगति स्वदेहे स्वान्तरे चापि हरिं विना न किञ्चिदन्यं दृश्यते तेन हरिर्द्वेष्टा। इन्द्रियेषु हरिः मनसि हरिः जाग्रति स्वप्ने सुषुप्तौ अपि हरिः एवं हरिमयं अखिलं जगत् प्रतीयते तेन। उद्देशतः निष्कामोपासनया अर्थात् अनन्यप्रेमभक्त्या यदीप्सितं लभ्यं च तद् नितान्तवैरसाधनेन आसाद्यते एवंविध वाममार्गगामिनापि। अयं विषमभक्तिमार्गः "विरोधभक्तियोगः" इति व्यपदिष्टः बुधैः। शमदमादीनि मुमुक्षुलक्षणानि तं यदृच्छया आश्रयन्ते। विदिता त्वया श्रीकृष्णोक्तिः 'यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति। तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः। सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥" इति। तद् यथार्थं उपपद्यते प्रत्येति च एषां विरोधभक्तानां दानवानामपि विषये, यथा इतरभक्तानाम्।

शिष्यः—एवं चेत्, तत् किमर्थम् एषां भक्तानां संहारं कृतवान् श्रीहरिः तेषु तेषु अवतारेषु?। भक्तहननकर्म कथं श्लाघनीयं भवति दयानिधेः परमेश्वरस्य?। विपरीतं भाति ममैतत् किल।

गुरुः—अलं पूर्वग्रहप्रमादेन। तत्वविचारः अत्र कर्तव्यः, वत्स। वस्तुतः देही नित्यं अवध्यः। स हन्ता वा हतो वा हन्यमानो वा न कदापि भवति। "य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥" इत्यादिवचनानि अत्र प्रमाणम्। भूयश्च, "न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा। इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥"। "न च मां तानि कर्माणि निबध्नन्ति धनंजय। उदासीनवदासीनम् असक्तं तेषु कर्मसु ॥" इत्यादिगीतोक्तयः परमात्मनः अकर्तृत्वं, अलिप्तत्वं, निःसंगत्वं चैव बोधयन्ति। अर्थात् तस्य हननकर्मापि मिथ्याऽऽरोपः एव इति सिद्धम्। अस्तु। उपर्युक्तप्रकारेण भगवति आहितचेतसः दानवभक्तान् तमोगुणाविष्टदेहबन्धनात् निःशेषं विमोच्य तेभ्यः नित्यानन्दब्रह्मणि सायुज्यं ददौ श्रीहरिः भक्तवत्सलः। नान्यार्थः अत्र बोद्धव्यः। रावणकंसादीनां संहारकथाः तत्त्वबोधगर्भितानि भगवल्लीलायाः रूपकाणि इत्यवधार्येरन्।

तत्त्वस्य सम्यग्दर्शनमेव विज्ञानं भवबन्धविमोचनहेतुभूतम् । दुष्टसंहारः शिष्ट-परिपालनम् इत्येतत् मायाविलासः ईश्वरस्य । तमेव ये प्रपद्यन्ते अनन्यभावेन मायामोहाब्धिं तरन्ति ते निःसन्देहम् । अत्र पुनः "अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम् । यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥" एतद् भगवद्वचनं त्वं वेत्सि । तदनुसारेण देहावसानसमये श्रीहरिस्वरूपे दृढानुसंधानं आहितवन्तः इमे दानवभक्ताः अन्ते क्षिप्रं सायुज्यमुक्तिं लेभिरे । ननु अगम्या दैवी लीला ।

शिष्यः—अनुगृहीतोऽस्मि, भगवन् । त्वत्प्रसादात् समूलो नष्टः मम मोहः अद्य । त्वदुदाहृतः अयं विरोधभक्तियोगः सद्यः मानवैः अनुसरणीयो वा न वा इति विज्ञातुमिच्छामि ।

गुरुः—विरोधभक्तिपन्थः अत्यन्तनिषिद्ध अस्मिन् कलियुगे । न केवलं अननुष्ठेयः परं दूरतस्त्याज्यः अस्ति मानवैः । तस्यावलम्बनं वा तस्मिन् मनसः प्रवृत्तिर्वा मनुजस्य अधोगतये अर्थाद् आत्मघातायैव प्रभविष्यति । भगवति विरोधभावः सर्वथा न विधेयः । केवलं अपवादात्मकानि रावण-कंसादीनां चरितानि तेषां वाममार्गावलम्बनेन साधितः मोक्षलाभोऽपि तथा-विधः एव इति ज्ञेयम् । पूर्वकाले एते दानवाः भगवतः परमभक्ताः सन्ति स्म । दुष्प्रसंगवशात् शापग्रस्ताः सन्तः ऊर्ध्वं शापमोचनवरबलात् भुवि अवतीर्य शीघ्र मोक्षप्राप्तये विरोधभक्तिपथमवलम्ब्य श्रीहरेरेव हस्तेन उक्तरीत्या सायुज्यं प्रापुः इति पुराणकथाः वर्तन्ते । भगवल्लीलाचरित्राणि अवश्यं श्राव्याणि मननीयानि च तस्य दयालुत्वभक्तवात्सल्यादिलोकोत्तरगुणानां बोधार्थं भक्तिभावस्य दृढीकरणार्थं च । अस्तु । शुद्धप्रेमभक्त्या एव देवाधिदेवः वश्यः नान्यसाधनैः । शास्त्रविहितः कर्म उपासना ज्ञानमार्गः एकमेव अद्वितीयं अमोघं मुक्तिसाधनं निःश्रेयसकरं विद्यते । तमेव श्रद्धया अनुसृत्य अन्ते स्वात्महितं साध्नुयात् मुमुक्षुः । ॐ नमो भगवते वासुदेवाय । शिवमस्तु तव ।

---

# कमलाकान्तपुरस्कारेतिहासः ।

अतीतवत्सरस्य २३ जनवर्यां ३३ वर्षावस्थायां परलोकमगान्मम कनीयान् भ्राता श्रीकमलाकान्तः आसीत् संस्कृतपत्रसहसम्पादकः । १८ वर्षं यावत्तद्बलेन संस्कृतपत्रमचलत् । तस्य जीवनं संस्कृतभाषायाः सेवायामेव गतम् । तस्यैतादृशी सेवा असम्मानिता न स्यादिति अयोध्यायाः संस्कृतकार्यालयेन कमलाकान्तपुरस्कार आरब्धः । प्रथमे वर्षे पुरस्काराय निम्नलिखिता विषया निर्वाचिताः—

१—काव्यम् । अत्र खण्ड, संग्रह, महाकाव्यानि गृहीतानि ।

२—निबन्धः । गते वर्षे निबन्धविषय आसीत् 'सर्वकारीयसाहाय्यमन्तरा संस्कृतभाषायाः प्रचारोपायाः के ?' इति ।

३—समस्या 'ते' इति । अत्रैकैव पूर्तिः प्रहेयेति निर्दिष्टमासीत् ।

समये १० काव्यान्यागतानि । तेषु कस्मिंश्चिदपि काव्ये निरीक्षकाणां मतैक्यं नाभूत् । निरीक्षकाश्चत्वार आसन् । सर्वे स्वाभीष्टे काव्ये शताङ्कानदुः । एवमेव निबन्धपूर्तिष्वपि तेषां निर्णयाः पार्थक्यमेव भेजिरे । इति तु पूर्वमेवासीन्निर्णीतं यन्निरीक्षकाणां सम्मानस्य रक्षायै तेषां निर्णयेषु एकवाक्यतायै पुनः परीक्षणं न भविष्यति । इत्थं खण्डशो वितरणमभूत् पुरस्कारस्य । एतस्मिन् वर्षे निम्नलिखितानि काव्यानि पुरस्कृतानि—

१—श्रीतुकारामचरितम् ( महाकाव्यम् ) लेखिका श्रीमती सौभाग्यवती क्षमादेवी, बम्बई ।

२—पद्यपुष्पाञ्जलिः ( संग्रहकाव्यम् ) लेखकः मधुरा ( मद्रास ) स्थित श्रीरामेश्वरदेवस्थानपाठशालाध्यक्षः श्रीसुब्रह्मण्याचार्यः, मदुरा ।

३—आदर्शराघवः ( दशस्तबकभूषितः ) लेखकः ठमेल श्रीसोमनाथ-शर्मा, नेपाल ।

४—धारायशोधाराः ( ऐतिहासिकं खण्डकाव्यम् ) लेखकः श्रीदिग-म्बरमहादेवकुलकर्णी बी. ए., सातारा इति ।

## निबन्धे पुरस्कृताः

१—श्रीप्रेमशङ्करमिश्र, इटारसी ( सी. पी. ) ।

२—श्रीचूनीलालशास्त्री ( प्रवासी ) सहारनपुर ( उ. प्र. ) ।

३—श्रीविष्णुदयालु आगरा ( उ. प्र. ) ।

## समस्यापूर्तिषु पुरस्कृताः

१—श्रीकरमलकरशास्त्री इन्दौर ।

२—श्री के. ओ. एं. शङ्करन्, जम्पूतिरिप्पाट् ( केरल ) ।

३—श्रीगणेशदत्तशर्माचार्यः वैद्यनाथधाम ( बिहार ) ।

काव्यपुरस्कारः १०१, निबन्धपुरस्कारः ९१, समस्यापूर्तिपुरस्कारश्च २०, मुद्राणामासीत् ।

आदौ त्वित्थं प्रतीयते स्म । यदेतादृशे लघुपुरस्कारे भारतमान्या न लेखका अवतरिष्यन्ति, न च निरीक्षका एव, परमयं भ्रमो मे तदा निरस्तो यदा पुस्तकानामागमनमारब्धम् । पुरस्कृतपुस्तकातिरिक्तानि पुस्तकानी-मान्यासन्—

१—देवकीदेवनम् ( खण्डकाव्यम् ) ले० श्रीप्रमुदत्तस्वामी, मेरठ ( उ० प्र० ) ।

२—हितोपदिष्टम् ( खण्डकाव्यम् ) ले० श्रीसीतारामलालार्यः मुंगेर ( बिहार ) ।

३—श्रीकैवल्यचरितम् ( खण्डकाव्यम् ) ले० डॉ० व्यङ्कटराव कैङ्किणी ( बम्बई ) ।

४—श्रीविष्णुचरितामृतम् ( चित्रमहाकाव्यम् ) ।

५—श्रीरामविवाहः ( चित्रखण्डकाव्यम् ) ले० श्रीस्वामिलक्ष्मणशास्त्री, नागौर ( राजस्थानम् ) ।

६—विनोदिनी ( गीतिकाव्यम् ) ।

७—प्रेरणा ( गीतिकाव्यम् ) ले० श्रीरुद्रदेवत्रिपाठी, मन्दसौर ( मध्यभारतम् ) ।

निबन्धाः ७, समस्यापूर्तयश्च २८ आगता आसन् ।

एतद्वर्षीयसर्वविषयनिरीक्षकेषु निम्नलिखिता महानुभावा आसन्—

१—महामहोपाध्यायः पं० नारायणशास्त्री खिस्ते, काशी ।

२—महामहोपाध्यायः पं० के० यस० कृष्णमूर्तिशास्त्री, मदुरा ।

३—महाकविः श्रीमथुरानाथभट्टः, जयपुरम् ।

४—महाकविः श्रीबद्रीनाथ , दरभङ्गा ।

५—महामहोपाध्यायः कालीधरभट्टाचार्यः, कलकत्ता ।

६—महाविद्वान् श्रीजीवन्यायतीर्थः एम. ए., भाटपाडा ( बंगाल ) ।

७—महाविद्वान् श्रीजीवरामशास्त्री, गोण्डल ।

८—श्रीविद्याधरशास्त्री एम्. ए., बीकानेर ।

९—डॉ० उमस्नधर आचार्य एम्. ए., पुरी ।

१०—आचार्यनीलाम्बरघोष, गोहाटी ( आसाम ) ।

3

निबन्ध एकोऽन्योऽप्यागत आसीत् श्रीशङ्कराचार्यानुसन्धानविषयकः एतदर्थं श्रीचरणतीर्थमहाराजेन ९१ मुद्रा अपि दातुमासील्लिखिताः, परं तदर्थं या सामग्री अभिलष्यते स्म, तत्पूर्तिः साधारणी न मतेति, तदर्थं लेख नाभियाचिताः ।

इहैतत्कथनमावश्यकं यत्पुरस्कारप्रदानारम्भोऽसाधारणगाम्भीर्य्येणाभूदत ज्ञायते यत्कमलाकान्तपुरस्कारः संस्कृतभाषायाः सर्वश्रेष्ठः पुरस्कारो मंस्यते अहमेतदर्थं २९ सहस्रमुद्राणां निधिं सरकारे वा कस्याश्चित् संस्थायां स्थाप यिष्यामि । पाठकैर्ज्ञायते यदुत्तरप्रदेशे १ लक्षमुद्राणां कमलाकान्तकोषस्थापन स्यैकया महत्या समित्या प्रस्तावः कृतः । तत्कार्यमवलोक्यैव पुरस्कारनिधि स्थापनस्य प्रबन्धमहं करिष्यामि ।

द्वितीयः कमलाकान्तपुरस्कारो नाटके दास्यते । तत्र दशानाम नाटकप्रकरणप्रहसनभाणाडिमव्यायोगसमवकारवीथ्यङ्केहामृगाणां प्र० तथ प्रेक्षणकाद्यष्टादशोपरूपकाणां ग्रहणमस्ति । अत्र तान्येव नाटकादीनि गृही ष्यन्ते यानि १९४९ वत्सरस्य १ जनवरीत आरभ्य १९५२ वत्सरस्य ३ सितम्बरं यावत्प्रकाशितानि । प्रतियोगितार्थं केवलमक्टूबरमासे प्रत्येकनाटकस पञ्च पञ्च प्रतयो गृहीष्यन्ते ।

निवेदकः

पं. कालीप्रसादशास्त्री, संस्कृत-कार्यालय

अयोध्या ( उ. प्र. )

---

कलकत्तानगरे विदूषकस्य तेलुगुभाषायां भाषणमासीत् । तदा जनै "नैषा भाषा ज्ञायतेऽस्माभि"रिति कोलाहलः कृतः ।

विदूषकः—तद् भाषाज्ञानमन्तरा एतां सभां प्रति कुतो वा यूयमागताः किमियं हिन्दुस्तानसर्वकारस्य शासनसभा ? ।

× × ×

# सुरभारत्याः सर्वोपकारकत्वं सर्वोपजीव्यत्वं च ।

ले०—पं० वेंकण्णाचार्य मळिगी, बागलकोट

विधातृविनिर्मितेऽस्मिन्नूजगति कति नाम न सन्ति परप्रत्ययसाधनानि प्रमाणानि । केचित्करपल्लवविधया बोद्धव्यमर्थमवबोधयन्ति परान् । अपरे पुनर्ढक्कादिवाद्यवादनकौशलेन । परं तेषु निखिलेष्वपि साधनेषु प्रधानपदवीमनुभवति सेयं भारती नाम । या पुनरर्थं तथाविधमवगमयति, यत्र पङ्गु प्रत्यक्षं न पदं दधाति । यत्र च परभाग्योपजीवि नानुमानमपि प्रवेष्टुं शक्नोति । सा च भारती-प्रतिदेशं विभिन्नरूपा तांस्तानर्थान् परेभ्यः प्रतिबोधयन्त्यपि स्वमूलरूपेण संस्कृता-परनामधेयेन यावदुपकरोति परेषां न तावत्केनापि रूपान्तरेणेति निर्विशङ्कमभिधातुं शक्यते । सा पुनः सुरभारती परभाषानिरपेक्षैव त्रेधा समुपदिशति भावुकान्, प्रभुसम्मिततया सुहृत्संमिततया कान्तासम्मिततया चेति । प्रभुस्तावत्प्रधानं फलम-प्रकाशयन्नेव भृत्यमादिशति अरे त्वमेवं कुर्वीथा इति । तदनु । तथा साधुतदनुष्ठितमकपटं कर्म समीक्षमाणः समुचितमस्य फलं संविभजते । विपक्षे विप्रियमनु-सन्दधान एव तस्मादपथात्परावर्तयति रे मैवं कुर्वीथा इति । एवमेव सा भगवती सुरभारती श्रुतिस्मृतिरूपतया राज्ञीवाज्ञापयति सत्यं वद धर्मं चरेत्यादिना । विप्रतिषिद्धाच्च निवारयति भावुकान् न सुरां पिबेन्नानृतं वदेदित्यादिना । सुहृत्सम्मिततया तु इतिहासमुखेन धर्मादीनामिव विहिताचरणेन शुभोदर्कं धार्तराष्ट्रादीनामिव प्रतिषिद्धाचरणेन चाशुभोदर्कं पुराणादिरूपतया प्रतिपादयति । परं तत्र धर्मनीतितत्वाद्यवबोधनजटिलया परिपाट्या परिणतबुद्धीनामेव प्रतीतिः न सुकुमारमतीनां विनेयानां सुखेनेति । कान्तासम्मिततया तु रसरीतिध्वनि-गुणालङ्कारबन्धुरेण ललितेनोपदेशक्रमेण हृदि विनेयानां कमपि प्रमोदोल्लास-मङ्कुरयन्ती समुपदिशति भगवती सुरसरस्वती काव्यनिलयमधिवसन्तीति । न पुनरेवं प्रतिदेशं देशभाषारूपेण सञ्चरन्ती स्वतन्त्रतया त्रेधा समुपदेष्टुं कथं

चिदुपदिशन्त्यपि न, नाम, नानुसरति स्वमूलभूतां सुरभारतीम् । यो यो विषयस्तत्तद्देशभाषाया विधीयते अभिधीयते विकल्प्यते विप्रतिषिध्यते च स तावत्सुरभारत्या गृहीतमुक्त एव, न, पुनरनुच्छिष्ट इत्यहो महिमा भगवत्याः । नैतावानुपकारः कयाप्यन्यया वाचा भावुकानाम् । इयं हि सुरभारती, कमपि नाम विषयं न विस्पष्टं प्रतिपादयति । सूक्ष्मेक्षिकया विचार्यमाणे चतुःषष्टिकलाः पुनरिमामेव मातरं शिशव इव समवलम्बन्ते । तथा हि भगवान् विधाता जगदेतदखिलं चेतनात्मकमुत्पाद्य निखिलमचेतनं चेतनार्थमेव निर्माय, जनकः धनकेदारादिरूपं जीवनहेतुं सम्भारं सञ्चित्य पुत्रस्येव सकलस्य चेतनात्मकः प्रपञ्चस्य परिपोषाय निःश्रेयसाय च तांस्तानर्थान् अवबिबोधयिषुः तास्ता सुरभारतीमया विधा निर्ममे । पिता हि स्वजन्मभाषयैव लोके व्याहरति शिक्षयति च सत्पथमात्मजान्, तस्या एव बहुतरमभ्यासात् । न पुनरन्यया । एवमेव देवशिखामणिः स्रष्टा निजनिर्मितचेतनजातं स्वयैव देववाण्या बोधयामासेति नूनं युक्तिरेत्र सुरभारत्या मूलरूपतां समर्थयति । लोके सृष्टस्य चेतनजातस्य प्रायो नैकविधानि सम्पद्यन्ते विपज्जालानि । तानि च नैकरूपेण साधनेन निवर्तन्ते । ततो विपदपहरणकाङ्क्षिणा विधिना तत्तदापन्निवृत्तिसाधका विभिन्नरूपा बहवो विषया वक्तव्यतामापतिता इति चतुर्भ्योऽपि मुखेभ्यः सर्वा विद्या उत्पादयामास । तथा हि आध्यात्मिकं विषयमधिकृत्य ऋगादीन् तदर्थनिर्णायिकास्तन्त्र विद्याः । व्याधिशतसङ्कुलं लोकमवेक्ष्य तन्निवर्तकं निदान, चिकित्सा, द्रव्यगुणदोषपरीक्षण, रसविधान, शस्त्रक्रिया, समुचितवर्तन, पथ्यादिविधायकम् आयुर्वेदं, दुष्टनिग्रहं शिष्टपरिपालनमन्तरेण नाभ्युदयमभ्योति जगदिति तत्साधनाभिधायकं धनुर्वेदं, विविधवैदिकलौकिकव्यवसायपरिक्षिप्तहृदयानां मनः समुल्लासाय चालसताविक्षेपाय च श्रुतिविनोदाय च गान्धर्ववेदं, लौकिकीं सम्पदमुद्रेचयितुं विपुलरसायनपरिज्ञानं शिल्पकलावैभवं च व्यञ्जयितुं तथा विधार्थप्रतिपादकं स्थापत्यं वेदं च । प्रजा माभूवन् उत्पथवर्तिन्यः किं नाम सत्पथमनुवर्तमानाः सत्कारमर्हन्तु इति सुपथसुपथप्रवृत्तिजुषां तासां सत्कार

शासनविषये दण्डनीतिं चेत्याद्या बहुविधा विद्याः समुदभावयत् । तदेवं विपुलान् विषयान् अभिदधाना भगवती गैर्वाणी वाणी विविधविद्यारूपतामभ्युपेत्य लोकानामुपकर्तुं विधिवदनकुहरान्निःसृतेति मूलमियमेव सर्वासां कलानां परेषां भाषितानां चेति निर्विशङ्को राद्धान्तः । यथोक्तम् 'आयुर्वेदं धनुर्वेदं गान्धर्वं वेदमात्मनः । स्थापत्यं चासृजद्वेदं क्रमात्पूर्वादिभिर्मुखैरि'त्यादि । आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च सत्तमेत्यादि च । सेयं भगवती सुरभारती तत्तच्छास्त्रीयं विषयमधिकृत्य प्रणीतैः सरसतमैः बहुविधैः प्रबन्धैः श्रीकृष्णमूर्तिरिव विश्वरूपतां प्रत्यपद्यत । अध्यात्मविद्यायां तत्तदाचार्यप्रभृतिभिर्विरचिताः सुबहवो निबन्धा विद्योतन्ते । आयुर्वेदे च चरकसुश्रुतप्रभृतयश्चिरन्तना अर्वाचीनाश्च वाग्भटादयः । प्राक् प्रदर्शितमपि धनुर्वेदरूपं विश्वरूपमिदानीमुपसंहृतं भगवत्या । गान्धर्वे च भरतशार्ङ्गधरप्रमुखनिर्मिता ग्रन्थाः । स्थापत्ये चागस्त्यसंहितादयः । यत्र किल यन्त्रमयहयमतङ्गजविमानादिनिर्मितिप्रकारः प्रदर्शित इति श्रूयते । दण्डनीत्यादयो हि कौटिल्यार्थशास्त्रमहाभारतादिषु सुनिपुणं प्रतिपादिता इति प्रत्यक्षमक्षरसुखानाम् । भगवान् श्रीकृष्णोपि शाधि मां त्वां प्रपन्नम् इति प्रपत्तिमुपगतं किल पार्थमात्मानमाविर्भावयामास विश्वरूपेण । यदा च तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते इति परिभीतः दिव्यदृष्टिः पार्थः प्रार्थयामास भगवन् अयि तदेतदुपसंहर । एवमेवेयं भगवती नैकविधनिबन्धरूपेण विततमिदं विश्वरूपम् अन्यान्यसंस्कारपटलविहितस्वसंस्कृतिदृष्टिभाजां तदवलोकनालसविकलमानसानां मानवानां दृष्टिपथात्क्रमेण तिरोबभूव । क्वापि कोणकुहरे समुल्लसन्त्यपि क्रमेण स्वात्मानमनादरपरिभूता तिरोभावयिष्यतीत्यपि विषादो नः । तत्र तत्तिरोभावसमुद्भूतेयम् अस्मदीयदेशस्य सैषा दुर्दशेति नास्ति स्तोकोपि सन्देहः । यथा यथेयं मूलरूपैव भगवती सादरं सोत्साहं सप्रमोदं च पुरातनैरसेव्यत, तथा तथा का पुनरनया न्यूनता न पर्यहारि । कीदृशं वा वैभवं नोदपादि । अधिमतार्थान् लोकान् विदधानया किमिव नाम सुखं न

निरमायि । अत्र पुनरेतस्याः परामभ्युन्नतेः काष्ठां प्रदर्शयन्नितिहास एव विजयनगरसाम्राज्यादेः प्रमाणम् । इयं किल त्रेधा समुपदिशतीत्यवोचाम, तत्र इतिकर्तव्यताभागं मीमांसा पूरयिष्यातीति तत्र परिणतबुद्धीनामेव गहनतरविचारावगाहनक्षमता निर्णयचतुरता चोपलभ्यते, न सुकुमारतीनाम् । एवं किल वैदिका आश्मिका इव निष्ठुरतरटङ्कप्रहारेण प्रस्तराकरं कर्कशतरविरसविचारशतेन श्रुतिस्मृतिसूत्रादिरहस्यं प्रभेत्तुं समर्था न पुनरितरे विनेयाः सुकुमारमतयः । तेषां हि मनसि विरसतामनुत्पादयत्, उत्साहाङ्कुरमनुच्छिन्दत्, परमानन्दसन्दोहमुदन्वयदेव काव्यमव्याहतमेव सुपथप्रवृत्तिं सार्वत्रिकीं च प्रतीतिं कान्तेव भावोदयद्युतिसमुल्लसितेन रसभरसमुद्भासिना मञ्जुलेन वचनेन सम्प्राययति । अत एवास्याः सहित्यविद्येति सार्थकं नाम । आत्राहुः सहितस्य भावः सहित्यमिति । तच्च अष्टादशभेदभिन्नानां विद्यानाम् । विद्याश्च चत्वारो वेदाः षडङ्गानि शिक्षाकल्पप्रभृतीनि । मीमांसा, न्यायः, धर्मशास्त्रं, पुराणानि, आयुर्वेदः धनुर्वेदः गान्धर्ववेदः स्थापत्यवेदः इत्यष्टादशभेदभिन्नाः । तथा च तत्तद्विद्यासाहित्यं सहृदयहृदयाल्हादकतया तत्तद्विद्याविषयप्रतिपादकत्वेनेति फलति । ये तु तत्तच्छास्त्रीयप्रक्रिया विशेषनिर्णीतविपुलविषयसम्भारसम्भृता अपि ललितमधुरैः विनेयमतिवेदनीयार्थदर्शकैः वचननिचयैरसुगमं विषयमापि लौकिकदृष्टान्तोपदर्शनादिना सुगमीकृत्य सुकुमारमतीनां मतिमाकर्षितुं प्रभवन्ति त एव नूनं महाकवयः । अत एवाह भामहः । न स शब्दो न तद्वाच्यं न स न्यायो न सा कला । जायते यत्र काव्याङ्गम् अहो भारो महान् कवेरिति । वाग्भटालङ्कारेपि अधीत्य शास्त्राण्यभियोगयोगात् अभ्यासवश्यार्थपदप्रपञ्चः । तं तं विदित्वा समयं कवीनां मनःप्रसत्तौ कवितां विदध्यादिति । एवं हि नाम काव्यकरणे साहित्यमुपस्कृतं भवति । साहित्यरसिका हि ललितललितैः रसभरोद्वहनश्रमभरेणेव मृदुपदविन्यासंसुभगैः उदारैरिव विपुलार्थानन्दितविबुधलोकैः नवयुवतिजनैरिव विविधभावोद्गमरुचिरैः सूक्तिनिचयैः सामाजिकलोकहृदयं हयमिव रश्मिजालेन

सुपथं क्षणादेव परिवर्तयन्ति । तदेवं विनेयजनमनोविनोदनैककार्यं साहित्यं तत्तच्छास्त्राधिगमवेद्यमर्थमपि रमणीयया सरण्या सरसमुपदिशत् कस्य वा चेतसो नादधाति मुदम्। विभावानुभावादिविशेषपरिज्ञानेन रसमनुभवताम् अस्तु नाम चेतः परमानन्दतुन्दिलम् । नैतच्चित्रम् । तदेतदजानन्तो ग्राम्या अपि सुरुचिरकविकृति-श्रवणेन स्वानुभवैकवेद्यं कमपि सुखविशेषमनुभवन्तो भूयोपि तच्छ्रवणकुतूहलेन काव्यरसाभिज्ञजनमनुसरन्ति । तं तदर्थं प्रार्थयन्ति चेत्यनुभववेद्यमिदमस्माकम् । यथा खलु स्वरविशेषसंयोजनप्रक्रियां, विभिन्नेषु रागेषु स्वरविशेषवर्ज्यावर्ज्यत्वादि-रूपां च तत्प्रक्रियामनवबोधन्तोपि रुचिरस्वरावर्जनललितं लयानुबन्धिग्राममूर्छना-समुल्लसितं कलं गीतम् आकर्ण्य तल्लीनमनोभिनिवेशा लोका गायकाननुकुर्वन्तः स्वमूर्धानमान्दोलयन्तः लयानुबन्धावतारे च समधिकं, साधु, साधु, इति प्रमोदपरवशेनोद्गिरन्तः केवलं करतलेन वा पादाङ्गुलिसङ्घट्टनेन वा परिगणित-मात्राविशेषनिर्दिष्टं तालं विरामं च दर्शयन्तः परिस्फुरता पुलकेन, उद्गलता प्रमोदबाष्पबिन्दुना मुहुरङ्गविशेषसञ्चलनेन च स्वानुभवमात्रवेद्यमानन्दविशेष-माविर्भावयन्ति । तथैव साहित्यरसास्वादमनुभवन्तः सविशेषपरिज्ञानविकला अपि कमपि सुखविशेषमनुभवन्तोऽनुमीयन्ते, किं पुनारसविशेषाभिज्ञा इति । ये तु साहित्यसंगीतमर्मज्ञास्ते कलाविकलमपि जगदेतदखिलं वशे कर्तुं प्रभवन्ति नान्ये । तदेवं तर्ककर्कशविचारनिर्भरकृतपरिश्रमान् पण्डितप्रकाण्डान्, पुराणपथप्रवीणान् विदुषः, सुकुमारमतिविलासलोलान्, विनेयांश्च त्रेधा समुपदिशन्ती तांस्तान्विषयान् भगवती सुरभारती कस्य नाम नोपकुरुते लोकस्य ।

किं च देशभाषाविरचिता महाकाव्यप्रबन्धा यद्यपि सरसतमा अनु-बोभूयन्ते । तथापि ते सुरभारतीसमुपजीवनमन्तरेण न पोषयितुं प्रभवन्ति स-विशेषं सहृदयहृदयाल्हादकताम् इति वचनं नातिशयोक्तिपदमधिशेते। सुरभारती-समावेशेनैव हि ते समधिकं चमत्कृतिं पुष्णन्ति । अत एव पम्पहोन्नरन्न-राघवाङ्करुद्रभट्टषडक्षरिलक्ष्मीशविरूपाक्षकुमारव्यासकुमारवाल्मीकिप्रभृतयः कर्ना-

टकभाषामहाकवयः स्वकवितासु चमत्कृतिजनकताजीवातुभूताम् इममेव भगवतीं सादरं समाशिश्रयिरे । तदेव दिङ्मात्रमिह प्रदर्श्यते । अत्र मालोपमया लक्ष्मीशः महाकविः सरो वर्णयति जैमिनीये महाकाव्ये वार्धकषट्पदीवृत्तेन ।

निरुतं कुमुदशोभि नैऋत्यदन्ते वानरसैन्यदन्ते कमलोदरोद्भासि भासुरशुक्लपक्षदन्तहितत्पदन्ते कविसेवितं गगनदन्ते । धरणिपालयदन्ते सुमनोहं निशाचरवंशदन्ते मालाकारजनदन्ते, हरिजन्मभूमि गोकुलदन्ते वनदन्ते तत्सं कंगोळिसितु ॥ १ ॥

अलिय बर्गवनादरिसुत मित्रस्नेह-दोळे संदु सुतरंगलीलेयं लालिसुत-कुल सदभ्युदयमं नेलेगैय्दु कांतानुकूलरमणीयमागि ॥ ललितलक्ष्मीनिवासस्थानमेनिसि मंगळविभवकेडेगोट्टु सकलसौभाग्यमं, तळेद संसारिकनतेरदिंद विमलपद्माकं कण्गेसेदुदु ॥ २ ॥

अत्र श्लेषोज्जीविता पूर्णोपमा ।

कलहं समाकीर्णमागिर्दु काळगद, कळमल्ल विषभरितमागिर्दु सर्पसंकुलमल्ल कुमुदयुतमागिर्दु खळरंतरंगदाळापमल्ल ॥ अळिदुदुळिदु भंगमयमागिर्दु सुरिद नृपदळमल्ल बहुविचारस्थानमागिर्दु, तिळियलुपद्रवस्थलमल्ल मेनिसुदाविमळ सरसि कण्गे ॥ ३ ॥ इत्यादि ।

अत्र विरोधाभासः व्यक्तः । तदेवं चमत्कृतिजनकताऽस्याः कवितायाः अचितः चित्संवलनेनेव सुरभारतीसंवलनेन समुद्भासते । अनितरसाधारणमथौचित्यं चेत्यतिरोहितमेव विपश्चितामिति नूनमियमेव भारतीनामितरसामुपजीव्येति च सर्वैः सादरमासेवनीयेति इति मंगलम् ।

यद्यप्यत्र विशेषणार्थस्य कुमुदशोभित्वादेरुपमानोपमेययोर्विद्यमानस्य विभिन्नरूपतया न साधारणधर्मता, तथाप्येकपदप्रतिपाद्यत्वनिबन्धनाभेदाध्यवसायेन तत्त्वेन अभिमानविषयतेति शब्दार्थश्लेषाद्युज्जीवनस्थले आलङ्कारिकैरङ्गीकारात् उक्तं ( तथा त्वं ) युज्यते इति ।

---

# सत्याग्रहकथा

## अथ चतुर्थोऽध्यायः

ले०—वेदान्तरत्न श्री ओड्लमने पाण्डुरङ्गशास्त्रिणः
अंकोला–कारवार

वेलां सिन्धुस्तथा सोऽपि भङ्क्तुं तानुपचक्रमे ।
लोकाग्रणीन् गान्धिमुख्याञ्जनानन्यान् बहून् बत! ॥ ४४ ॥

स्त्रियो बालांश्च वृद्धांश्च क्रोधनष्टविवेकिनः ।
बध्वा संस्थापयन्ति स्म कारागारेऽधिकारिणः ॥ ४५ ॥

अथाहूय वणिङ्मुख्यान् मुम्बाप्रान्ताधिपः स्वयम् ।
प्रवर्तितानॉर्डिनन्सानुल्लिख्य नियमांस्तथा ॥ ४६ ॥

'तद्बलात्प्रतिबद्धास्ते येऽधिकारिविरोधिनः ।
निष्प्रत्यूहेन भवतामुद्यमः प्रचलत्विति ॥ ४७ ॥

कोशाधिकारेण विना सैन्यस्वामित्वमन्तरा ।
भवद्भ्यो ह्यचिरादेव दास्यमानस्य सर्वथा ॥ ४८ ॥

सर्वप्रान्ताधिकारस्य प्रत्यूहो मा भवत्विति ।
बन्दीकृता गान्धिमुख्याः' इति साटोपमब्रवीत् ॥ ४९ ॥

मध्यवर्त्यधिकार्याद्याः क्षिप्त्वा कारागृहे जनान् ।
अहो ? कर्तुं समीहन्ते सत्याग्रहनिरोधनम् ॥ ५० ॥

न हि कुक्कुटमाच्छाद्य भानूदयनिरोधनम् ।
विधातुं शक्यते नैतज्ज्ञायते कृतिमानिभिः ॥ ५१ ॥

व्यक्तेर्बन्धनमात्रेण तद्विचारो न बध्यते ।
जना जानन्ति सर्वेऽपि हितं चाप्यहितं च यत् ॥ ५२ ॥

एवं सति तदाकाङ्क्षापूरणं त्वधिकारिभिः ।
सत्येवं राजप्रजयोर्नूनं क्षेमतरं भवेत् ॥ ९३ ॥

तथापि प्रबलो लोभः कलिना च प्रचोदितः ।
तदाकाङ्क्षापूरणे तु निरुणद्ध्यधिकारिणः ॥ ९४ ॥

ततोऽङ्कोलाख्यनगरे देशभक्तजनावृते ।
अनेकाढ्यजनाकीर्णे राजनीतिविशारदे ॥ ९५ ॥

श्रीशालिवाहनशके ( १८९३ ) रामबाणेभभूमिते ।
प्रजापतौ पौष्यसिते सप्तम्यां भृगुवासरे ॥ ९६ ॥

श्रीशालिवाहनशके ( १८९४ ) श्रुतीषुवसुभूमिते ।
वर्षेऽङ्गिरसि चैत्रे च पौर्णिमायां बुधे दिने ॥ ९७ ॥

सत्याग्रहिभिरारण्यनियमाः खण्डितास्ततः ।
राजदूताः कांश्चिदेव बध्वा कारागृहेऽक्षिपन् ॥ ९८ ॥

मुम्बापुर्यां वङ्गदेशे गुर्जरे मद्रपत्तने ।
पुण्याभिधे पत्तने च श्रीकाश्यां भारतेऽखिले ॥ ९९ ॥

सत्याग्रहमकुर्वंस्ते ये सत्याग्रहदीक्षिताः ।
धीराः शान्ताः स्वदेशैकभक्ता देशहिते रताः ॥ ६० ॥

भयसीम्नो हि मृत्योर्ये न बिभ्यन्ति कदापि हि ।
कथं ते राजयोधेभ्यो भेष्यन्ति धृतिशालिनः ॥ ६१ ॥

स्त्रियो बालांश्च वृद्धांश्च यूनः सत्याग्रहे स्थितान् ।
तत्र प्राप्तान् जनानन्यान् सत्याग्रहदिदृक्षया ॥ ६२ ॥

श्वबृत्याप्तधनैस्तुष्टा ये निरक्षरकुक्षिणः ।
क्रूरा राजभटा दण्डैर्लोहकीलसुकीलितैः ॥ ६३ ॥

उत्तमाङ्गेऽसयोर्भाले ग्रीवायां च तथोरसि ।
इत्यादिसन्धिस्थानेषु मर्मस्थानेऽपि निर्घृणाः ॥ ६४ ॥

प्रहरन्ति स्म नलिकायन्त्रतो नागगोलकैः ।
ततस्ते क्षतसर्वाङ्गा मूर्च्छिता अभवंस्तदा ॥ ६५ ॥

क्षताङ्गान्निसृतं रक्तं तस्माज्जातं महत्सरः ।
पूतिगन्धस्तु संव्याप्तः समन्तात्क्षतरक्तजः ॥ ६६ ॥

पञ्चत्वमापुर्बहवो यूनो वृद्धाश्च बालकाः ।
बन्दीकृता लक्षशोऽन्ये स्त्रीबालस्थविरादयः । ॥ ६७ ॥

एवं जातोऽस्ति सर्वत्र हाहाकारो हि भारते ।
अत्युद्विग्ना जना जाता नूनं दुःखितमानसाः ॥ ६८ ॥

स्वदेशीयानेव घ्नन्ति ये भटाः स्वार्थसिद्धये ।
स्वजनद्रोहिणो ज्ञेयाः स्वदेशद्रोहिणस्तथा ॥ ६९ ॥

भारतीयाश्च पाश्चात्या येऽत्राजौ जयशालिनः ।
भविष्यन्ति च तैस्ते हि नूनं यास्यन्ति त्याज्यताम् ॥ ७० ॥

स्वजनेभ्यःस्वार्थबुद्ध्या ये द्रुह्यन्ति कथं न ते ।
द्रोहयिष्यन्ति चान्येभ्य इत्यालोच्याधिकारिणाः ॥ ७१ ॥

पाश्चात्यास्तांश्च त्यक्ष्यन्ति द्रोहिणोऽप्यधिकारिणः ।
स्वजनद्रोहकारित्वाद्भारतीया अपि स्म तान् ॥ ७१ ॥

त्यक्ष्यन्ति भविता तेषां त्रिशङ्कुस्वर्ग एव च ।
स्वजनद्रोहजन्यं तत् फलं भोक्ष्यन्ति ते खलु ॥ ७३ ॥

अथ प्रसङ्गाद्वक्ष्यामि पौत्र! सत्याग्रहान्तरम् ।
प्रवर्तन्ते त्वनुचिते कलिदोषवशाज्जनाः ॥ ७४ ॥

वर्णाश्रमव्यवस्थायां तद्धर्मे शास्त्रचोदिते ।
श्रद्धाहीनाः कालदोषात् सञ्जाताःसङ्करप्रियाः ॥ ७५ ॥

या राष्ट्रीयसभा नाम तस्या आद्यप्रवर्तकैः ।
राजकीयविचारैदम्पर्येणैव प्रवर्तिता ॥ ७६ ॥

गान्धिमुख्यैराधुनिकैस्तस्यां स्वातन्त्र्यवादिभिः ।
'चाण्डाला नूनमस्पृश्याः' इति शास्त्रेण चोदितम् ॥ ७७ ॥
आचारसिद्धं लोकेऽपि तेषां तैः सङ्करप्रियैः ।
अस्पृश्यतावारणाद्यधार्मिको विषयोऽपि च ॥ ७८ ॥
निवेशितःसङ्घशक्तिवृद्धिव्याजाद्युगैरितैः ।
तथाच राष्ट्रीयसभाधिकारिजननोदिताः ॥ ७९ ॥
प्रवेष्टुमुत्सुका जाताश्चण्डालाःसुरमन्दिरम् ।
तत्रादौ पुण्यनगरे पर्वते सुरसद्म यत् ॥ ८० ॥
सत्याग्रहं चक्रिरे च चण्डलाःप्रविविक्षवः ।
तथैव नाशिकक्षेत्रे कालरामाख्यमन्दिरम् ॥ ८१ ॥
तथैव श्रीरामकुण्डं पवित्रं पापनाशकम् ।
सत्याग्रहं च चण्डाला अकुर्वन् प्रविविक्षवः ॥ ८२ ॥
वरितास्तत्र तत्रैते देवस्थानाधिकारिभिः ।
ते सनातनधर्मीयाःश्रद्धावद्भिश्च सर्वथा ॥ ८३ ॥
शास्त्रेष्ववश्यं तैर्भाव्यं शास्त्रोक्तमनुसृत्य च ।
अवश्यं वर्तनं कार्यमन्यथा ते ह्यधर्मिणः ॥ ८४ ॥
येषां शास्त्रेषु विश्वासो नास्ति ते नास्तिकाःखलु ।
शास्त्रेऽन्त्यजानां प्रवेशःसुरगेहे निषिध्यते ॥ ८५ ॥
न श्रद्धया न भक्त्या ते प्रवर्तन्ते सुरालयम् ।
किन्तु ध्वंसयितुं जन्मसिद्धवर्णव्यवस्थितिम् ॥ ८६ ॥
अपौरुषेयवेदोक्ताश्रमधर्मव्यवास्थितिम् ।
यदि देवे च भूदेवे शास्त्रे चास्तिकाधीस्तथा ॥ ८७ ॥

( क्रमशः )

# प्रदीप्तः कूर्चिकाञ्चलः

लें०—नाथः

पुरा कलकत्तापट्टणे एकः सुधारणाव्यसनी श्रीमान् मनुष्यः आसीत् । सः तत्र नवीनं यत् तद् वस्तु विक्रीणाति । सर्वाणि अपि नवनवीनवस्तूनि आनीय गृहे स्थापयति । तदुपयोगं च यथामति करोति । एकदा सः एकस्मिन् आपणे धूमवर्तिकाः ( सिगारेट ) अपश्यत् । विक्रीय गृहमाजगाम । एवं क्रमेण तस्य धूम्रपानव्यसनमेव अभूत् ।

एकदा सः क्षेत्रनिरीक्षणाय ग्रामं गतः । तत्र स्वगृहस्य एकस्मिन् कोणे उपविश्य धूम्रपानं कर्तुं प्रारभत । तदा तत्र गर्भगृहे सर्वत्र धूमः व्याप्तः बभूव । तं च धूमस्तोमं दृष्ट्वा भृत्याः भयभ्रान्ता अभूवन् । एकः सेवकः गर्भगृहे आगतः । यजमानस्य मुखाद् निर्गच्छन्तीं धूमलेखाम् अपश्यत् । तदा सः 'अहो मम स्वामिनः कूर्चिकाकलापे अग्निपातः समभवत् । नोचेत् विनाग्निं धूमः कथम् । यत्र यत्र धूमः तत्र तत्र अग्निः । अतः अवश्यं मम स्वामिनः कूर्चाञ्चलः अग्निना कवलितः भवेदिति निश्चित्य तद्वन्हिप्रशान्तये सत्वरं सजलं घटमानीय यजमानस्य मुखे नीराभिषेकम् अकरोत् । तदा शीतलजलस्नानेन वेपमानः यजमानः 'अरे किमेतादिति अपृच्छत् । तदा सः 'महाराज, तव 'वह्निज्वालावलीदत्वात् कूर्चानां धूम आनने' इति उक्त्वा पुनरपरं नीरपूरितं घटम् उदतोलयत् । धाराकारेण शीतसलिलम् अभ्यवर्षत् । तस्य मूर्खतां दृष्ट्वा क्रुद्धोपि यजमानः पातं पातं जहास ।

---

# अहं ब्रह्माऽस्मि ।

भाद्रपदशुद्धचतुर्थी । सर्वेऽपि जना गणपतिं पूजयन्ति । गणेशभ[illegible] अपि वक्रतुण्डस्य एकां प्रतिमाम् आनीय पूजां करोति । नैवेद्यार्थं मोदका[illegible] गणपतेः पुरतः स्थापयति । तदा एकः मूषकः मन्दं मन्दं तत्र आग[illegible] मोदकांशं खादति । तदा गणेशभट्टस्य महाश्चर्यं भवति । 'अहो देव[illegible] कृते मया इदं स्थापितम् । देव एव मया मन्त्रेण आहूतः । आव्हानश्[illegible] एव आगत्य मोदकखण्डान् खादति । अतः मूषक एव महादेवः । अयं[illegible] मया पूजनीयः अर्चनीयः वन्दनीयश्च' । इति विचारं कृत्वा मूषकारा[illegible] सः समारभत ।

ततः एकस्मिन् दिने सः मूषकः केनापि मार्जारेण गृहीतः मारि[illegible] खादितश्च । तद् दृष्ट्वा गणेशभडजी 'अहो मार्जार एव देवः' इति निश्[illegible] बिडालोपासनां प्रारब्धवान् ।

एकस्मित् दिने स मार्जारः अपि केनापि शुना गृहीतः । तद् दृष्[illegible] सारमेय एव देवदेवोत्तम इति सारमेयसेवाम् अङ्गीकृतवान् गणेशभट्टः ।

एवम् 'साक्षाद् भर्गः शुनाकृतिः' इति अत्यन्तभक्तिभावेन आरा[illegible] मानः स भषकः एकस्मिन् दिने गृहान्तः प्रविश्य भक्ष्यान् भोज्यान् तथा लेह्या[illegible] आस्वादितवान् । तदा गणेशभट्टस्य गृहिणी तद् दृष्ट्वा क्रुद्धा कालसर्पि[illegible] फूत्कुर्वन्ती लकुटेन भषकं प्राहरत् ।

तदा गणेशभट्टः पत्नी एव परमेश्वर इति ज्ञात्वा प्रेयसीपूजामेव प्रारभत[illegible] भार्यामेव ब्रह्मेति भावयित्वा भामिनीभक्तिम् अकरोत् ।

एकस्मिन् दिने भोजनसमये चवर्णसमये अन्ने बहवः शिलाखण्[illegible] आगताः । दन्तोत्पाटनमेव जातम् । क्रुद्धः गणेशभट्टः भार्याम् ताडितवान् ततः सः ब्रह्मभूतामिमां ताडयन् अहमेव ब्रह्म । ईश्वरोहम् । सोऽहम्[illegible] निश्चयम् अकरोत् । केवलम् 'अहं ब्रह्मास्मीति आत्मोपासनां प्रारभत ।

---

# अनुव्याख्यान ।

## मङ्गलमहोत्सवः

परमहंसपरिव्राजकाचार्याः श्री १०८ श्री श्रीसत्यप्रमोदतीर्थयतिसार्वभौमाः मासद्वयं यावत् धारवाडनागरिकान् अनुव्याख्यानसुधां कृपया पाययामासुरिति हन्त सौभाग्यं धारवाडनगरीनिवासिनः आस्तिकवृन्दस्य । श्रीमदानन्दतीर्थभगवत्पादानां सर्वग्रन्थेष्वपि मूर्धमणीयमानं सूत्रकृता भगवता बादरायणेन प्रणीतानां ब्रह्मसूत्राणां श्रुतिसंवादि, स्मृत्यनुसारि, उपनिषदविरोधि, श्रीगीतानुमतं, प्रमाणप्रमितं च हार्दमाविष्कुर्वदेकमात्रव्याख्यानम् 'अनुव्याख्यान' नामकं सुविख्यातं ग्रन्थरत्नं श्रीमज्जयतीर्थविरचितन्यायसुधोक्तदिशा न्यरूरुपन् सरसया सरलया सुन्दरया सुधामुचा वाचा वाचस्पतिप्रतिमाः श्रीमदुत्तरादिमठाधीशाः सर्वतन्त्रस्वतन्त्राः तीर्थीक्रियमाणतीर्थाः स्वामिपादाः । कठिणात्कठिणतरमप्येतद् ग्रन्थरत्नं सरलात्सरलतमया हृदयङ्गमया च रीत्या आबालाङ्गनं सर्वानपि समवबोधयताममीषां यमीश्वराणां वाग्वैखरीमनुवादचातुरीं प्रवचनपाण्डितीं च दृष्ट्वा मुग्धाः खलु विदग्धाः मुदिताः किल मन्दधियोऽपि । सन्तृप्ताः सन्तुष्टाश्च तत्वबुभुत्सवः । अस्मिन्नपि नास्तिकयुगे निरीश्वरवादिनां पाखण्डिनामपि देवद्वेषि धर्मद्रोहि च मनः धर्मप्रवणं वेदान्ताभिमुखं सिद्धान्तानुकूलं च कल्पयतामेतेषां यतिकुलशिखामण्डनमणीनाम् न केवलं 'वाचमर्थोऽनुधावति' किन्तु 'अर्थं लोकोऽनु धावति' ।

अन्तिमदिने च अनुव्याख्यानग्रन्थस्य मङ्गलमहोत्सवः महता उत्साहेन बृहता वैभवेन च निर्वृत्तः । दूरदूरदेशेभ्यः सर्वशास्त्रपारदृश्वानः पण्डितपुण्डरीका भूयांस एव श्रीस्वामिपादानामनुव्याख्यानसुधानुवादसुधामास्वादयितुमुत्साहेन उपस्थिता आसन् धारवाड, हुबळी, बेळगांव, बेंगळूर, बागलकोट, हैदराबाद,

सांगली, मुम्बै प्रभृतिपट्टणेभ्यः। बहव एव भावुकजना सुधानुवादशुश्रूषयाऽऽगत्य सहस्राधिकसङ्ख्यायामापूरयामासुः सभामण्टपम् । तदा च तस्मिन् मङ्गलमये प्रभातसमये कर्मन्दिवृन्दवृन्दारकाः श्रीसत्यप्रमोदतीर्थस्वामिपादाः प्रावृडम्बुधराडम्बरविडम्बिना स्निग्धगम्भीरेण ध्वनिना अनुव्याख्यानानुवादं प्रारभन्त । तद् ग्रन्थस्य मुख्यमुख्यभागानुद्धृत्य सरसशैल्या अनूद्य श्रीमदानन्दतीर्थभगवत्पादानां तद्ग्रन्थस्य तत्सिद्धान्तस्य च महतीं वैशिष्ट्यम् औत्कृष्ट्यं प्रमाणप्रमिततां च प्रादर्शयन् प्रत्यपीपदंश्च । सर्वज्ञाचार्याणाम् आगमप्रामाण्यप्रतिपादनपरस्य 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि' इति वाक्यस्य अनेकरीत्या योजनां विधाय बहुलार्थगर्भिततां प्रदर्श्य श्रीजयतीर्थमुनीनाम् 'अनुव्याख्याननलिने चञ्चरीकति मे मनः' इति प्रारम्भिककथनस्य याथार्थ्यं साधु समुपादर्शयन् चारुचतुरिम्णा प्रवचनपटिम्ना च ।

सायंकाले च धारवाडनगरे श्रीविट्ठमन्दिरे प्रचण्डसभायां घण्टाद्वयं यावत् अस्खलितरीत्या निरर्गलवाण्या पूर्णप्रज्ञमतस्य सर्वोत्तमत्वं समुपान्यस्यन् । विशालेऽपि सभाङ्गणे अलब्धप्रवेशावकाशाः सहस्राधिका एव जनाः वीथीषु भवनाग्रेषु च स्थित्वा वागुपबृंहण ( लौडस्पीकर ) यन्त्रमुखान्तरेण दूरादपि सम्पूर्णं श्रीस्वामिपादानां भाषणमविकलमाकर्ण्य प्रमुदिताः कृतकृत्याश्च अभूवन्। ततः पौरजनैः ससम्भ्रमं महती एव नागरराजमार्गेषु प्रचण्डशोभायात्रा प्रवर्तिता । नगरोपकण्ठे सर्वेषामपि शिष्याणां मन्त्राक्षतवितरणं विधाय आशीराशिभिरनुगृह्य गुरुविरहवेदनाविव्हलान् उद्बाष्पपक्ष्मणः सर्वानपि स्वभक्तजनान् 'पुनरागमिष्यामः' इति समाश्वास्य सान्त्वयित्वा पुनरामन्त्र्य सीमोल्लङ्घनमकार्षुः यतीन्द्राः । अहो गुरुभक्तिः धारवाडपौराणाम्, अहो शिष्यवात्सल्यम् श्रीस्वामिपादानाम् ।

---

# श्रीमाध्वतत्त्वज्ञानसम्मेलनम् ।

आगामीनि नवाम्बरमासे १६ क्रमाङ्कदिने अखिलभारतीयमाध्व-पीठाधिपतिसम्मेलनम्, तथा अखिलभारतीयमाध्वसम्मेलनं ताभ्यां समन्वितं माध्वतत्त्वज्ञानसम्मेलनं च उडपीक्षेत्रे श्रीपेजावरमठाधीशानां श्रीविश्वेशतीर्थचरणानां नेतृत्वेन निर्वत्स्यन्ते ।

## सम्मेलनस्योद्देशाः

१ समग्रमाध्वसाजस्य सांस्कृतिक–धार्मिक–समाजिकोत्कर्षाय विधायककार्य-निरूपणम् ।

२ श्रीमदानन्दतीर्थभगवत्पादानां तत्त्वज्ञानप्रसारणम् ।

३ श्रीमन्माध्वतत्त्वानां महत्त्वस्य विश्ववैशाल्यस्य च निवेदनेन वैषम्यविलयपुरस्सरं परस्परस्नेह–सहकारौ वर्धयित्वा समाजसङ्घटनम् ।

४ पवित्रसनातनधर्माचारान् नित्यजीवने प्रतिबिम्बयितुम् अनुस्त्रियमाणस्य मार्गस्य विधानस्य निर्णयनम् ।

५ गुरुपीठ–शिष्यवर्गयोः परस्परमधुनातनं विरसं शिथिलितं च सम्बन्धं सुमधुरं दृढतमं च विधाय तयोः परस्परसहकारेण सुप्तसमाजे नवचैतन्योद्भावनाय प्रयतनम् ।

## सम्मेलनविषये कतिपयांशस्पष्टीकरणम् ।

१ सम्मेलनमिदं नांशतोऽपि राजकीयस्वरूपम् ।

5

२ सम्मेलनस्योद्देशः न माध्वसमाजस्य इतरसमाजतः पृथक्करणम् । किन्तु देशे सर्वत्र माध्वतत्त्वज्ञानप्रसारः, माध्वसमाजसङ्घटनाभिवृद्धिश्च ।

३ सम्मेलनमहाकार्यनिर्वहणाय स्वागत–कार्यकारिसमित्योः सदस्यैः ५ पञ्च-रूप्याणि, प्रतिनिधिभिश्च सार्धरूप्यकद्वयं प्रदेयानि ।

४ प्रथमं कार्यकारिसमित्या अनुमोदिता एव सूचनाः सम्मेलनस्य पुरतः स्थापनीयाः स्युः ।

५ सम्मेलने विधयानि भाषणानि, अनुवाच्यमाना निबन्धलेखाश्च प्रथमं कार्यकारिसमित्यनुमोदनसापेक्षा भवेयुः ।

६ प्रत्येकंः सदस्येन प्रतिनिधिना च आत्मनो माध्वताविषये दृढप्रतिज्ञापत्रिका ग्राह्या ।

न केवलंः सकलो माध्वसमाजः, अपि तु निखिला भारतीया जनता सम्मेलनेऽस्मिन् गृहीतभागा इदं यशस्वि विधातुं पूर्णतया सहकुर्युरिति बाढं विश्वसिमः ।

* सम्मेलनविषये विशेषजिज्ञासवः 'माध्वतत्त्वज्ञानसम्मेलनम् श्रीकृष्णामठः उडपी दक्षिणकर्णाटकः' एतत्सङ्केतेन स्वागतसमित्यध्यक्षैर्वा कार्यदर्शिभिर्वा साकं पत्रव्यवहारं कुर्युः ।

स्वागतसमित्यध्यक्षः

**माध्वतत्त्वसम्मेलनम्**

---

॥ श्रीशः शरणम् ॥

# अभ्यर्थनापत्रम् ।

श्रीरामार्चनतः सुधाप्रवचनाद् दैव्यास्तथा संपदो ।
भूम्नः सत्यमलं प्रमोदमतुलं नित्यं समाबिभ्रतः ॥
तत्त्वानामुपदेशतो विदधतो लोकं प्रमोदान्वितं ।
सार्थीभूतनिजाभिधा गुरुवराः सत्यप्रमोदा मुदे ॥ १ ॥

लोकेऽस्मिन् विरलाः समीरसमये वैदुष्यभाजो जनाः ।
तत्रातीव स दुर्लभः सकृदहो कुर्वन्सुधामङ्गलम् ॥
पश्यामोऽद्य सुदैवतः प्रतिसमं कृत्वा सुधामङ्गलम् ।
व्यक्तीभूतसुधाशनांशमतुलं सत्यप्रमोदं गुरुम् ॥ २ ॥

अयि महानुभावा महनीयोदारचरिताः गुरुसार्वभौमाः शमदमादिसकलदैवगुणसम्पन्नाः व्रतिवरेण्याः **श्रीश्रीसत्यप्रमोदतीर्थश्रीचरणाः ।**

अद्य वेणुग्रामनिवासिनामस्माकं भाग्योदयः समजनि श्रीश्रीचरणानामागमनेन । अद्य नः सफलं जन्म श्रीपादकमलरजोधारणेन । अद्य नः सार्थकं चक्षुः तत्र भवतां दर्शनेन । अद्य नः सप्रयोजनं श्रवणं गुरूत्तमानामुपदेशामृतपानेन । जन्मान्तरकृतानां सुकृतराशीनां दिव्यः परिपाकोऽयं यद् महानुभावानां सेवावसरः संप्राप्तः सांप्रतम् ।

श्रीमत्सु गुरुसार्वभौमेषु दृश्यमानाः असामान्यं विश्वतोमुखं विश्वविश्रुतं वैदुष्यं, भव्यतमा भागवती भक्तिः, निरुपमं वैराग्यम् असाधारणमौदार्यं चेत्यादयो दिव्या गुणाः स्पष्टमावेदयन्ति श्रीमतां देवांशसम्भूतत्वम् । प्रतिवत्सरं विधीयमानः वसुधायां सुधामङ्गलमहोत्सवः सुधाशनत्वं द्यापयति स्फुटतरम् ।

ईदृशानां यथार्थगुरुपादानां सथार्थसंन्यासिनां श्रीचरणानाम् इतरासाधारणेन लाभेन परमधन्यमात्मानमाकलयन्तः परम्परातः स्वयं च शिष्यीभूता वयमद्य श्रेयस्कामनया साञ्जलिबन्धं सविनयादरं भक्तिपुरस्सरं समर्पयामः प्रणामसहस्रपरम्पराकुसुममालां श्रीश्रीचरणेषु ।

इदानीं करालकालमहिम्ना तत्त्वज्ञानतेजः नितान्तं मन्दीभूतम् । विध्वस्तप्रायः सदाचरणमार्गः । सर्वत्र प्रसृतश्च गाढतमः अज्ञानान्धकारः । विश्वतः सञ्चरन्ती सुधारणापिशाची सर्वानेव सनातनधर्मीयान् साधुजनान् कवलयितुमुद्युक्ता । क्रमेण विरलीभूतः श्रीमदाचार्यशास्त्रपारङ्गतः पण्डितसमाजोऽयं चरमः राजप्रजासाहाय्यविरहाद् निकृष्टस्थितिमनुभवन् केवलं गुरुकारुण्यापेक्षी अल्पीयस्येव समये विलयमुपयास्यति । हन्त ! ततः जगदुद्धाराय धरायामवतीर्णेन भगवता वायुदेवेन कृतस्य मोक्षशास्त्रस्य न कोऽपि वक्ता, न कोऽपि श्रोता उपलप्स्यते । अतः यावद् अधुना विद्यमानः पण्डितवर्गः न नङ्क्ष्यति, यावद् जनेषु अल्पीयोऽपि जागर्ति आस्तिक्यबुद्धिज्योतिः तावदेव प्रयतनीयं धर्मोद्धाराय तत्त्वज्ञानप्रसाराय च ।

तादृशमहाकार्यकरणाय श्रीश्रीचरणा एव सर्वात्मना समर्था इति सर्वोऽपि सात्त्विकजनता श्रीश्रीचरणानां मुखकमलमवेक्षते । लोकोद्धारायैव कृतावताराः श्रीश्रीचरणाः साधुजनापेक्षापूरणेन साधुपथदर्शनेन च लोकानुद्धरेयुरिति बलवती नः प्रत्याशा । द्रढीयानस्माकं विश्वासः । स्वत एवास्मिन् महाकार्ये प्रथममेव प्रवृत्ताः श्रीश्रीचरणाः शिष्यप्रार्थिता इदानीं सोत्साहं बद्धपरिकराः अचिरादेव कलियुगमिमं कृतयुगं कुर्वन्तु इति सप्रश्रयं प्रार्थयामः ।

ईदृशेतरासुकरकार्यकरणाय श्रीश्रीचरणेभ्यः भगवान् श्रीसीतापतिः श्रीरामचन्द्रः अव्याहतमायुरारोग्यबलादिकं दद्यादिति तमेव दयासागरं प्रार्थयामः सभक्तिभरम् ।

आश्विनशुक्लपौर्णिमायाम्
शके १८७४

श्रीचरणानुग्रहाकाङ्क्षि
**माध्वमण्डलम्**
बेळगांव

# नियमावलिः

(१) मधुरवाणी नाम्नीयं संस्कृतपत्रिका प्रतिमासं पौर्णिमायां प्रकाशते.

(२) अस्यां प्रायः प्रत्यङ्कमेका लघुकथा, सनातनधर्मविषयकाः प्रबन्धाः प्राचीनसाहित्यं चान्ये प्रचलितविषयका विवेचनात्मका लेखाः प्रकटीक्रियेरन् । सनातनधर्मद्रोहिणो लेखा नावकाशं विन्देरन् । ग्राहकेतरेषां लेखाः पद्यानि वा न प्रकाश्येरन् ।

(३) पत्रिकाया अस्याः अग्रिमदेयं मूल्यं मार्गव्ययसहितं रूपकपञ्चकम् । अङ्कस्यैकस्याणकाष्टकं मूल्यम् । द्वीपान्तरवासिनां तु वार्षिकं मूल्यं सप्त-रूप्यात्मकम् । विना मूल्यमादर्शसञ्चिका न प्रदीयेत । तदिच्छुभिश्च आणकाष्टकमूल्यानि शुल्कपत्राणि प्रहीयन्ताम् ।

(४) मधुरवाण्याः श्रेयोभिवृद्धये दशरूपकाणां दातारः सहायकाः, पञ्चविंशतिरूपकप्रदाः पोषकाः, पञ्चाशद् रूप्यकदायिनोऽनुग्राहकाः शताधिक-प्रदाः संरक्षका इति व्यपदिश्येरन् ।

(५) मधुरवाण्यां नीरसा असुवाच्याक्षरा एकपार्श्वे एवालिखिता लेखा नावसरमासादयेयुः । लेखपरिवर्तनादिषु निरनुयोज्याधिकाराः खलु संपादकाः । अप्रकाशिता लेखा विना प्रापणव्ययं न प्रतिप्रहीयरेन् ।

(६) लेखा, विज्ञापनानि, समलोचनापेक्षिणो ग्रन्थाः, पत्रिकाश्चेत्यादिसकलं **मधुरवाणी कार्यालय बागलकोट** इति संकेतेन प्रेष्यम् ।

पत्रं मूल्यधनं वा प्रेषयद्भिः निजसंकेतादिकं देवनागरीलिप्यैव सुस्पष्टं विलेखनीयम् । भूतपूर्वैर्ग्राहकैः पत्रस्य धनस्य वा प्रेषणसमये ग्राहकसंख्योल्लेखो नैव विस्मरणीयम् । उत्तरप्रेप्सुभिरवश्यं प्रेषणीयः प्रापणव्ययः ।

संपादक मधुरवाणी

**मधुरवाणी कार्यालय, पो. मु. बागलकोट,**
**जि. विजापूर (कर्नाटक)**

Regd No. B. 3664.

## दीपावली-विशिष्टाङ्कः

एवम: कार्तिकमासस्य दीपावलीसान्नि[illegible] दीपा[illegible] अथवा देशभक्ताङ्को भविष्यति । तत्र च दीपावली विशेषाङ्के दीपाङ्के भारतकुल[illegible] श्री ल[illegible]न्यटिळक, महात्मा गान्धी, पं. नेहरु, डॉ. राजेन्द्रप्रसाद, चक्रवर्तिराजगोपालाचार्यप्रभृ[illegible]नां सुप्रसिद्धानां देशभक्तानाम् अत्युज्वलानि जीवन-चरित्राणि प्रकाशयितुमभिलषामः । अतः सरसलेखकैः लोकमान्यानां नेतृणां, स्वातंत्र्यान्दोलने हुतात्मनां वीररमणीनां, क्रान्तिकारकाणां स्वदेशात् निष्कासितानां कारागृहे एव मृतानां मारितानां ताडितानां पीडितानां च देशबन्धूनां रोमहर्षणानि विचित्राणि जीवनचित्राणि विलिख्य प्रेषणीयानि । चरित्राणि अतीव संक्षिप्तानि अत्यन्तसरलान्येव तस्मिन्नङ्के अवकाशमासादयेयुः । त्वर्यतां नवकविभिः ।

Printed at his Manohar Printing Press, Belgaum by Venkatesh Yalloji Shahapurkar and Published by Pandharinathacharya Kurmacharya Galgali, at H. No. 242, Bagalkot, Dist. Bijapur.

# मधुरवाणी

२३ वर्षे) विलम्बि संवत्सर माघ-फाल्गुण संयुक्तांकः (अङ्कौ ११-१२

## मङ्गलाचरणम्

भक्ताग्रेसरपुण्डरीकमुनिना सानन्दबाष्पोदकं
सस्नेहं पितृबान्धवैस्सकुतुकं प्रेमान्धभामाजनैः
मन्दाक्षोदितमन्दहासमधुरं संवीक्षितं राधया
रूपं बालदिगंबरं यदुपते र्बिभातु चित्ताम्बरे

कान्ताकोमलकण्ठकान्तिकमनं कंबुं कराम्भोरुहे ।
वामे प्रेमभरेण वासवमणिश्यामाङ्गधामा दधत् ।
चञ्चत्काञ्चनकञ्चिकाञ्चितकटौ किं चाकलय्यापरं ।
लोष्ठाधिष्ठितपद्मपेलवपदः स्यादिष्टदो विठ्ठलः ॥

## मासावतरणिका

प्रचण्डत्वं ग्रीष्मे दहनमिव भानो विकिरतां
कराणां यस्यासीत्तव निखिलविश्वप्रतपनम् ।
स एवास्मिन्माघे भजसि शिशिरांशुप्रतिमतां
प्रभावोऽयं नूनं जयति समयस्याप्रतिहतः ॥

बिभ्रन्निर्मलमम्बरं सुबिलसत्तारामणिप्रोज्वलः
संसर्पत्सहकारगन्धरुचिरश्चन्द्रप्रभाल्हादनः ।
कामक्लान्तिदयौवनः शिशिरयन्नारीमिवान्यां निशं
नानाकारमनोहरो नवयुवेवायात्ययं फाल्गुनः ॥

# गुरुप्रशस्तिः

******

कविः **विद्यारत्नं, विद्याभूषणं, पंचमुखी राघवेंद्राचार्याः** M. A.

योऽहल्यामुददीधरत्स्वचरणन्यासेन सीतापतिः ।
दैत्यध्वंससुदेवरक्षणचणं दूतं व्यधान्मारुतिं ॥
सोऽयं श्रीसुयमींद्रतीर्थकरसंपूजासुतुष्टः सदा ।
पायान्नः [1]शतधीप्रियः सुरसभुक् श्रीमूलरामो हरिः ॥ १ ॥

विरचित[2]गरपुरवासः त्रिपुररिपुःसुरार्चितपादपद्मः ।
दुरितनिवारणदक्षः समवतु मामद्य शितिकण्ठः ॥ २ ॥

[3]कपिलांगसंगमदरक्त[4]मारुतः ।
कपिभीममध्वपदयुङ्महीतले ॥
अवतीर्य तत्वमत (मध्वमत) रक्षणे चिरं ।
नियुयोज दैत्यबटुमक्षताशयम् ॥ ३ ॥

दैत्येंद्रसूनुः प्रह्लादो भक्त्या हरिमतोषयत् ।
स एवाऽभूद्राघवेंद्रतीर्थस्तीर्थकरो नृणाम् ॥ ४ ॥

यद्वचःशोचिषा मध्वसिद्धांतो वर्धते चिरं ।
गुरुः स राघवेंद्रार्यः ज्ञानशस्त्रेण पातु नः ॥ ५ ॥

सत्सिद्धांतप्रचयनिपुणोऽगम्यविद्याविवस्वान् ।
माध्वग्रंथान् विशदवचसा संगमय्यातिकांत्या ॥
दीनान्दूनान् सुपथमनयद्व्यक्तमानंदतीर्थ- ।
प्रोक्तं तत्वं पुनरपि जगौ ग्रंथराशीन्विधाय ॥ ६ ॥

सुबोध सुजन ज्ञानप्रज्ञान् सुकृतिनो यतीन् ।
पंचलोकपतींश्चक्रे स्ववंश्यांस्तत्वरक्षणे ॥ ७ ॥

---

१शतधीः = पूर्णप्रज्ञः = श्रीमध्वाचार्यः =
२गरपुरं = नञ्जनगूड्ग्रामः=. शितिकण्ठः = नञ्जुण्डेश्वरः
३कपिलः = कपिलनामकपरमात्मा, कपिला = कपिलानदी नञ्जनगूड्ग्रामे प्रवहति
४मारुतः = मरुत्पुत्रः, वायुः

राराज्यंते गरलनगरे पंच सद्बोधमुख्याः ।
इंद्रांतास्ते तपसि निरताः पावयंतःसमंतात् ॥
वत्सप्रेम्णा प्रदिशि गुरुसेवारतं चाऽऽदिशन् किं ।
शास्तुं तत्वं कथय सुयमींद्रार्यवर्याऽत्र भासि ॥८॥
[5]'पुरुषार्थोऽतःशब्दात्' 'यं यं लोकमित्युक्तिजातेन ।
भाष्येण तट्टीकया चाऽऽत्मज्ञस्यार्चको हि मोक्षाय ॥९॥
अपरोक्षीकृतविष्णुः नूनं श्रीराघवेंद्रगुरुर्दयालुः ।
शरणागतसंरक्षो वितरति मोक्षं यदयं [6]ब्रह्मधामवित् ॥१०॥
षष्टयब्दशांतिरथ मे निरवर्त्यत **विळंबि नरसिंहजयंत्यां** ।
यस्यां माध्वाः ग्रंथाः संक्षिप्याऽनूदिता मया गुरुकृपया ॥११॥
तत्फलपुण्यं गुरुसात्कृतवान् समर्प्य भारतीरमणाय ।
श्रीपतये शुभनिधये गुरवः किल दिव्यमोक्षदातारः ॥१२॥
योऽवद्यविद्याविधुरः सद्विद्यापारदृक्प्रधीः ।
सुयमींद्रगुरुर्भूयाच्छ्रेयःप्रेयःप्रदः सदा ॥१३॥
साधुजनसंगरागं वितर गुरोऽसन्मतिं तत्प्रतीपे ।
श्रीराघवेंद्रदयया सुयमींद्रगुरो त्वमसि कृपाकलशः ॥१४॥
अद्यश्रीराघवेंद्रार्यसपर्यासुमहोत्सवे ।
प्रत्यर्प्य गुरवे भक्त्या कृतिं चेमां कृती खलु ॥१५॥
पंचमुख्युपधाभाजा राघवेंद्रेण धीमता ।
कृतेयमाशुकविता गुरुराण्णः प्रसीदतु ॥१६॥

---

[5]ॐ पुरुषार्थोऽतः शब्दादिति बादरायणः ॐ इति ब्रह्मसूत्रेण यं यं लोकमित्याद्याथर्वणोपनिषद्वाक्यजातेन तद्भाष्यतट्टीकापर्यालोचनया आत्मज्ञानी तदर्चकश्चोभौ मोक्षसंपदं लभेते इति ज्ञायते । तेनापरोक्षज्ञानिसेवया मोक्षः सिध्यतीत्यर्थो लभ्यते ।

[6]ब्रह्मधाम = श्रीहरेः मुख्यसन्निधानपदं मुख्यप्राणदेवता ।

( प्राप्तजन्मनो मे षष्टि (६०) वर्षाण्यतीतानि विलंबिसंवत्सरवैशाखशुद्ध त्रयोदश्यां नरसिंह जयंती पुण्यपर्वणि । तन्निमित्तं शांतिमहोत्सवः निर्वर्तितो मया मासेन श्रीमदानंद तीर्थीयसप्तत्रिंशतिकृतिरत्नपारायणेन बाढं क्षीरव्रतधारिणा । शांत्युत्सवदिने तद्ग्रंथानां संक्षिप्यानुवादेन मंगलमनुष्ठितवताच श्रीमत्पूज्य भाण्डारकेरिमठाधीश्वराणां श्रीविद्यामान्यतीर्थ श्रीपादानामाध्यक्ष्ये कृतार्थतामानीतोऽयमात्मा )

# स्वागतं सहोदर्यै

भारतसर्वकारस्य शैक्षणिकशाखया साहित्य अकादमीसंस्थाद्वारा प्रकाश्यमानायाः संस्कृतप्रतिभानाम्न्याः संस्कृतषाण्मासिक पत्रिकासख्याः

## मधुरवाणी शुभाशंसनम्

सुतरामभिनन्दनीयः सर्वथा श्लाघनीयश्चायं सर्वकारस्य संस्कृत पत्रिकाप्रकाशनोपक्रमः। नूनमद्यापि विशालेऽस्मिन् भरतखण्डे विद्यन्ते एव हि निरवद्यगद्यहृद्यपद्यप्रणयनविद्यासमुपलब्धवैशारद्याः भूयांस एव विद्वांसः कवयः। परं समुचितप्रोत्साहाभावाद् ग्रीष्मसरिद्विलायं विलीयमान इव परिदृश्यते तेषां काव्यप्रवाहः। शासनसंस्थया प्रारब्धे च नव्यसंस्कृतप्रकाशने पुरस्करणे च भवेदेवाचिरात् स्फूर्तिसंचारः तेषां धमनीषु, प्रवहेच्च पुनस्ससंभ्रमं निरर्गलकाव्यप्रवाहः। स्यन्देत च मन्देतररंहसैव संस्कृतभावमन्दाकिनी। सुप्तगुप्तामिव लुप्तप्रायामिव संस्कृतसरस्वतीं पुनः स्वच्छन्दं निष्यन्दयितुं रसिकसन्दोहमानन्दयितुं च उपक्रममाणं को नाम नाभिनन्देत् भारतशिक्षाविभागं?

तत्संपादकत्वे च विश्वविश्रुतं साहित्यसंशोधनप्रबोधनविरचनानुवदनपरिष्करणादिषु विविधसारस्वतव्यापारेषु असाधारणीमेव वैदुषीमाबिभ्राणं संस्कृतसमुत्कर्षतर्षाकुलं संप्रतिपन्नसुधीशेखरं श्री वि. राघवन् महोदयं विनियुज्य समुचितकार्यकरणकौशलं स्वकीयं न्यदर्शयज्जगत एव भारतसर्वकारः शिक्षाविभागीयाधिकारिणश्च।

अस्य च विद्वत्कुलशिखामण्डनमणेः समर्थसंपादकत्वे प्रकाश्यमानायाः संस्कृतप्रतिभायाः नवीनसोदर्याः सादरस्वागतं मधुरवाणी सहर्षप्रकर्षं विधाय तदुपयोगं कर्तुं च भारतीयान् रसिकान् सहृदयान् कवीश्वरान् प्राज्ञपरिवृढान् छात्रान् अध्यापकांश्च सोत्साहमनुनाथते सविनयमागृह्णाति च।

संस्कृतसाहित्योत्पादनकुतुकिनो वर्तन्ते, तेषां सर्वेषामपि इयं प्रारप्स्यमाना 'संस्कृतप्रतिभा' नाम्नी पत्रिका सफलमवकाशं प्रदास्यतीति विश्वसिमः ।

सैषा पत्रिका प्रथमतः षाण्मासिकी स्यात् । अस्याश्च संपादकाः मद्रपुरी-विश्वविद्यालय-संस्कृताध्यक्षाः डॉक्टर् वि. राघवन् महाभागाः । आकृतौ चेयं पत्रिका साहित्य-अकादमीनाम्न्या परिषदा आङ्ग्लवाण्यां प्रकाश्यमानाया 'इन्दियन् लिट्रेचर्' (भारतसाहित्यम्) इत्यस्याः पत्रिकायाः समानरूपा, प्रायः शतपुटात्मिका स्यात् । अत्र प्रकाश्यमानाः सर्वे प्रबन्धाः संस्कृतमयाः स्युः । परंतु प्रतिप्रबन्ध लेखान् लेखकांश्चाधिकृत्य परिचयार्थमाङ्ग्लवाण्या सूचनाः प्रथमं संक्षेपेण भवेयुः । पत्रिकायाः ग्राहकमूल्यं प्रतिवर्षं रूप्यकचतुष्टयम्, प्रतिसञ्चिकं च रूप्यकद्वयम् भविष्यति । अस्मिन्नेव वत्सरे आगामिनि एप्रल्मासे अस्याः पत्रिकायाः प्रथमा सञ्चिका प्रकाशं यास्यति ।

प्रबन्धप्रेषकैरिदं मनसि निधेयं, यदेषा पत्रिका काव्यादिनूतनसंस्कृतसन्दर्भप्रकाशनार्थेति । प्रतिसंञ्चिकं खण्डकाव्यानि, रूपकाणि, खण्डकथाः गद्योपन्यासाः, मुद्रितनूतनसंस्कृतसाहित्यग्रन्थानां विमर्श इति विविधं विषयजातं प्रकाशितं भविष्यति । प्रकाशनाय प्रेषितानां निबन्धानाम् अङ्गीकारे निराकरणे वा संपादकानामेव सर्वथा निर्णयाधिकारः । प्रकाशनार्थमभ्युपगतानां निबन्धानां कृते निबन्धृभ्यः द्रव्यसत्कारो दास्यते ।

अस्याः पत्रिकायाः ग्राहकमूल्यं, देहल्यां ७३, तियेटर् कम्यूनिकेषन्स् बिल्डिङ्स्, कन्नाट् सर्कस्, इत्यत्रत्येभ्यः साहित्य-अकादमीकार्यदर्शिभ्यः प्रेषणीयम् ।

निबन्धाः तद्विषयकाश्च पत्रव्यवहाराः संपादकेभ्यः ( डॉक्टर् वि. राघवन्, मद्रास-विश्वविद्यालयः, मद्रास्-५ ) प्रेषणीयाः । प्रेषितानां निबन्धानां मध्येमार्गं नष्टानां भ्रष्टानां वा विषये साहित्य-अकादमीसमितिर्वा संपादका वा न पर्यनुयोज्याः ॥

# विनोदावलिः ।

कश्चिद्राजा परिणते वयस्यात्मानं बलीयसाऽऽमयेनाक्रान्तमवलोक्य मरणाद्भीतो बहून्वैद्यान्रुजः प्रतिक्रियार्थं नियोजयामास । किं तु स तान-चिरेणैव कालेन विश्वासानर्हान्मन्यमानोधिकाराद्भ्रंशयामास । अन्यस्तु कोपि वैहासिको राजानं तैस्तैराचरितैरनुरञ्जयंस्तस्य प्रेम्ण आस्पदीभूतः। अत एव राजा तमधिकारिपदान्नाभ्रंशयत् । अथैकदा स वैद्यो बहुवि-धैरपि विनोदनोपायैरप्रमोदमानं राजानमवलोक्यात्मनोऽप्यधिकारभ्रंशं संभावयन्राज्ञः पुरत उत्तरीयेण वदनं प्रावृत्य रुरोद । तं च रुदन्तमवेक्ष्य राज्ञा कारणे पृष्टे स प्रावोचत् । महाराज भवान्किल मरणाद्बिभेति मम चाधिकारभ्रंश आसन्नो ह्यश्च मां कोपि सिद्धपुरुष उपागत्य प्राह यदा त्वां राजाधिकाराद्भ्रंशयिष्यति तदा त्वं देशान्तरे राजपदमनुभविष्यसि। राजा तु त्वय्यधिकाराद्भ्रष्ट एव मरणमापत्स्यत इति । तदिदमत्यासन्नं प्राणेभ्योपि गरीयसो महाराजस्य निधनं मां विलापयति । इति । तदा-कर्ण्य मरणाद्भीतो राजा तं सबहुमानं महत्यधिकारपदे नियोज्य प्रीणयामास ।

---

किं काकोऽपि विहङ्गमो मरुरपि स्थानं करीरोऽपि किं
शाखी राहुरपि ग्रहः स च भवेदुष्ट्रोऽपि किं वाहनम् ।
किं काचोऽपि मणिर्मृगोऽपि करटी प्रेष्योऽपि किं मानुषः
किं वेश्यापि विलासिनी स च तदासक्तोऽपि किं कामुकः ॥२२॥

---

# श्रीसुधीन्द्रतीर्थयतिसार्वभौमाः

लेखकः — आर्. के. वेंकण्णाचार्यः
द्वैतवेदान्ताचार्यः, श्रीचामराजेन्द्र संस्कृत महापाठशाला, बेंगळूरु नगरम् ।

कुशाग्रमतये भानुद्युतये वादिभीतये ।
आराधित श्रीपतये सुधीन्द्रयतये नमः ॥

विदितचरमिदमेतेषां समस्तविदुषां यत् आस्माकीने धर्मकुलभवनायमाने समग्रभारतेऽस्मिन् नैके पवित्रात्मानः सदातन कालमारभ्यावतरन्तो अलमकुर्वन्निमां पुण्यवसुन्धरामिति । अकस्मादुपनताभिः प्रावग्रह प्रभृतिभिः क्रान्तिसन्ततिभिः ऋषिसंप्रदायागतायाः आर्यसंस्कृतेः यदा ग्लानिस्संपादिता तदा निजतपःप्रभावात् निवारितोत्पाताः, समाकालित सल्लोकमङ्गलाःसन्तो, नक्षत्राणीव खमण्डले व्यराजन्त इत्यहो प्रमोदस्थानम् ।

रीतिमेनामनुरुन्धानानां श्रीमत्पूज्यगुरुवरेण्यानां श्रीसुधीन्द्रयतिसार्वभौमानां अस्यां पावनवसुमत्यामवतारसंदर्भःसंवृत्तः । इमे खलु पूज्याः सांप्रतं मदरासप्रान्तीय दक्षिणदेशवर्तिनि श्रीरङ्ग कुंभकोण समीपावलंबिनि ग्रामे भुवनगिरिवरे समवतरन् । परममङ्गळमूर्तीनां तुङ्गभद्रानदीतीरवासिनां श्रीमन्त्रालय क्षेत्राधिष्ठितानां श्रीराघवेन्द्रयतिसार्वभौमाणां इमे पूज्यतमगुरवः । अनेन एतेषां लोकोत्तरगरिमा कियती जगद्विश्रुता इति निरूपयितुं पार्यते ।

द्वापरान्त्ये द्वादशवर्षं प्रग्रहजनितें महाक्षामे संप्राप्ते स्वीयप्रकर्षतपसः फलात् नित्यं मृष्टान्नदानेन सहस्राधिकेभ्यो ऋषिमुनिभ्यो आध्यात्मिकविद्योपदेशात् कुलपतिस्थानभूषणः गौतममुनिशार्दूलः विद्योततेस्म । श्रीमति तस्यैव गोत्रे लब्धजन्मानः महनीयाः श्रीसुधीन्द्रतीर्थश्रीमच्चरणाः ।

श्रीपादानां पूर्वाश्रमीययोः पूज्यपित्रोः इतिवृत्तकथानकं इतिहासेषु नकुत्राप्युपलब्धिमीयते । तथैवैतेषां च पूर्वाश्रमावलंबि चरितं प्रायस्समग्रं

न बोधपथमवतरति । माकीं अस्मदीयानां पवित्रभारतीयपुंगवानां चारित्रिकपुरुषाणां कृतावताराणां कालदेशस्थितिगतिसंबंधबोधकः इतिहासः उपलब्धुमतीव विरळः+ इतीदमस्माकमहोदौर्भाग्यस्थानम् । तत्तदीय चारित्रिकाः पुरुषाः स्वीयग्रन्थेषु न कुत्रापि निजवृत्तान्तमबोधयन् । अयमप्येक उदारचरितानां अमीषां ध्येयगणेषु विषयो भवतीति महदिदमपरं प्रमोदस्थानम् । कतिपयानामितिहासग्रन्थानां विमर्शात् श्रीपूज्य पादानां कालः माकीं क्रिस्ताब्दस्य १५६५ तममारभ्य १६६० तमसम पर्यंतमिति स्थितिर्व्यवस्थाप्यते ।

कर्णाटकविद्यासिंहासनाधीशाः चन्द्रिकान्यायामृत तर्कताण्डवाख्य ग्रन्थरत्नत्रयाचार्याः, श्रीमद्व्यासतीर्थश्रीमच्चरणाः, श्रीसुरेन्द्रतीर्थश्रीपादाः, श्रीमद्विजयीन्द्रतीर्थपूज्यपादाः, श्रीवादिराजयतिवरेण्याश्च समकालीना इति प्रथितमेतत् । अहो तदातनानां सज्जनानां महाभाग्यता? तदानीन्तन वैदिकसाम्राज्यमेव श्रीरामराज्यम् । तत् स्मरन्तो वयं संप्रति नितरां धन्यतमाः । श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां प्रेरणानुसारेण श्री सुधीन्द्रतीर्थाः श्रीमद्विजयीन्द्रतीर्थकरकमलाद्वाराश्रममभजन्त । निजगुरुवदनारविन्दात् ससंप्रदायं समधिगतत्रय्यन्तविद्याः समभ्यस्तसन्यायमीमांसालङ्कारप्रमुखतन्त्राः चतुष्पष्टिकलापारङ्गताः, निस्सीमपण्डिताश्च समभवन् । त इमे स्वप्रणीतसद्युक्तिरत्नाकराख्ये तर्कताण्डवव्याख्यारूपे ग्रन्थरत्ने माङ्गलिकपद्यसन्दर्भे न्यरूरुपन् यत्– " स्वकीय पूज्यगुरुवरेण्य कारुण्यबलादेव संप्राप्तसकलविद्योऽस्मि संवृत्तः " इति ।
तद्यथानु श्रूयते–

" शिष्यः श्रीविजयीन्द्रसंयमिमणेः षड्दर्शिनीदर्शिनः ।
तत्कारुण्यसमेधिताखिलकुलोत्कर्षः सुधीन्द्रो यतिः ।
निर्मात्सर्यगुणोल्लसत्सुमनसां मोदाय लक्ष्मीपतेः ।
प्रीत्यै मध्व मुनीशितु र्वितनुते "सद्युक्तिरत्नाकरम्" ॥ इति

पूज्यपादा एते निजदेशिकपादानुरूपाः छात्रा बभूवुः । विद्योपदेशका इव सकलशास्त्रेषु ग्रन्थरत्नान्यरीरचन् । जगति माध्वाःपरं

साहित्य ज्ञानविधुरा इति किंवदन्तीमपि प्रथां निश्शेषं प्रममृजुः। अमीषामालंकारिकप्रबन्धाः संस्कृतवाङ्मयप्रपंचे समुचितां महतीं क्रांन्ति समुदस्थापयन् । श्रीपादाः वेदान्तग्रन्थमात्रं न निबबन्धुः, परंतु श्रव्य-दृश्यकाव्यानि आलंकारिकलक्षणग्रन्थप्रवरांश्च समाकलयन् । प्रायः एभिः प्रणीतानि ग्रन्थरत्नानि एवं समुपलभ्यन्ते ।

१. सद्युक्तिरत्नाकरः (तर्कताण्डवव्याख्यारूपः)
२. आपस्तम्बशुल्बसूत्रप्रदीपः ।
३. भागवत द्वितीयैकादशस्कन्दव्याख्यानम् ।

— साहित्यग्रन्थाः —

४. सुभद्रापरिणयो नाम नाटकम् ।
५. व्यासराजाभ्युदयः ।
६. अमृताहरणम् ।
७. दयालुशतकम् ।
८. वैराग्यतरङ्गः ।
(५–८) पद्यकाव्यानि
९. अलङ्कारमञ्जरी
१०. असङ्कारनिकषः
(९–१०) लक्षणग्रन्थाः ।
११. साहित्यसाम्राज्यम् । कृष्णाध्वरिविरचित रघुनाथभूपालीय-नामक ग्रन्थस्य व्याख्यानम् ।

श्रीपादानां ग्रन्थप्रणयनचातुरी समुचित कोमलपदविन्याससरणिः संप्राप्तगंभीरसुश्राव्यशैलां, स्वकीयमेव महद्विशिष्टधिष्ण्यमधिष्ठिता राराजते । पदार्थविवरणप्रगाधता समयोचिता वरीवर्ति । श्रवणपुट-सुखावहं पदलालित्यम् वर्णनमाधुरी सहृदयहृदयस्वायत्तीकरण सन्निवेश-गर्भिणी प्रलसति ।

तञ्जावूर नायकः रघनाथ भूपालकः निजान्ववाय एव प्रख्यात-यशोभूषितः प्रसिद्धान्तर्वाणिश्चासीत् । निजास्थानभूषणायमानैः कृष्णयज्वाभिधालङ्कृतैः प्रशस्त कविभिः रघुनाथभूपालीयमिति प्रथितं

नाटकलक्षणग्रन्थमकारयत् । विद्यानाथकवेः प्रतापरुद्रीयमिति प्रसिद्धं लक्षणकाव्यं यथा स्वलक्ष्यं प्रतापरुद्रराजमेव परतया सप्रधानं वर्णयितुं प्रवृत्तमेवंकिल प्रस्तुतकृष्णयज्वकविनिर्मितग्रन्थोऽपि प्रकृतं राजानमेव प्रधाननायकतकतया प्रस्तोतुमुपचक्रमे । साराजा स्वात्मवर्णनपरग्रन्थ-स्यास्य सुव्याख्यां रचयितुं श्रीपादान् बहुविधं संप्रार्थयत् । न नरस्तवनं समंजसमिति पूज्पादाः जोषमासन् । पुनरपि कविरेव स्वतो गुरुसकाश-मेत्य "पुष्पमालानुषङ्गेण सूत्रं शिरसि धार्यते" इति यथाभियुक्तवचनं मामकमिमं ग्रन्थं श्रीचरणव्याख्यामृतसङ्गेनोज्जीवयन्तु अत्रभवन्तो महान्त इति सभक्तिप्रकर्षं सदण्डप्रणामपरम्परमस्तौत् । तेन च प्रसन्ना-त्मानः स्वामिपादाः क्षणमर्धमुकुळितनयनाः स्वसमुपास्यं श्रीमूलरघुपति-देवं भाविकार्यं च ध्यायं ध्यायं समुचितभावप्रकर्षसुरसहृदयारविन्दनिष्य-न्दिन्या अमृतमयवाण्या अमन्दानन्दसंपादकमधुरपदकिसलयमञ्जरी-विन्यासेन च समलंकृतं साहित्यसाम्राज्याभिधं विरिंचप्रपंचप्रसिद्धं ग्रन्थभूषणं समाकलयन् । यस्मिन् निखिलगुणपरिपूर्णः, सर्ववेदैकवेद्यः शुद्धसुखसंपादकः, योगिहृदयाभिरामः रघुकुलललामः, अत एव रघुनाथ-पदोपलालनीयः, महासंस्थानाभिज्ञानरूपः, श्रीमूलरघुपतिः वेदव्यासः सभक्त्युन्मादं तद्गुणालङ्कारकुसुमस्रग्विभूषितः ससुन्दरमुपवर्णितः । त एवास्यारंभमंगळपद्ये एवं समलिखन् ।

"तेन श्रीरघुनाथभूमिपतिना संप्रार्थितस्तन्मुदे तत्तादृग्विजयीन्द्र संयमिमणेः प्रौढिप्रियंभावुकः । शिष्यो व्याकुरुते सुधीन्द्रयतिराट् कृष्णाध्वरीन्द्रोदितं ग्रन्थं तद्गुणबन्धुरं रसगुणालंका झंकारितम् ॥" इति ।

तद्गुणालंकारस्य लक्षणमेवमभिहितं जयदेवकविना– "तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः" इति । उदाहरणन्तु – "पद्मरागायते नासा मौक्तिकं तेऽधरत्विषा" इति । अत्र नायिकानासालंकृतमौक्तिक-मणिगतशुक्लवर्णतारूपगुणत्यागात् वर्णनीयनायिकाधरकिसलयारुण-कान्तिसहवासजनितरक्तिमासंयुतपद्मरागगतगुणस्वीकाररूपक्रियावर्णनात्

भवति तद्गुणः । एवमेवहि श्रीचरणविरचितप्रकृतग्रन्थेऽपि रघुनाथ-भूपालगत मानवसहजमहासत्वतातिगंभीरतादिगुणत्यागपुरस्सरं, श्रीमूल-रामचन्द्रदेवगतालौकिकाप्राकृतज्ञानानन्दसौन्दर्यगांभीर्याद्यमन्दमङ्गळकर-गुणस्वीकरणपुरस्सरमुपवर्णितत्वात् तद्गुणालंकारबन्धुरता संदृश्यते ।

अयं ग्रन्थः अलंकारलक्षणस्वरूपप्रतिपादकनिबन्धेषु रसगंगाधर-कुवलयानन्द-चित्रमीमांसा-साहित्यदर्पण-ध्वन्यालोक-व्यक्तिविवेकप्रभृतिषु ग्रन्थरत्नेषु परिदृश्यमानरसगुणालङ्कारविमर्शात्मकविचाराय कराग्रसंगृहीत प्रदीपभानुः इव संपद्यते । तथाच ग्रन्थेऽस्मिन् निरुक्तसकलग्रन्थनिरू-पितान् रसादिविषयोपवर्णनमार्गानतिरिच्य, निखिलरसगुणालंकार-निष्पत्तिप्रक्रियाः निपुणतरमुपवर्णिताः ।

गुरुपादप्रणीत सुभद्रापरिणयनाटकमतीवहृदयंगमम् । अत्र केन कविना रचितमिदं नाटकं ? किं नामधेयमस्य ? इति नाटकीयभावकृत प्रश्नस्य अतिमनोहरं दंडकलक्षणलक्षितगद्यबन्धुरं, वलयबन्धग्रथितपद्य-रूपं समुचितोत्तरं सूत्रधारमुखात् संपादयन्ति पूज्यपादाः । प्रवचनसर-णिरियं सहृदयहृदयाह्लादिनी भवति । तथाहि– " अस्ति खलु जगति वन्दनरतिकन्दलदतिबन्धुरमतिसिंधुरपतिमन्थरगतिसिंधुरधुरंधरगंधिल-गण्डस्थलनिष्यन्ददमन्दमदकबन्धगुणबन्धितेन्दिन्दिरसन्दोहझङ्क्रियाल-ङ्क्रियाजंझनदहङ्क्रियासाधारणेतरतोरण ............. गणनातीतगंभीर-गुणगणसान्द्रः " । इतीदं निरवद्यपदकदंबनिबन्धितगद्यं कस्य वा सहृदयस्य रसिकस्य हृदयं नोन्मादयेत् । अस्मिन्वाक्ये स्वगुरुपादाः नाटकीय प्रस्ता-वनाङ्गे मांगलिकतयोपस्तुताः । एवमेव नाटकेऽस्मिन् कथावस्तुनः अर्जु-नस्य महासत्वतादि धीरोदात्तनायकगुणानां न्यूनता माभूदिति यथोदारा-भिप्रायं नाटकमर्यादानुसारं मूलकथायाः किंचिद्वैलक्षण्यमापाद्य सुरचित संदर्भोचितवर्णनं अत्याश्चर्यजनकं भवति । मूलकथायां अर्जुनः सन्यासि रूपेण समुपेत्य सुभद्रां कामयमानावस्थां स्वकीय रूपलावण्यानुबद्धभावां समुत्पाद्य तां परिगृहीतवानित्युपावर्णि । यदि खल्वनया रीत्या नाटकेऽपि प्रहेळ्यते, तर्हि समग्रं नाटकलक्षणानां भंगो भविता । किंच वेदान्त-

विज्ञानसुनिश्चितार्थानां शुद्धसत्वानां यतीनां अपकर्षस्संपद्येत; ततश्च स्वयमेवैते पूज्यपादाः तपोधनाः, शमप्रधानाः, यतिकुलललामाः, एवं सति स्वैरेव ग्रथितेऽस्मिन् नाटके तादृग्विषयवर्णनं भृशमनुचितमित्यभिप्रेत्य तदंशमनितरसाधारणवर्णनमार्गमनुसृत्य रूपान्तरीकृत्य सरसपोषं चोपवर्णितवन्तः । तदेवमनुश्रूयते– " दुष्टदुर्योधनप्रेरितः कश्चिद्राक्षसः प्रकृतिकोमलां कुसुमावचयाभिलाषिणीं सहसखीभिरुद्यानवनमागतां सुभद्रां स्वमायया बलादचूचुरत् ।

विदितवृत्तान्तः अर्जुनः सहसा राक्षसं पश्चादनुधावन् तदन्तिकमेत्य, निहत्य तं परुषं राक्षसं, करालराक्षसपरुषहस्तपरिगृहीतामत एव मूर्छितां दूयमानावस्थां सुभद्रां प्रत्यानीय सपरिच्छदाय दुहितृवत्सलाय वसुदेवाय समर्पयत् । ओजस्वितां, लोकोत्तरशूरतां चास्य तिरस्कृतमीनकेतनसुरूपतां च लोचनपुटैः पायं पायं सुभद्रा सलज्जमधोमुखी तिष्ठति । अथ च वसुदेवदेवकीबलरामकृष्णाः अमन्दानन्दतुन्दिलाः धनञ्जयैकानुरागिणीं मृगशावकायतनयनां सुभद्रां, तस्यै स्पृहयते सुभद्रामुखांभोरुहसहस्रकिरणाय धनञ्जयाय प्रायच्छन् ।" एवं नाटकमिदं रसिकजनहृदयोल्लासकं ग्रथितं वर्तते ।

श्रीचरणाः स्वकीयग्रन्थप्रणयनचातुर्येण अनेकान् महतः पण्डितान् अद्भुतमहासागरे न्यमज्जयन् । शमदमादितपश्चर्याप्रभावेण समस्त भक्तशिरोमणिभ्यः सकलेष्टार्थानन्वगृण्हन् । तदानींतनानां राजमहाराजाणां विशेषगौरवपात्रमासन् । तंजावूराधिपतिना चेवप्पनायकेन निजगुरुवराणां समक्षमेव महापूजां महादरकृतां स्व्यकुर्वन् । तस्यैवेच्छानुसारेण इमे तदातनकर्णाटक राजधानीं विजयनगरीं समीयुः : कर्णाटक सिंहासनाधिरूढः श्रीरंगराजः ससमस्तराजमर्यादं श्रीमत्पूज्यपादान् प्रत्युद्गम्य ससंभ्रमं राजप्रासादमानीय रत्नमयपीठमधिष्ठाप्य-अर्घ्यपाद्याद्युपचारैरपूजयत् ।अमीषामनुपमपांडित्यं अणिमाद्यष्टैश्वर्यसिद्धि विशेषतो लौकिकज्ञानसंपदं च दर्शं दर्शं साश्चर्यं समान्दोलितोत्तमांगः श्रीमूलरघुपति वेदव्यासपूजार्थं युवसंवत्सरे माघकृष्णत्रयोदश्यां शिव-

रात्रि पुण्यदिने श्रीविरुपाक्षेश्वर सन्निधौ ससंकल्पं पुरतोनिर्दिश्यामाना-नेतेभ्यः ग्रामवरान् कृष्णार्पणधिया प्रादात् ।

१. तामरगेरे देशे बच्चनहाळः ।

२. बादामि देशे ख्याडः ।

३. मानवी देशे मलापहानदीरे यज्ञाळः ।

४. सिंधूसूरस्य अधस्तात् चेंचलः ।

५. तावुडुगुण्डीयादधस्तात् अरळीपल्लिः ।

इतीमे पंचग्रामाः श्रीपादैःस्वप्रभावेण संपादिताः ।

विजयनगरीय वेंकटपतिरायः " पेनगोण्डे " इति पत्तने अमीषां शिष्यो भूत्वा स्वविभवातिशयादतितरां श्रीचरणान्कनकाभरणैरभ्यषिचत् । विषयोयं श्रीगुरुगुणस्तवने एवं प्रत्यपादि ।

" व्याधूतावद्यहृद्यामितकृतिरचनाचारुचातुर्यहृष्यत्-
कर्नाटक्षोणिपालप्रतिपदरचितानेकरत्नाभिषेकः ।
पत्रीशारूढ लक्ष्मीपतिपदनलिनोदग्रलोलंबलीलः
विख्यातः श्रीसुधीन्द्रव्रतिपतिरतुलं भद्रमुन्निद्रयेन्नः ॥ "

यथाराजकीय शासनप्रमाणानुसारं विचार्यमाणे श्रीचरणाः बहुवर्षं संस्थाने व्यराजन् इति ज्ञायते । क्रिस्ताब्दस्य १६२० तमे चेंजीमूपति-वडियार् इति कश्चन मांडलिकः एतेभ्यः रौद्रि संवत्सरे भाद्रपदकृष्ण-षष्ट्यां पर्वकाले श्रीमुष्णक्षेत्रस्य मठे अश्वत्थनारायणसन्निधौ नान्मान् दीपानल्लूरु कोडिकालग्रामवरौ चोपायनावार्पयदिति प्रथितचरम् ।

एवं प्रथितयशसः श्रीचरणाः स्वसमग्रजीवितकालं नानादेशेषु संचरन्तः दशदिशो विजित्य, सकल तीर्थेषु स्नायं स्नायं तानि तीर्थानि पवित्रीकुर्वन्तः, चतुरुदधिमालामेखलामिमां भूमिं निजपादविन्यासैः पावनतमामाकलयन्तः, स्वेष्टतमभक्ताननुगृण्हन्तः नववृन्दावनमण्डिते पंपाक्षेत्रे फाल्गुनकृष्ण तृतीयायां तिथौ श्री मद्वासराजयतिसार्वभौम-बृन्दावन सन्निधौ सुन्दर वृन्दावनमेकं प्रविश्य विद्योतन्ते इत्यहो चिर-स्मरणीयानामगाधमहिमावतां अवतारकथानुवादस्य गरिमा चेत्यति-मङ्गलम् ।

---

नाटकलक्षणग्रन्थमकारयत् । विद्यानाथकवेः प्रतापरुद्रीयमिति प्रसिद्धं लक्षणकाव्यं यथा स्वलक्ष्यं प्रतापरुद्रराजमेव परतया सप्रधानं वर्णयितुं प्रवृत्तमेवंकिल प्रस्तुतकृष्णयज्वकविनिर्मितग्रन्थोऽपि प्रकृतं राजानमेव प्रधाननायकतकतया प्रस्तोतुमुपचक्रमे । साराजा स्वात्मवर्णनपरग्रन्थस्यास्य सुव्याख्यां रचयितुं श्रीपादान् बहुविधं संप्रार्थयत् । न नरस्तवनं समंजसमिति पूज्पादाः जोषमासन् । पुनरपि कविरेव स्वतो गुरुसकाशमेत्य "पुष्पमालानुषङ्गेण सूत्रं शिरसि धार्यते" इति यथाभियुक्तवचनं मामकमिमं ग्रन्थं श्रीचरणव्याख्यामृतसङ्गेनोज्जीवयन्तु अत्रभवन्तो महान्त इति सभक्तिप्रकर्षं सदण्डप्रणामपरम्परमस्तौत् । तेन च प्रसन्नात्मानः स्वामिपादाः क्षणमर्धमुकुळितनयनाः स्वसमुपास्यं श्रीमूलरघुपतिदेवं भाविकार्यं च ध्यायं ध्यायं समुचितभावप्रकर्षसुरसहृदयारविन्दनिष्यन्दिन्या अमृतमयवाण्या अमन्दानन्दसंपादकमधुरपदकिसलयमञ्जरीविन्यासेन च समलंकृतं साहित्यसाम्राज्याभिधं विरिंचप्रपंचप्रसिद्धं ग्रन्थभूषणं समाकलयन् । यस्मिन् निखिलगुणपरिपूर्णः, सर्ववेदैकवेद्यः शुद्धसुखसंपादकः, योगिहृदयाभिरामः रघुकुलललामः, अत एव रघुनाथपदोपलालनीयः, महासंस्थानाभिज्ञानरूपः, श्रीमूलरघुपतिः वेदव्यासः सभक्त्युन्मादं तद्गुणालङ्कारकुसुमस्रग्विभूषितः ससुन्दरमुपवर्णितः । त एवास्यारंभमंगळपद्ये एवं समलिखन् ।

"तेन श्रीरघुनाथभूमिपतिना संप्रार्थितस्तन्मुदे तत्तादृग्विजयीन्द्र संयमिमणेः प्रौढिप्रियंभावुकः । शिष्यो व्याकुरुते सुधीन्द्रयतिराट् कृष्णाध्वरीन्द्रोदितं ग्रन्थं तद्गुणबन्धुरं रसगुणालंका झंकारितम् ॥" इति ।

तद्गुणालंकारस्य लक्षणमेवमभिहितं जयदेवकविना– "तद्गुणः स्वगुणत्यागादन्यदीयगुणग्रहः" इति । उदाहरणन्तु – "पद्मरागायते नासा मौक्तिकं तेऽधरत्विषा" इति । अत्र नायिकानासालंकृतमौक्तिकमणिगतशुक्लवर्णतारूपगुणत्यागात् वर्णनीयनायिकाधरकिसलयारुणकान्तिसहवासजनितरक्तिमासंयुतपद्मरागगतगुणस्वीकाररूपक्रियावर्णनात्

भवति तद्गुणः । एवमेवहि श्रीचरणविरचितप्रकृतग्रन्थेऽपि रघुनाथ-भूपालगत मानवसहजमहासत्वतातिगंभीरतादिगुणत्यागपुरस्सरं, श्रीमूल-रामचन्द्रदेवगतालौकिकाप्राकृतज्ञानानन्दसौन्दर्यगांभीर्याद्यमन्दमङ्गळकर-गुणस्वीकरणपुरस्सरमुपवर्णितत्वात् तद्गुणालंकारबन्धुरता संदृश्यते ।

अयं ग्रन्थः अलंकारलक्षणस्वरूपप्रतिपादकनिबन्धेषु रसगंगाधर-कुवलयानन्द-चित्रमीमांसा-साहित्यदर्पण-ध्वन्यालोक-व्यक्तिविवेकप्रभृतिषु ग्रन्थरत्नेषु परिदृश्यमानरसगुणालङ्कारविमर्शात्मकविचाराय कराग्रसंगृहीत प्रदीपभानुः इव संपद्यते । तथाच ग्रन्थेऽस्मिन् निरुक्तसकलग्रन्थनिरू-पितान् रसादिविषयोपवर्णनमार्गानतिरिच्य, निखिलरसगुणालंकार-निष्पत्तिप्रक्रियाः निपुणतरमुपवर्णिताः ।

गुरुपादप्रणीत सुभद्रापरिणयनाटकमतीवहृदयंगमम् । अत्र केन कविना रचितमिदं नाटकं ? किं नामधेयमस्य ? इति नाटकीयभावकृत प्रश्नस्य अतिमनोहरं दंडकलक्षणलंक्षितगद्यबन्धुरं, वलयबन्धग्रथितपद्य-रूपं समुचितोत्तरं सूत्रधारमुखात् संपादयन्ति पूज्यपादाः । प्रवचनसर-णिरियं सहृदयहृदयाह्लादिनी भवति । तथाहि– " अस्ति खलु जगति वन्दनरतिकन्दलदतिबन्धुरमतिसिंधुरपतिमन्थरगतिसिंधुरधुरंधरगंधिल-गण्डस्थलनिष्यन्ददमन्दमदकबन्धगुणबन्धितेन्दिन्दिरसन्दोहझङ्क्रियाल-ङ्क्रियाजंझनदहङ्क्रियासाधारणेतरतोरण .............. गणनातीतगंभीर-गुणगणसान्द्रः " । इतीदं निरवद्यपदकदंबनिबन्धितगद्यं कस्य वा सहृदयस्य रसिकस्य हृदयं नोन्मादयेत् । अस्मिन्वाक्ये स्वगुरुपादाः नाटकीय प्रस्ता-वनाङ्गे मांगलिकतयोपस्तुताः । एवमेव नाटकेऽस्मिन् कथावस्तुनः अर्जु-नस्य महासत्वतादि धीरोदात्तनायकगुणानां न्यूनता माभूदिति यथोदारा-भिप्रायं नाटकमर्यादानुसारं मूलकथायाः किंचिद्वैलक्षण्यमापाद्य सुरचित संदर्भोचितवर्णनं अत्याश्चर्यजनकं भवति । मूलकथायां अर्जुनः सन्यासि रूपेण समुपेत्य सुभद्रां कामयमानावस्थां स्वकीय रूपलावण्यानुबद्धभावां समुत्पाद्य तां परिगृहीतवानित्युपावर्णि । यदि खल्वनया रीत्या नाटकेऽपि प्रहेळ्यते, तर्हि समग्रं नाटकलक्षणानां भंगो भविता । किंच वेदान्त-

विज्ञानसुनिश्चितार्थानां शुद्धसत्वानां यतीनां अपकर्षस्संपद्येत; ततश्च स्वयमेवैते पूज्यपादाः तपोधनाः, शमप्रधानाः, यतिकुलललामाः, एवं सति स्वैरेव ग्रथितेऽस्मिन् नाटके तादृग्विषयवर्णनं भृशमनुचितमित्यभिप्रेत्य तदंशमनितरसाधारणवर्णनमार्गमनुसृत्य रूपान्तरीकृत्य सरसपोषं चोपवर्णितवन्तः। तदेवमनुश्रूयते– "दुष्टदुर्योधनप्रेरितः कश्चिद्राक्षसः प्रकृतिकोमलां कुसुमावचयाभिलाषिणीं सहसखीभिरुद्यानवनमागतां सुभद्रां स्वमायया बलादचूचुरत्।

विदितवृत्तान्तः अर्जुनः सहसा राक्षसं पश्चादनुधावन् तदन्तिकमेत्य, निहत्य तं परुषं राक्षसं, करालराक्षसपरुषहस्तपरिगृहीतामत एव मूर्छितां दूयमानावस्थां सुभद्रां प्रत्यानीय सपरिच्छदाय दुहितृवत्सलाय वसुदेवाय समर्पयत्। ओजस्विंतां, लोकोत्तरशूरतां चास्य तिरस्कृतमीनकेतनसुरूपतां च लोचनपुटैः पायं पायं सुभद्रा सलज्जमधोमुखी तिष्ठति। अथ च वसुदेवदेवकीबलरामकृष्णाः अमन्दानन्दतुन्दिलाः धनञ्जयैकानुरागिणीं मृगशावकायतनयनां सुभद्रां, तस्यै स्पृहयते सुभद्रामुखांभोरुहसहस्रकिरणाय धनञ्जयाय प्रायच्छन्।" एवं नाटकमिदं रसिकजनहृदयोल्लासकं ग्रथितं वर्तते।

श्रीचरणाः स्वकीयग्रन्थप्रणयनचातुर्येण अनेकान् महतः पण्डितान् अद्भुतमहासागरे न्यमज्जयन्। शमदमादितपश्चर्याप्रभावेण समस्त भक्तशिरोमणिभ्यः सकलेष्टार्थानन्वगृण्हन्। तदानींतनानां राजमहाराजाणां विशेषगौरवपात्रमासन्। तंजावूराधिपतिना चेवप्पनायकेन निजगुरुवराणां समक्षमेव महापूजां महादरकृतां स्व्यकुर्वन्। तस्यैवेच्छानुसारेण इमे तदातनकर्णाटक राजधानीं विजयनगरीं समीयुः: कर्णाटक सिंहासनाधिरूढः श्रीरंगराजः ससमस्तराजमर्यादं श्रीमत्पूज्यपादान् प्रत्युद्गम्य ससंभ्रमं राजप्रासादमानीय रत्नमयपीठमधिष्ठाप्य-अर्घ्यपाद्याद्युपचारैरपूजयत्। अमीषामनुपमपांडित्यं अणिमाद्यष्टैश्वर्यसिद्धि विशेषतो लौकिकज्ञानसंपदं च दर्शं दर्शं साश्चर्यं समान्दोलितोत्तमांगः श्रीमूलरघुपति वेदव्यासपूजार्थं युवसंवत्सरे माघकृष्णत्रयोदश्यां शिव-

रात्रि पुण्यदिने श्रीविरुपाक्षेश्वर सन्निधौ ससंकल्पं पुरतोनिर्दिश्यामाना-नेतेभ्यः ग्रामवरान् कृष्णार्पणधिया प्रादात् ।

१. तामरगेरे देशे बच्चनहाळः ।
२. बादामि देशे ख्याडः ।
३. मानवी देशे मलापहानदीरे यज्ञाळः ।
४. सिंधूसूरस्य अधस्तात् चेंचलः ।
५. तावुडुगुण्डीयादधस्तात् अरळीपल्लिः ।

इतीमे पंचग्रामाः श्रीपादैःस्वप्रभावेण संपादिताः ।

विजयनगरीय वेंकटपतिरायः " पेनगोण्डे " इति पत्तने अमीषां शिष्यो भूत्वा स्वविभवातिशयाददतितरां श्रीचरणान्कनकाभरणैरभ्यषिंचत् । विषयोयं श्रीगुरुगुणस्तवने एवं प्रत्यपादि ।

" व्याधूतावद्यहृद्यामितकृतिरचनाचारुचातुर्यहृष्यत्-
कर्नाटक्षोणिपालप्रतिपदरचितानेकरत्नाभिषेकः ।
पत्रीशारूढ लक्ष्मीपतिपदनलिनोदग्रलोलंबलीलः
विख्यातः श्रीसुधीन्द्रव्रतिपतिरतुलं भद्रमुन्निद्रयेन्नः ॥ "

यथाराजकीय शासनप्रमाणानुसारं विचार्यमाणे श्रीचरणाः बहुवर्षं संस्थानं व्यराजन् इति ज्ञायते । क्रिस्ताब्दस्य १६२० तमे चेंजीमूपति-वडियार् इति कश्चन मांडलिकः एतेभ्यः रौद्रि संवत्सरे भाद्रपदकृष्ण-षष्ट्यां पर्वकाले श्रीमुष्णक्षेत्रस्य मठे अश्वत्थनारायणसन्निधौ नान्मान् दीपानल्लूरु कोडिकालग्रामवरौ चोपायनावार्पयदिति प्रथितचरम् ।

एवं प्रथितयशसः श्रीचरणाः स्वसमग्रजीवितकालं नानादेशेषु संचरन्तः दशदिशो विजित्य, सकल तीर्थेषु स्नायं स्नायं तानि तीर्थानि पवित्रीकुर्वन्तः, चतुरुदधिमालामेखलामिमां भूमिं निजपादविन्यासैः पावनतमामाकलयन्तः, स्वेष्टतमभक्ताननुगृण्हन्तः नववृन्दावनमण्डिते पंपाक्षेत्रे फाल्गुनकृष्ण तृतीयायां तिथौ श्री मद्व्यासराजयतिसार्वभौम-बृन्दावन सन्निधौ सुन्दर वृन्दावनमेकं प्रविश्य विद्योतन्ते इत्यहो चिर-स्मरणीयानामगाधमहिमावतां अवतारकथानुवादस्य गरिमा चेत्यति-मङ्गलम् ।

---

कविप्रवरस्य

# रामभद्रदीक्षितस्य कृतयः

## श्रृङ्गारतिलकभाणः



श्रृङ्गारतिलकभाणः. काशीपतिविरचितात् मुकुन्दानन्दात् भाणरत्नात् वरदार्यनिर्मिताद्वसन्ततिलकात् भट्टभाणप्रणीतात् श्रृंगाररतिभूषणाच्चान्येभ्यो रङ्गराजचरित पञ्चबाणविजय श्रृङ्गारमञ्जर्यादिभ्योऽतिरिच्यते रसवत्तया स्वादुतया च। एतद्भाणग्रथने कारणमाविरकार्यनेनैव कविना ॥

वरदार्यनामा वैष्णवो वसन्ततिलकभाणं व्यरचयत्। तस्याम्माभाण इति लोके प्रसिद्धिः। अस्मद्दीक्षितशिखामणिं शिष्याः अय्या इत्येव सबहुमानमाह्वयन्। तैः प्रार्थितो भाणमेकमरचयत् शिष्यप्रीणनार्थम्। तस्याय्याभाण इति प्रसिद्धिः। यथैव कविनोक्तमस्मिन् दृश्यकाव्ये।

"प्रार्थितो निजशिष्येण रघुनाथेन धीमता।
श्रृङ्गारतिलकं नाम भाणं विरचयाम्यहम् ॥"

अस्मिन् भाणे मधुरापुरीवास्तव्यस्य भुजङ्गशेखराख्यस्य विटमुख्यस्य चरितं वर्णितं तन्मुखद्वारैव। श्रृङ्गाररसभूयिष्ठोऽयं ग्रन्थो रसिकानां यूनां मनः कवलयितुमलमिति किमु विस्तरेण। यथा ॥

केलीजन्म भुवौ भ्रुवौ कचभरः कादम्बिनीश्रीहरः
कोकस्पर्धिरुचौ कुचौ कुवलयच्छायामुषी चक्षुषी।
वल्लीवांछितसौभगं भुजयुगं वाचश्च माध्वीमुचः
पादौ पल्लवकान्तिडंबरभिदौ तस्याः किमन्यैर्गुणैः ॥

नेयं नारी कुसुमधनुषश्चायकी चापवल्ली
बद्धा मुग्धस्मितरुचिमिषादानने चामरेण।

हस्तालंबादिव युधि मुहुर्येन मध्ये कृशेयं
वेणीव्याजादिह विरचिता दृश्यते यत्र मौर्वी ॥

## रामचापस्तवः

रामचापस्तवस्तु चतुर्दशोत्तरशतसंख्याकैश्शार्दूलविक्रीडितवृत्तरचितैः श्लोकैः परिमितोऽयं ग्रन्थो वर्णयति रामचन्द्रधनुर्माहात्म्यं । श्लोकनिबन्धनार्थं समासभूयस्त्वं पदानां क्वचित्क्वचिदेव, परं तु व्यस्तपदैरेव प्रायशो विरच्यन्ते पद्यानि । यथा ।

एकं देहभृतामुभे हुतभुजस्त्रीण्यामयानां प्रभोः
चत्वारि द्रुहिणस्य पञ्च विषमापाङ्गस्य षट् शांकरेः ।
सप्तत्रीणि च रावणस्य फणिनां पत्युः सहस्रं तुदन्
ज्यानादेन शिरांसि संयति धनुर्यातुद्रुहः पातु नः ॥

हस्ते दाशरथेर्दिशो गुणरवैर्भक्ताय भद्रं द्विषा-
माटोपं मरुतां भयं हरिचमूं जेतुं रणे वैरिणः ।
भाति प्राति ददाति दाति हरति प्रीणाति जानाति यत्
तद्वांच्छामि च पूजयामि च धनुर्ध्यायामि च स्तौमि च ॥

## रामबाणस्वः

रामबाणस्तवस्तु स्रग्धरावृत्तनिबद्धाष्टोत्तरशतपद्यात्मकः प्रकटीकरोति रामबाणमहिमानं । अस्मिन् प्रासानुप्रासयमकादिशब्दालंकारा निरोष्ठ्य सर्वौष्ठ्य वर्णैरेव निबद्धाः श्लोकाः पद्मबन्धादिचित्रबन्धाश्च दृश्यन्ते ॥

## रामाष्टप्रासकाव्यं

रामाष्टप्रासकाव्यं तु, अकारादिवर्णमालाक्रमेण रघुनाथस्तवरूपः साष्टप्रासश्लोकमयं उत्पादयति रामभक्तिं सर्वेषां । अस्मिन् षोडशाधिकं शतं श्लोकास्सन्ति । प्रासार्थं समस्तपदसंदोहः कचित्क्वचिदेव । कविना स्वेनैवमुक्तम्

प्रासाय प्रयतेत चेद्गिरि तदा कासारवत्ता कवेः
 ह्रासायैव तु सा भवेन्मतिमतामासादिताचेत्पुरः ।
त्रासादेव विना तथा विरचिता मे साहितीः प्रासभाक्
 भासा निर्जितमेघ राघव कृपामासारयास्याः श्रुतौ ॥

अत्यन्तं विषयास्तुदन्ति हृदयं सत्यं मृषा न त्विदं
 नित्यं तेन मलीमसं भवति मे कृत्यं ततो भावि किम् ।
इत्यन्तः परितप्यते रघुपते गत्यन्तरं नास्ति मे
 सत्यंतावसरे त्वमेत्य सहसा भृत्यं तदा पाहि माम् ॥

विद्ध्वा यः कुहनामृगं विरहितं बद्ध्वा निरीक्ष्योटजं
 बुद्ध्वा पक्षिमुखात् प्रियां रिपुहृतां बद्ध्वा किमंभोनिधौ ।
रुद्ध्वा शत्रुपुरीं प्लवंगमभटैः क्रुद्ध्वा रणायागतान्
 युद्ध्वारीनजयत्स मे रघुपतिर्विद्ध्वाकृतिःस्याद्गतिः ॥

मुम्बापुरीविराजमाननिर्णयसागरयन्त्रालये मुद्रितांस्तदधिपतिना प्रकाशितानमून् ग्रन्थान् अवलोक्य यथामति रामभद्रदीक्षितचरित्रं तद्ग्रन्थवर्णनं चोपन्यस्तमस्माभिः । किं तु पण्डितमणयः अन्येषां कवीनां काव्यान्यवलोक्य तदुदन्तान् तद्ग्रन्थार्थांश्च श्रावयित्वा कृतार्थयन्त्वस्मादृशानिति साञ्जलिबंधमभ्यर्थयामहे वयमनारतमखिलार्थशिखामणीन् ॥

---

# विरोधाभासः ।

न शून्यदृष्टिर्न च दूरदर्शी
न चाविवेकी न विमृश्यकारी ।
न च्छन्दवर्ती न च तत्त्वनिष्ठो
न बुद्ध एषो न हि चाप्रबुद्धः ॥ १ ॥

न श्रद्दधानो न च तर्कनिष्ठः
न चात्मकारी न परोपदिष्टः ।
न दोषविन्नापि गुणैकदृष्टिः
न बालिशोऽयं नहि चाप्यभिज्ञः ॥ २ ॥

न कामकामी न च वीतरागः
न च क्षमावान्न हि कोपनो वा ।
न चासहिष्णुर्न हि चानसूयः
न लौकिकोऽयं न परार्थनिष्ठः ॥ ३ ॥

न संशयात्मा न च संयतात्मा
न धूर्तवृत्तिर्न च पथ्यवृत्तिः ।
न सक्तदृष्टिर्न च रिक्तदृष्टिः
न सज्जनोऽयं न च दुर्जनो वा ॥ ४ ॥

न च क्रियावान्न हि निष्क्रियो वा
न तन्द्रितो नापि धृतव्रतो वा ।
न युक्तकारी न दुरुक्तकारी
न सत्त्ववृत्तिर्न च मोहवृत्तिः ॥ ५ ॥

विचित्रसृष्टिस्तव देवदेव
शुभाशुभो मानव एष नूनम् ।
उच्चावचस्यास्य रहस्यभेत्ता
त्वमेव देवेश न मानवोऽहम् ॥ ६ ॥

— प्रा. कृ. त. पाण्डुरङ्गी ।
संस्कृतविभाग प्रधानाध्यक्षः कर्नाटक कालेज धारवाड·

# पौराणिकी काचित्कथा

कदाचिदात्मनः समीप उपविष्टौ कुमारौ श्रीगणेशकार्तिकेयाववलोक्य प्रौढौ विवाहयोग्यौ चैताविति विचिन्त्य च भगवन्तौ पार्वतीपरमेश्वरावूचतुः। वत्सौ आसन्नो यूवयोर्विवाहावसरः। किंतु यः सकलामपि पृथिवीं प्रदक्षिणीकृत्य प्रथममुपागच्छेत्तस्यैव प्रथमं क्रियेत विवाहः। इति। तदाकर्ण्य एव क्रियतामित्यभिधाय सोत्साहः कार्तिकेयः पृथिवीं प्रदक्षिणीकर्तुं प्रतस्थे। श्रीगणेशस्तु विचारयामास अहो कथं नाम सत्वरं प्रदक्षिणीक्रियतां मया पृथिवी। नास्मि खल्वहं चपलः। तत्किन्वत्र कर्तव्यम् (इति विचार्य क्षणं तूष्णीमिव स्थित्वा स्मरणमभिनीय) आम् अस्त्यत्रापि कश्चिदुपायो येनास्मात्कैलासशैलात् पदात्पदमप्यप्रतिष्ठमानेन मया शक्यते प्रदक्षिणीकर्तुं पृथिवी। इति स्वगतमभिधाय सत्वरमुत्थाय प्रथमतः स्नानं चक्रे। ततः सौवर्णमासनद्वयमानीय संभृताशेषोपचारः पितृदेवावुपगत्य बद्धाञ्जलिः प्राह। देव तात भगवति अम्ब इच्छाम्यद्य युवयोः पूजनेनात्मानं कृतार्थीकर्तुम्। तत् अनुगृह्यतामासनपरिग्रहेणायं जन इति। तदाकर्ण्य सन्तुष्टौ श्रीपार्वतीपरमेश्वरौ एवमस्त्वित्यभिधाय तथाऽकुरुताम्। ततः श्रीगणपतिरपि पीठमधिष्ठितयोः पित्रोर्यथावत्पूजां निर्वर्तयामास। ततस्त्रिः प्रदक्षिणीकृत्य प्रार्थयामास सिद्धिमभीप्सितस्य।

अवसिते च पूजनेऽपरस्मिन्दिवसे सुखोपविष्टौ पितरावुपसृत्य रचिताञ्जलिः श्रीविनायकः प्राह। भगवन्तौ विधीयतां मे विवाह इति। तदाकर्ण्य पार्वतीपरमेश्वरौ (सहासम्) वत्स अपि प्रदक्षिणीकृता त्वया पृथिवी। श्रीगणेशः—न केवलमेकदा अपि तु त्रिःप्रदक्षिणीकृता मया भूमिः। पार्वती—कथम्। श्रीगणेशः–अम्ब किं न विदितं ते शास्त्रकाराणामिदं वचनं यत्

माता पृथिव्या मूर्तिस्तु पिता मूर्तिः प्रजापतेः। इति॥

मया किल त्रिः प्रदक्षिणीकृता भवती सह पितृदेवेन। तत्कथमद्यापि नेष्यते मे विवाहः। तच्छ्रुत्वा बुद्धिमत्तरोऽयमिति निश्चित्य भगवन्तौ श्रीगिरिजाशङ्करौ महतोत्सवेन तस्य विवाहं चक्रतुः। इति शिवम्

Regd No. B. 7171

# मधुरवाणी नियमावली

ये पंचनवीनग्राहकान् सम्पादयन्ति तेभ्यः विना मूल्यं मधुरवाणी पत्रिका प्रेष्यते ।

वर्षे यदा कदाचिदपि वा ग्राहकत्वं स्वीकर्तु शक्यते । यदा ग्राहकता स्वीक्रियते तद्दिनादारभ्यैव वर्षपर्यन्तं द्वादशसञ्चिकाः प्रदीयन्ते ।

विना मूल्यं आदर्शसञ्चिका न प्रहीयते । अवलोकनार्थं सञ्चिका अपेक्षमाणैः अष्टाणक पोस्ट-टिकीट प्रेषणं कार्यम् ।

व्हि. पी. द्वारा पत्रिका नैव प्रेष्यते । प्रतिवर्षं वर्षारंभे मनिऑर्डर द्वारा एव शुल्कं प्रेषणीयम् ।

ग्राहकेतरेषामपि लेखाः सरसाश्चेत् प्रकाश्येरन् । असुवाच्याक्षराः नीरसाः दीर्घतराकाराः कठिणतमाश्च लेखा नैव अवसरमासादयेयुः । सरलतमानां लेखानां प्रथमप्राशस्त्यं प्रदीयते ।

BOOK-POST

To,
Shree The Registrar Gurukula ...
Post: Gurukul Kangri.
Dist: Saharanpur.

कांगड़ी गुरुकुल

If addressee is not found
please return to sender.

Pandharinathacharya
Galagali
Aditor Madhurwani
Madhurwani Office Gadag (Karnatak)

Printed at the New Gadag Printery Godag. by P. S. Hombali
and Pablished by Pandharinathacharya Galagali at Gadag.

जगद्गुरुश्रीमद्राघवेंद्र मठाधीश श्रीसुयमींद्रतीर्थ स्वामिपादानां

कृपापोषिता

# मधुरवाणी

## संस्कृत मास पत्रिका

प्रधान संम्पादकाः

कविकुलतिलक विद्यावैभव वेदान्तशिरोमणि साहित्यालंकार

राजा एस्. गुरुराजाचार्याः

*

संम्पादकाः

गलगलीत्युपाह्वाः पण्ढरीनाथाचार्याः



वार्षिक मूल्यं रु० ५ एकांकस्य ०-८-०

## मङ्गलाचरणम्



भूमाविहेत्य बलभूमापनुन्ननिजभूमानिर्निभरमरि-
स्तोमासुरेशहृतरामाविमोचकमहो मानवाकृतिविभुम् ॥
सीमातिगामिगुणधामाम्बुदालिसमधामानमाश्रय हरिं
क्षेमाय दिव्यतमरामाभिधानमभिरामाङ्गकान्तिकमनम् ॥

१

स्वर्णश्रीमृगतृष्णया जनकजेवाहं हृतस्तावत्
त्वन्मोहेन जितो विभीषण इवाहं बान्धवद्रोहकृत्
तत्तद्दोषयुतांश्च तानपि जनानुद्धृत्य मां तादृशं
राम क्षेमक नेक्षसेऽङ्घ्रिपतितं ते किं नु वोपेक्षसे ॥

२

सर्वेषां विदितं 'न तेन हि विना किञ्चित्तृणं संचलेत्'
किं त्वस्येरणतो चलेदपि तृणं कुर्याच्च कृत्यं महत् '।
एवं लोकनिदर्शनाय नु तृणं ब्रह्मास्त्रयन्निन्द्रजं
शासत् स्वां जगदीशतां हरिरसौ प्रख्यापयन्नः श्रियै ॥

३

"मां यः कोऽपि सकृत्प्रपद्य निगदेत् 'स्वामिन् तवास्मीति' चेत्
तस्याहं ह्यभयं ददामि भृश" मित्यासीद् व्रतं यत्तव
तत्किं विस्मृतमेव किं स्मृतमपि त्यक्तं, नु मिथ्याब्रवीः
राम! त्वा सकृत्प्रपन्नमपि मां यन्नोद्धरस्याशु भोः

४

## भावावतरणिका

फुल्लत्पल्लवपुष्पतल्लजफलान्यापूरयन् शाखिषु,
पुष्पेष्वेषु मधूनि, तत्र मधुपान् , गुञ्जारवं तद्गले ॥
तस्मिन्मञ्जुलतांहि तत्र च पुनर्हृन्मादकत्वं तथा
तन्वन् तत्र च मोदकत्वमुदितश्चैत्रो विचित्रो भुवि ॥

## गुरुवन्दनम्

मध्वाचार्यनिरूपितेन सुजनक्षुण्णाध्वना यान् पुरो
दुर्ध्वान्तोपमदुर्मतानि वचनैर्विध्वंसयन् वैदिकैः
विश्वालोकयशोभिभासितदिशावध्यान्नो योगिना-
मध्वर्युः सुयमीन्द्रतीर्थयतिराट् साध्वर्चितो नः श्रिय ॥

# मधुरवाणी

सुधानिष्यन्दिन्या मधुरमधुरापकलया चिरावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालंकारा रसिकजनचेतांसि सहसा वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

२४ वर्ष । विकारिसंवत्सर चैत्रमाससञ्चिका । अंकः १

## वत्सरादौ विज्ञप्तिः

वस्तुतो नासीदेव नः कल्पनापि यदियं मधुरवाणी विकारिण्यपि वत्सरे निर्विकारा यथाप्रकारमात्मानमाविष्कुर्यादिति । सत्यमत्र मधुरवाणीमहासंरक्षकत्व-धुरामाबिभ्राणानां श्रीसुयमीन्द्रतीर्थ श्रीस्वामिपादानां कृपारसपूर एव प्राभवत् आर्थिकापदावर्तभ्रमितः समुद्धर्तुं इमां पत्रिकाम् । अतः पुनर्नववर्षारम्भे तेषामेव गुरुचरणानां दिव्यंसन्निधौ प्रणामस्तोमं समर्पयामः पुरस्तादभ्युदग्रभूतिकाम्यया ।

विगतवत्सरस्य अन्त्यभागे मुद्रणालस्य असौकर्यात् नापारयाम बहुप्रयत्नापि सकाले सञ्चिका आविष्कर्तुम् । ततो जिह्रेति चेतः पुरस्तादपि यथासमयमंकानाविष्करिष्याम इति समाश्वासयितुं वाचकान् । पदे पदे प्रतिज्ञाभङ्गमाकलयतां नः शुष्काश्वासनेषु कथं वा विश्वसितु वाचकवर्गः । कथंतरां च नः प्रामाणिकमपि वचनजातं प्रत्येतु श्रद्धेयमिति सुज्ञसमूहः ।

तथापि संरक्षकधौरन्धरीं सनाथयद्भिः जगद्गुरुपीठाधिष्ठित श्रीसुयमीन्द्रतीर्थ श्रीचरणैः विहितसुप्रबन्धबलात् सधैर्यमाचक्ष्महे यत् नेतः परं मधुरवाणीप्रकाशने विलंबः सम्भवेदिति। वाचकैरपि दृढं प्रतिज्ञातव्यं यत् प्रथमाङ्कप्राप्त्यव्यवहितोत्तरक्षण एष शुल्कं प्रेषयिष्याम इति । उभयेषामपि प्रतिज्ञापूरणं विदध्यात् पूर्णगुणः परमात्मा इतिप्रार्थ्य विरम्यते ।

## जामित्रशब्दविचारः

केचित्तु कुमारसंभवेनैव कालिदासस्य कालं निर्णेतुमिच्छन्ति। तथाहि कुमारसंभवे सप्तमसर्गे प्रथमं पद्यम्।

> अथौषधीनामधिपस्य वृद्धौ
> तिथौ च जामित्रगुणान्वितायाम्।
> समेतबन्धुर्हिमवान्सुताया
> विवाहदीक्षाविधिमन्वतिष्ठत्॥ इति।

अत्र च विद्यमानो जामित्रशब्दो ग्रीकभाषावर्तिनो डायमेट्रन (Daymetran) शब्दस्यापभ्रंशः। यदा खल्वार्या ग्रीकेभ्यो ज्योतिःशास्त्रमधिजगिरे तदैव ग्रीकभाषातः संस्कृतभाषां प्रविष्टोऽयं शब्दः। यैः पुनरार्यपण्डितैर्ग्रीकेभ्यो ज्योतिषमधीतं तेष्वार्यभट्ट एव प्रथम इति स्वीयप्रबन्धे जामित्रशब्दमुपनिबध्नतं सुस्पष्टमेव कालिदासस्यार्यभट्टतोऽर्वाचीनत्वम्। आर्यभट्टश्च ख्रिस्तीयपञ्चमशताब्द्या-मुत्पन्न इति ततोऽर्वाचीनस्यार्थादेव षष्ठशताब्द्युत्पन्नत्वं कालिदासस्येति।

स्यादेतद्यदि जामित्रशब्दो डायमेट्रन्शब्दस्यापभ्रंश एव स्यात्। तदा ह्यपभ्रंशत्वं शब्दानामङ्गीकरणीयं यदा स्वाभिमतभाषायां नैते व्युत्पादयितुं शक्येरन्। नैव पुनर्जामित्रशब्दस्य तथात्वं दृष्टम्। शक्यते ह्ययं संस्कृतभाषायां व्युत्पादयितुम्। प्रयुक्तश्च प्राचीनतमैर्मुनिभिः। व्युत्पत्तिस्तावज्जामिं स्त्रियं जायामिति यावत् त्रायत इति जामित्रमिति। तच्च लग्नात्सप्तमं स्थानमिति ज्यौतिषिकाणां परिभाषा। तत्रैव हि जायाविषयकं शुभाशुभं पर्यालोच्यत एतैः। जामिशब्दश्च श्रुतिष्वपि प्रयुक्तो दृष्टः। यथा ऋग्वेदे सप्तमाष्टकस्य द्वितीयेऽध्याये स्वसारो जामयस्पतिम्। इति। तृतीयाष्टकस्य चतुर्थेऽध्याये त्रयोविंशे वर्गे च जामिमजामिं प्रमृणीहि शत्रुम्। इति। स्मृतावपि जामया यानि गेहानीति मनुः। विद्यते च संस्कृतभाषायां त्रैङ् पालन इति धातुः। न चावयवयोः प्रसिद्धत्वेऽपि नावयविनः प्रसिद्धत्वमिति वक्तव्यम्। देवर्षिनारदप्रणीतायां नारदसंहितायां जामित्रशब्दस्यापि प्रयोगदर्शनात्। तत्र हि विवाहाध्याये जामित्रशुध्द्येकविंशन्महादोषविवर्जितम्। इत्युक्तम्। न चाभि-धानग्रन्थेषु जामित्रशब्दस्यानवलोकेनाहुर्वारमर्वाचीनत्वमिति प्रवक्तव्यम् तत्तच्छास्त्रे पारिभाषिकत्वेनाङ्गीकृतानां शब्दानां कोशादावनुपनिबन्धात्। न हि व्याकरणादावेव प्रसिद्धा गुणवृध्द्याशयप्रकृतिसत्प्रतिपक्षपक्षपरामर्शादयः शब्दाः कोशे दृष्टाः।

पारिभाषिका ह्येते। ज्यौतिषग्रन्थेषु तु जामित्र शब्दः सप्तमस्थानवाचीत्युक्तम्। तथा हि जातकालङ्कारे ‡ ‡ जामित्रमस्तं स्मरमदनमदद्यूनकामाभिधानम् इति सप्तमस्थानपर्यायेषु प्रोक्तम्। प्रयोगश्च एकैव भौमार्कनवांशके च जामित्रभावस्थान बुधार्कयोर्वेत्य भरणादौ।

एवं चानपभ्रष्ट एवायं जामित्रशब्द इति नैष कालिदासस्यार्वाचीनतामापादयितुं प्रभवतीति द्रष्टव्यम्। अथ यदि ज्योतिःशास्त्रं सर्वथा ग्रीकेभ्य एवोपात्तमार्यैरित्यभिमानस्तदा हा आर्यविद्यानां दौर्भाग्यमितिब्रूमः। श्रुतिष्वपि ह्युपलभ्यन्ते ज्यौतिषिका नियमा इति। इति जामित्रशब्दविचारः।

---

## धर्मस्य सूक्ष्मा गतिः

कस्मिंश्चिद्देशे सत्यव्रतो नाम कश्चिद्दरिद्रः साधुतमो ब्राह्मणो निवसति। स तु यथाकालं विद्यामभ्यस्य परिणीय च साधुशीलां समानगुणरूपां विदुषीं काञ्चिद्दुःखेनैव दिनान्यत्यपातयत्। अहो दुर्भाग्यतया पण्डितस्यापि तस्य दिनमेकमपि विना भिक्षां सुखेन न निष्पेदे।

अथैकदा ब्राह्मणी सायन्तनात्प्राग्भिक्षार्जिततण्डुलान्पक्त्वा भर्त्रे भोजनाय ददौ। ब्राह्मणस्त्वसम्पूर्णेऽप्युदरे स्वयमर्धभुक्तः पत्न्यैचार्धं रक्षितवान्।

पत्नी चाकृताहारा निर्गलदश्रुलोचनाऽसम्यग्भोजिनं भर्तारं दीर्घमुष्णं च निःश्वस्य सनिर्वेदं प्राह। नाथ! इत्थमेवातियतिष्यति किमावयोः कालः ईदृश्येव किमावयोरदृष्टलिपिः। यत्पण्डितमपि भवन्तं दैन्यं न जहाति।

अहो सम्प्रति राज्ञो यस्याधिकारे निवसावस्तेन सुदूरदेशादागताः कतमा वा पण्डिता न प्रतिपाल्यन्ते। केवलं भवन्तमेकं पोषयितुं स किं रिक्तशक्तिः। अहो किमाक्षिपामि विनाऽदृष्टम्। अहो पण्डितेन राजभवनं गन्तव्यं सभायामुपवेष्टव्यं शास्त्रार्थः कर्तव्यो राजा स्तोतव्यस्तदीयं मनस्तोषयितव्यं तेन हि धनमप्यर्जितव्यम्। विना हि नृपानुगत्यं विदुषां नान्या गतिर्न च समुन्नतिर्नैवाहृतिरिति मया मुहुः प्रतिबोधितोऽपि यद्राजदर्शनेऽसि विमनास्तन्नूनमावां न परित्यक्ष्यति दौर्गत्यमिति।

एवं विलपन्तीं ब्राह्मणोऽवादीत्। प्रिये! धनिष्ठमहं भौमं नरकमन्यादृशं मन्ये। तत्केवलं प्रतारणाया मिथ्यायाः कपटताया अपमानस्य च निवासभूमिः।

तत्र सम्मानलाभे राजप्रसादावाप्तौ च प्रभूताः प्रत्यूहा विराजन्ते। तेनाहं वरं भिक्षा श्रेयसी शस्तमेकाहान्ते भोजनं तथापि धनिसेवनं क्लेशकरमिति मन्ये।

ततोऽपि ब्राह्मणी पुनराह। नाथ भद्रम्। शठतादिदोषाणां संस्रवेऽपि त्वया न गन्तव्यम् किन्तु ब्राह्मणस्याशीर्वाद एव परमः सहाय इति तमवलम्ब्य तत्र गन्तव्यम्। अपि च गत्वा च राजसदनं किञ्चिदन्यदनालप्य केवलं मयोदीरिता धर्मस्य सूक्ष्मा गतिरिति समस्या प्रष्टव्या। तेन हि द्रव्यावाप्तिभाग्यमेकदा परीक्ष्यताम्।

ततो ब्राह्मणो ब्राह्मण्या निर्बन्धातिशयेनान्तर्निर्विण्णः पुनराह। प्रिये सत्यं ब्रवीमि शाठ्यादिदोषमकुर्वाणमपि मां स समाचरिष्यतीति तथाप्यहं यास्यामि।

अथ प्रभातायां यामिन्यां स्नातः सर्वाङ्गार्चिततिलकः कृतनित्यक्रियः स्वेष्टदेवतां स्मरन् राजदर्शनाय प्रतस्थे।

अथ यथासमयं तत्र गत्वा राजद्वारि प्रविशतोऽनेकान्वीक्ष्य सञ्जातवेपथुः प्राविशत्। प्रविश्य चान्यैर्ब्राह्मणैः सह राजसाक्षाद्गतवान्। तत्रान्ये ब्राह्मणा राज्ञे यथाऽऽशिषं विदधाति तदनुकृत्य तेनापि ब्राह्मणेन महाराज जयोऽस्त्वित्याशीर्विधाय धर्मस्य सूक्ष्मा गतिरिति समस्या कृता।

अथैवं कृतसमस्यं विलोक्य ब्राह्मणं राजापरान्पाण्डितानुवाच हे पण्डिताः झटिति समस्येयं पूरयितव्या भवद्भिरिति। भूपतेरेतद्वचनमाकर्ण्य कश्चित्पण्डितस्तां समस्यामपूरयत्। यथा—

> **यातः क्ष्मामखिलां प्रदाय हरये पातालमूलं बलिः**
> **सक्तुप्रस्थविसर्जनात्स च मुनिः स्वर्गं समारोहयत्।**
> **आबाल्यादसती सती सुरपुरीं कुन्तीत्वयासीत्पृथा**
> **हा सीता पतिदेवता जगदधो धर्मस्य सूक्ष्मा गतिः॥**

इति पूर्णसमस्यं श्लोकमाकर्ण्य प्रसन्नचेता राजा तच्छ्लोकं पुनःपुनरावृत्त्य तुतोष। सार्धं च सत्यव्रतेन शास्त्रीयमन्यच्च संलप्य प्रीतिमनुभूय च सबहुमानं धनं दत्वा प्रत्यहमागन्तुं च प्रार्थयामास।

ब्राह्मणोऽपि बाढमित्युक्त्वा निष्क्रान्तः स्वगृहमागत्य सर्वं पत्न्यै कथयंस्तद्धस्ते धनान्यर्पयामास। पत्नी तु हास्यमुखी हृष्टान्तःकरणाऽहो खण्डितावयोर्दुर्गतिरिति सुखमुवास।

ततस्तथैव स प्रत्यहं राजभवनं गच्छति शुभाशिषं करोति महाराज। धर्मस्य सूक्ष्मागतिरिति पृच्छति धनमादत्ते गृहीतं च धनं पत्न्यै समर्पयति सुखेन च समयं नयति स्म।

# श्रीसायणाचार्यस्य जीवनवृत्तम्

अथ विदितमेव विमलधिषणानां विद्वद्धौरेयाणां चतुर्वेदभाष्यरचयितुस्तत्र भवतः श्रीसायणाचार्यस्याभिधानम् । अखिलेऽस्मिन् भारते वर्षे नास्त्येव तादृक् कश्चन वेदशास्त्रज्ञानसम्पन्नो विपश्चित् येन नाधुनापि श्रुतिगोचरीकृतं श्रीमतां सायणाचार्याणां नाम । श्रीमता सायणाचार्येण विरचितानि निखिलमपि सरहस्यं श्रुत्यर्थजातं प्रदीपा इव प्रकाशयन्ति अज्ञानतमस्काण्डमुन्मूलयन्ति चतुर्णामपि वेदानां भाष्याणि सततं रञ्जयन्ति विपश्चितां चेतांसि । साम्प्रतं भगवत्याः श्रुत्या यः कश्चिदर्थः प्रतीयते, यत् किमपि रहस्यमस्माकं बुद्धिपथमवतरति, निखिलमपि तत् श्रीसायणाचार्यस्यानुग्रहविलासितमेवेति ध्रुवं मन्यामहे ।

साम्प्रत वेदभाष्यप्रणेतुः श्रीसायणाचार्यस्य जीवनवृत्तान्तमधिकृत्य किमपि संक्षेपेण विचारयामः । दिष्ट्या भाग्यभाजो वयं यदावश्यकं सकलमपि श्रीसायणीयं वृत्तं ज्ञातुं विद्यन्तेऽस्माकमुपयोगाय प्रमाणभूतानि बहूनि साधनजातानि । ग्रन्थकृद्भिरेव स्वनिर्मितानां ग्रन्थानामादौ स्ववंशपरिचयः स्वयमेव प्रदर्शित इति नितरामस्माकं प्रमोदस्थानम् । विजयनगरमहाराधिराजाणां बहूनामपि शिलालेखेभ्यः शासनपत्रेभ्यश्च बह्वप्यपेक्षितं वृत्तजातमुपलभ्यते श्रीमदाचार्याणामित्यपरमपि हर्षनिदानमैतिहासिकानाम् ।

तत्र सायणस्य जनको मायणो नाम जननी च श्रीमतीनाम्नी । गोत्रेण स भारद्वाजो बभूव । कृष्णयजुर्वेदस्य तैत्तिरीयशाखा बोधायनसूत्रं च तस्य स्वीये आस्ताम् । तस्य द्वौ भ्रातरौ वेदशास्त्रसम्पन्नौ बृहस्पतिशुक्रसदृशावभूताम् । तयोर्ज्यायान् माधवाचार्यो विजयनगरसाम्राज्यसंस्थापकानां महाराजाधिराजश्रीहरिहराणामासीत् मन्त्रिमूर्धन्यो विपश्चिदपश्चिमश्च । कनीयान् श्रीभोगनाथश्चाभवत् संगमनरपतेः नर्मसचिवः कमनीयकाव्यकलाकुशलः कवयिता च । एतत् सर्वं वृत्तान्तजातं सायणीयग्रन्थांशानामधोलिखितानामालोचनया स्फुटं भविष्यति ।

अलङ्कारसुधानधौ—

**महेन्द्रवन्माननीयो मन्त्री मायणसायणः ।**
**मण्डलेषु कृतचारमडण्लः सायणो जयति मायणात्मजः ।**
**मन्त्री मायणसायणस्त्रिजगतीमान्यापदानोदयः ।**

इति श्रीमत् पूर्व-पश्चिम-दाक्षिणोत्तर-समुद्राधिपतिबुक्करायप्रथमदेशिकमाधवाचार्यानुजन्मनः श्रीमत्संगमराजसकलराज्यधुरन्धरस्य सकलविद्यानिधानभूतस्य भोगानाथाग्रजन्मनः श्रीमत्सायणाचार्यस्य कृतावलङ्कारसुधानिधौ।

सुभाषितसुधानिधौ—

भरद्वाजान्वयभुजा तेन सायणमन्त्रिणा।
व्यरच्यत विशिष्टार्थः सुभाषितसुधानिधिः।

इति पूर्वपश्चिमसमुद्राधीश्वरारिरायविभाल श्रीकम्पराजमहाप्रधान-भरद्वाजवंशमैक्तिक- मायणरत्नाकरसुधाकर- माधवकल्पतरुसहोदर- श्रीसायणाचार्यविरचिते सुभाषितसुधानिधौ।

प्रायश्चित्तसुधानिधौ —

तस्य (सङ्गमस्य) मन्त्रिशिरोरत्नमस्ति मायणसायणः॥
तेन मायणपुत्रेण सायणेन मनीषिणा।
ग्रन्थः कर्मविपाकाख्यः क्रियते करुणावता॥

श्रीमाधवभोगनाथसहोदरस्य मायणनन्दनस्य सायणाचार्यस्य कृतौ प्रायश्चित-सुधानिधौ।

यज्ञतन्त्रसुधानिधौ—

तस्या (संगमस्या) भूदन्वयगुरुस्तत्त्वसिद्धान्तदर्शकः।
सर्वज्ञः सायणा..र्यो मायणार्यतनूद्भवः॥
उपेन्द्रस्येव यस्यासीदिन्द्रः सुमनसां प्रियः।
महाक्रतूनामाहर्ता माधवार्यः सहोदरः॥
अधीताः सकला वेदास्‍ च दृष्टार्थगौरवाः।
तत्प्रणीतेन तद्भाष्यप्रदीपेन प्रथीयसा॥

माधवीयधातुवृत्तौ—

अस्ति श्रीसंगमक्ष्मापः पृथ्वीतलपुरन्दरः।
तस्य मन्त्रिशिरोरत्नमस्ति मायणसायणः॥
तेन मायणपुत्रेण सायणेन मनीषिणा।
आख्यया माधवीयेयं धातुवृत्तिर्विरच्यते॥

# चरित्रम्

सायणाचार्यस्य चरित्रमुद्दिश्य स्तोकमपि वर्णनं साम्प्रतं साम्प्रतं भाति । तच्चरित्रपर्यालोचनं कस्य नास्ति विस्मयकरम् । क्व सा सततशास्त्राभ्यासजनिता ज्ञानपरिपाकसहजा वैदिकतत्त्वमीमांसा, क्व च सा लौकिकव्यवहारनिरीक्षणसमुत्पन्ना राज्यकार्यभारक्षमा राज्यनिपुणता । उभयोरस्मिन् विद्वज्जने सामानाधिकरण्यं साक्षात्कृत्य न कस्य मानसं विस्मयोल्लासबहुलां वृत्तिमातनुते । व्यवहारपरमार्थयोरेकाश्रयलाभो नाम नूनं दुर्लभ इव दृश्यते जगति । परन्तु सायणार्ये यादृशी परमार्थविषये जागरूकता नेत्रगोचरीक्रियते, तादृश्येव लौकिकव्यवहारेऽपि चेतश्चमत्कारिणी चतुरता चक्षुर्विषयीक्रियते । वेदभाष्यप्रणेतुः सायणाचार्यस्य ज्ञानगरिमा नूनं सहजः, परन्तु विपुलवाजिगजसङ्कुले समराङ्गणेऽपि अरातिव्रातविजयस्तस्य कस्य विस्मयावहो नास्ति ।

प्रथमं सायणो विजयनगरसाम्राज्यस्य पूर्वविभागस्थे साम्प्रतं नल्लोरेतिनाम्ना ख्याते प्रदेशे शासनं कुर्वतो महाराजहरिहरानुजस्य कम्पमहीपतेरमात्यपदमलमकार्षीत् । दिवं गते तस्मिन् राजनि तत्सुनुः सङ्गमभूपालो बालतयाऽनधिगतशास्त्रतया च राजकार्योद्वहने नितरामक्षमो बभूव । अतः सायणाचार्य एव सङ्गमभूपालस्य कृते निखिलं राज्यभारं वोढुं स्वीचकार । अध्यापयामास च पितृविहीनं सङ्गमनरेन्द्रं राजनीत्याद्युपयोगिनीः सकला विद्याः । विततमपि राज्यं सायणः सम्यक्तया अशात् । समराङ्गणेऽपि स्वबाहुबलपराक्रमं वैरिणां शिरश्छेदेन प्रकटीचकार । प्रान्तस्थान् देशांश्च बहून् जिगाय । चम्पनामानं चोलराजं विजित्य दिक्षु स्वीयां शुभ्रां कीर्तिं विस्तारयामास । 'गरुडनगरा'भिधानं नगरं सङ्गमनरेन्द्रेण साकमाक्रम्य तन्नगराधिपं जित्वा स्वपादानतमूर्धानं व्यदधात् सायणाचार्य इत्यपि शिलालेखस्थप्रशस्तेरवगम्यते । सर्वमेतत् वृत्तान्तजातं 'अलङ्कारसुधानिधि' निरीक्षकाणां विदुषां सद्य एव स्फुरिष्यतीति मत्वा केचनाऽऽवश्यकास्तत्रत्याः श्लोकाः प्रमाणतयाऽत्र समुद्ध्रियन्ते

**जगद्वीरस्य जागर्ति कृपाणः सायणप्रभोः ।**
**किमित्येते वृथाटोपा गर्जन्ति परिपन्थिनः ॥**

× × ×

अमुं शमितशात्रवास्थिरभुजावलेपोदयं
समीक्ष्य युधि सायणं समधिको भवेद्विस्मयः
नखाग्रहतवैरिणो नरहरेर्हरस्याथवा
नवाम्बुजदलोल्लसन्नयनमात्रदग्धाद्विषः ॥

× × ×

समरे सपत्नसैन्यं सायण ! तव बिम्बितं वहन् खड्गः ।
क्रीडति कैटभरिपुरिव बिभ्रत् क्रोडे जगत्त्रयं जलधौ ॥

× × ×

दिष्ट्या दैष्टिकभावसंभृतमहासम्पद्विशेषोदयं
जित्वा चम्पनरेन्द्रमूर्जितयशाः प्रत्यागतः सायणः ।

सायणाचार्यविहितसुशासनसम्भूतस्य सार्वत्रिकस्य वैभवस्य निदर्शकोऽयं श्लोको नैव विस्मरणीयो विद्वज्जनैः—

सत्यं महीं भवति शासति सायणार्ये
सम्प्राप्तभोगसुखिनः सकलाश्च लोकाः ।

अथ राज्यभारवहनक्षमे सङ्गमभूपतौ राज्यधुरं निपुणमारोप्य सायणो ज्यायसा भ्रात्रा माधवाचार्येण सह बुक्कनरेन्द्रस्य मन्त्रिपदमधिकृतवान् । अनन्तरं तत्प्रोत्साहनैः समुत्साहितो वेदानां भाष्याण्यरीरचत् । बुक्कस्य निधनानन्तरं तत्सूनोः हरिहरमहाराजस्यापि कतिचित् समा अमात्यपदवीमभजत । हरिहरनिदेशं प्राप्य अथर्ववेदशतपथब्राह्मणादीनाञ्च व्याख्यानानि निबन्ध तद्राज्यकाले एव १४४४ वै० ( १३८७ ईशवीये) वर्षे सायणार्यः संस्मरणीययशाः संजातः ।



# महाराज्ञी दुर्गावती

यवनदिल्लीश्वरेषु अकबरचक्रवर्ती शौर्येण चातुर्येण च साम्राज्यविस्तारं अत्याधिकं अकरोत् । जनानुरागसंपादने अतिचतुरः स सम्राट् पराजितानपि राज-महाराजान् स्वमित्राणीव मानयति स्म । तस्य मित्रमण्डले मन्त्रिवर्गे च यवनापेक्षया हिन्दूनामेव प्रभावः विशेषतः अदृश्यत । तस्य सामर्थ्येन सौहार्देन च आक्रान्ताः आकृष्टाश्च भूत्वा प्रायः सर्वेऽपि भारतीयाः राजानः तस्य माण्डलिकतां व्याप्यवृत्तितां न स्वीचक्रुः । स्वाभिमानिनः वीरवरेण्या अपि शूरसिंहा अपि सूर्यचन्द्रवंशीयाः राजपुतराजाः स्व स्वातन्त्र्यं रक्षितुं न शक्ता अभवन् । तस्य सार्वभौमत्वमंगीकृत्य तन्मनःप्रीणनाय तस्य अनुग्रहविशेषसंपादनाय च स्व-स्व-पुत्रीः अपि प्रभूतकरेण सह प्रदाय स्नेहसम्बन्धं अभिवर्धयांबभूवुः ।

तदा अकबरसार्वभौमस्य अधीनतां अनंगीकुर्वत्सु राजपूत–पूतराजेषु गढामंडलाधिपतिः गौडराजः दलपतिशहः प्रमुख आसीत् । अकबरस्य प्रचंडसेना-सागरस्य आर्भटीमपि स्वशौर्येण तृणीकृत्य सः वीरवरः स्वस्वातन्त्र्यं ररक्ष । दुर्गमेषु कान्तारकन्दरेषु निलीय यवनसेनां लीलया जिगाय हेलया ममार च ।

अस्य किल वीरवरस्य दळपतिशहस्य शौर्यं स्वाभिमानकीर्तिं च श्रुत्वा राजकुमारी दुर्गावती तस्मिन् अनुरक्ता बभूव ।

मध्यभारतस्य महोब्बासंस्थानाधीश्वरस्य श्री चन्देलमहाराजस्य एकैव पुत्रिका दुर्गावती नाम्नी बभूव । जन्मत एव स्वातन्त्र्यप्रिया स्वदेशाभिमानिनी मानिनीमणिः दुर्गावती अकबरचक्रवर्तिनः असंख्यसैन्यव्यूहं अभिमन्युवद् एकाकितया विरुध्य नियुध्य विभिद्य विच्छिद्य तदा तदा तत्र तत्र व्यापादयतः तस्य रजपूतराजकेसरिणः दळपतिशहस्य साहसकर्माणि चारणमुखेन सहर्षं शुश्राव तस्मै च क्षत्रियकुलचूडामणये स्वहृदयं रुक्मिणीव कृष्णाय दमयन्तीव नलाय निभृतं निवेदितवती ।

तस्याः मातापि सखीद्वारा एतद्वृत्तान्तं ज्ञात्वा रहसि समाख्यातवती पत्यै चन्देलराजाय । चन्देलः पुत्र्या अमुमभिप्रायं नान्वमोदत । दळपतेः राज्यम् अतीव अल्पं, स्वल्पं च तदीयम् ऐश्वर्यम् । अतः केनापि स्वसमानवंशीयेन राजपुत्रेणैव दुर्गावत्याः विवाहः कार्य इति निश्चित्य स्वयंवरमेव आघोषयामास ।

सर्वेभ्योऽपि समानवयोविद्यावीर्यैश्वर्येभ्यः राजकुमारेभ्यः स्वयंवरनिमन्त्रण पात्रिकाः प्रेषयामास। दलपतिशाहस्तु तनीयसो देशस्य कोऽपि च कनीयान् अधिकारी अतिक्षुल्लको वर इति नैव आकारित आसीत्।

आसन्नः स्वयंवरसमयः। देशविदेशेभ्यः समागतैः नानालंकार वेषभूषा-मण्डितैः तरुणराजकुमारैः परिमण्डितं स्वयंवरमंडपम्। राजकन्या दुर्गावती तु गन्धाढ्यां कल्हारमालां करे कृत्वा स्वाभीष्टं वरं विचिनोति स्म। समग्रमपि राजकुमार मण्डलं मन्दं मन्दं संचचार। परं मालां तु न क्वापि समासञ्जयामास। यवनसम्राजस्य प्रसादेन लब्धप्रभूतैश्वर्याः ते सर्वेऽपि पञ्जरबद्धशुका इव सुखलोलुपाः परतन्त्रराज-कुमाराः तस्यै न अरोचन्त। "सत्वरमेव कमपि कमनीयं वृणु वरमिति" त्वरयति स्म सुदूरात् पीठमधिरूढः पिता।

तस्मिन्नेव अवसरे सहसा अश्रूयत अश्वानां खुरपुट पट् पट् ध्वनिः। किमेतदिति ससंभ्रमं ततो निरीक्षमाणेष्वेव सभ्येषु अश्वारूढ एव स्वयंवरमण्टपमुपागमत् राजपूत कुलललामः दलपतिशाहः।

तं दृष्ट्वैव राजकुमारी विद्युद्वेगेन अनुधाव्य अश्वोपर्येव उपविश्य कन्धरां अवनमयतः दलपतिशाहस्य कण्ठे स्वयंवरमालां समासञ्जितवती सानन्दम्। सोऽपि तरुणः तां कन्यामणिं हस्तलाघवेन उद्धृत्य स्ववाहनमारोप्य स्वयंवरमण्डपात् निश्चक्राम।

राजा चन्देलः इतरे राजपूतराजकुमाराश्च स्व स्व खड्गमाचकर्षुः। मङ्गल मण्डपं क्षणादेव कुरुक्षेत्रमिव रक्तरञ्जितं मुण्डमण्डितं चीत्कारमुखरितं च बभूव।

त्रिलोकवीरः अर्जुन इव दलपतिरायः स्वसेनासहायः पलाययामास सर्वानपि प्रत्यर्थिपृथ्वीपतीन्। स्वयंवरे राजकन्येव युद्ध विजयलक्ष्मीरपि तस्यैव कण्ठे मालां समर्पयत्। विजशाली स्वयंवरमाली च दलपतिः विजयदुन्दुभिं नादयन्नेव स्वग्रामं प्रविवेश। तत्र च महता उत्साहेन दुर्गावत्याः पाणिं प्रतिजग्राह ससंभ्रम समारम्भम्।



# रङ्गनाथस्य रत्नापहारः

दक्षिणभारते श्रीरङ्गपत्तनस्य रङ्गनाथस्वामिदेवालयः पुरातनकालादेव सुप्रसिद्धः। तत्र च श्रीरङ्गनाथमूर्तेः ललाटफलके पूर्वमेकं अपूर्वमेव रत्नं प्रकाशते स्म। तस्य च अमूल्यस्य भास्वद्रत्नस्य प्रभया रङ्गनाथस्वामिनः पुरस्तादवस्थापिताः दीपा अपि निष्प्रभा एव अभासन्त। दर्शनार्थमागताः जनाः प्रथमतो देवस्य ललाटमुकुटघटितस्य रत्नराजस्य अत्युज्वलेन प्रभाप्रकर्षेण आकर्षिताः चमत्कृताः स्तम्भिताश्च भूत्वा निर्निमेषं पश्यन्तस्तिष्ठन्ति स्म।

यवनवीरस्य हैदरअलेः शासनसमये तस्य कोऽपि प्रियमित्रं फ्रेञ्चदेशीयः 'ओर्लोफ' नामा देवालयसन्दर्शनार्थम् आगच्छत्। सः देवालये श्रीरङ्गनाथस्वामिनः विशालभालतले देदीप्यमानस्य तस्य अनर्घ्यरत्नस्य प्रभापुञ्जचाकचक्येन प्रतिहतचक्षुः क्षणं अवाक् भूत्वा अवतस्थे। पुनः पुनश्च विस्मयवशात् विस्फार्य चक्षुषी अन्वीक्ष्य अप्राक्षीत् अर्चकान् "देवस्य ललाटे कथं वा एष सूर्यसंकाशः प्रदीपो अवस्थापितः" इति

तदा अर्चकाः प्रहस्य "नैष दीपः किन्तु श्रीरङ्गनाथस्वामिनः शिरोरत्नमेव तत्" इति निजगदुः।

तन्निशम्य "अहो तेजःप्रकर्षः रत्नस्य, हन्त कान्तिमत्ता शिलाशकलस्य, अहो च श्रीमत्ता रङ्गनाथस्येति" स्वगतमेव उज्जगार सः फ्रेंच अधिकारी। तद्दिने सः रात्रौ निद्रामेव न लेभे, तद्रत्नचिन्तां च न मुमोच।

परेद्युः प्रातरेवोत्थाय तन्मणिमण्डनं पौनःपुन्येन अवालूलुकत्। मध्यान्हे सायंकाले च भक्तवद् देवालयं गत्वा देवस्य मुकुटमणिदर्शनं गृहीत्वा आगच्छत्।

ततः स श्रीरङ्गपत्तने एव रङ्गनाथभक्तो भूत्वा उवास। त्रिकालं देवालयं गत्वा देवस्य पुरतः ध्यानव्याजेन उपविश्य निर्निमेषं देवमूर्तिमेव पश्यति स्म। वैदेशिकस्य विधर्मीयस्य च तस्य भक्तिपारवश्यं दृढश्रद्धां च निरीक्ष्य भावुका हिन्दवः अर्चकाश्च तमेकं भक्तश्रेष्ठं सचेतनं साधुपुरुषं च अमन्यन्त। सोऽपि स्वदेशीय वेषभूषादिकं परित्यज्य हिन्दूसाधुवेषं गृहीत्वा त्रिकालं कावेर्यां स्नात्वा देवालये रङ्गनाथमेव ध्यायन्नुपविशति स्म।

तमेकं भक्ताग्रेसरं मन्यमानाश्च अर्चकाः याज्ञिकाः भगवन्निवेदितं पयः फलाप-हारादिकं तस्मै समर्पयन्ति स्म सश्रद्धम्। देवालयस्य व्यवस्थापकाश्च तत्रैव देवालयस्य एकस्मिन् प्रकोष्ठे तस्य पाश्चात्यभक्तस्य निवास प्रबन्धम् अकार्षुः हैदरअलेः आज्ञानुसारम्। अर्चकादारभ्य हैदरालिपर्यन्तं सर्वेऽपि संपूर्णमेव विशश्वसुः तस्मिन् पाश्चात्यधूर्ते।

एकस्मिन् दिने सहसा श्रीरङ्गनाथस्य स मुकुटमणिः अदृश्यतां गतः। सः फ्रेञ्चभक्तोऽपि पलायितः। तदा तस्य बकध्यानरहस्यं सर्वेषां सुविदितमभूत्। तं अन्वेष्टुं हैदर आलिना विहिताः सर्वेऽपि प्रयत्नाः निष्फलतामेव गताः।

धीरः स च रत्नचोरः श्रीरङ्गपत्तनतः निभृतं पलायितः त्वरितगत्या मद्रास पत्तनं प्राप। तत्र कस्मैचन आंग्लनौकाधिपतये ३५००० रूप्यकेभ्यः व्यक्रीणात् तद्रत्नम्।

सोऽपि लण्डननगरम् उपेत्य कालान्तरे कस्मैचन रत्नव्यापारिणे एकाने २००००० रूप्यकेभ्यः विक्रीतवान्।

एवं क्रयविक्रयक्रमेण हस्तात् हस्तान्तरमुपगच्छदेव तद्रत्नम् अन्ततः अमस्ट डामास्थितस्य तत्र कस्यचन महारत्नविक्रयिणः हस्ताभ्याशमुपगतः। स च रत्नोपजी तस्य रत्नोत्तमस्य जाज्वल्यमानं प्रकाशं दृष्ट्वा विस्मित एवाभवत्।

तदा च रषियादेशे क्याथरीन् महाराज्ञी शास्ति स्म। सत्वशाली शूरधीरो ग्रयांड ड्यूक ओर्लोफः केनापि कारणेन महाराज्ञ्याः निग्रहभाजनीभूत आसी रोषाविष्टा च राज्ञी देशान्निष्कासयामास तं ओर्लोफं।

देशभ्रष्टश्च स ओर्लोफः परदेशे नगरान्नगरमाहिण्डमानः 'अमस्टरडाम प्रत्यागतः। तत्र च सः तस्य वज्रस्य दीप्तिवैभवं शुश्राव।

"रत्नप्रिया च महाराज्ञी एतद् भारतरत्नम् आसाद्य मदुपरि परितुष्टा सानुग्र च भवेदिति" भावयित्वा तस्य वज्रव्यापारिणः समीपमुपासदत्। १०००००० द लक्षरूप्यकैश्च तद् रत्नराजं विक्रीय रषियादेशमाजगाम। महाराज्ञ्यै च समर्पयामास

तेन च पिण्डीभूतेनेव सूर्यमण्डलेन, विष्णुवक्षसः परिभ्रष्टेनेव कौस्तुभे झंझावाताविच्युतेनेव चन्द्रबिम्बेन, विष्वग्विसृमरप्रभापुञ्जपिञ्जरितदशादिगन्तरालेन उद्रिच्यमानमरीचिवीचीचाकचक्यापहतावलोचकलोचनरोचिःप्रचयेन मणीन्द्रे

हृतहृदया प्रीतमनाश्च सा महाराज्ञी नितरां सुप्रसन्ना बभूव। तस्य च वर्लोफस्य अपहृतं धनस्थानमानादिकं प्रतिप्रदाय तस्य रत्नस्य ओर्लोफ इत्येव नाम चकार। यावज्जीवं च अतिप्रीत्या परमानन्देन तं भारतमणिं कण्ठे बभार।

रषियादेशे राज्यक्रान्तेरनन्तरं राजशासनमेव प्रणष्टमभूत्। तत आरभ्य अद्य यावत् तद्रत्नं रषियादेशस्य राजधान्यां क्रेम्लिननगरे कम्युनिष्टशासकाधीन्ये वर्तते!

अहो बहुरत्ना वसुन्धरा। तत्रापि 'रत्नसूः' इति चिरादेव सुप्रसिद्धायां भारतभुवि सहस्राधिकान्येव कौस्तुभ कोहिनूर सदृशानि सागरगर्भे वनखनीषु वा विलीनानि अवर्तन्त वर्तन्ते च प्रत्नानि नूत्नानि च रत्नानि। तत्संशोधनमावश्यक-मितिशम्।



# दैवं फलति सर्वत्र

आसीत् पुरा उज्जयिन्यां विक्रमसेनो नाम नृपः। तस्य तेजस्वती नाम एका सुन्दरी कन्यका अजनिष्ट। राजा तदर्थं बहु अन्विष्यन्नपि अभिमतं वरं कुत्रापि नावाप्तवान्। कदाचित् तेजस्वती हर्म्यपृष्ठमधिष्ठिता कञ्चन पाथिकं दृष्ट्वा तस्मिन्ननुरागपरतन्त्रा स्वाभिप्रायं व्यञ्जयितुं स्वां सहचरीं तदन्तिकं प्राहिणोत्। सख्यां सकाशमेत्य कन्यायाः प्रार्थनां निवेदितवत्यां पथिकः शङ्काकुलः तां राजकन्याप्रार्थनां नाभ्यनन्दत्। परन्तु राजनंदिन्याः सखी सनिर्बन्धं समभाषत भद्र! नास्त्यत्र ते भयम्। त्वं सन्ध्यायामुपस्थितायां अस्मिन् देवभवने राजपुत्रीं प्रतीक्षस्व। एवमुक्त्वा दास्यां प्रचलितायां पथिकोऽसौ कथञ्चित् सम्मतोऽपि भयात् पलायाञ्चक्रे न पुनराजगाम।

अत्रान्तरे सोमदत्तो नाम कश्चित् सामन्तपुत्रः स्वर्गते पितरि, दायादैर्हृतराज्यः राजाधिराजसकाशमभियोक्तुम् उज्जयिनीमागच्छन् सहसा तं प्रदेशमागत्य सन्ध्यायामुत्तीर्णायां स्थित्यर्थं तं देवालयमविशत्। तेजस्वती च तदानीं सङ्केतमनुसृत्य तत्रोपस्थिता कोऽयमिति न दृष्ट्वैव पथिकं मत्वा तं राजतनयं पतित्वे ववार! सोऽपि सविस्मयः अनुक्तप्रतिवचनः सानन्दं तस्याः प्रार्थनामभिननन्द। अथ राजपुत्री सोमदत्तं स्नेहपाशेन संयम्य आत्मानं कृतार्थम् मन्यमाना सुखावासं प्रत्याजगाम। राजपुत्रः सोमदत्तोऽपि एकाकी तत्रावस्थाय तां रजनीमत्यवाहयत्। अथ प्रातः मित्रं विक्रमसेनमेत्य स्ववृत्तान्तमावेद्य तत्साहाय्यमभ्यर्थयामास। विक्रमसेनोऽपि तदीयशत्रुदलने कृतसङ्कल्पः तस्मै एव सोमदत्ताय स्वां तनयां दातुं प्रस्तावमकार्षीत्। सोऽपि पूर्वरात्रिपरिचितां विक्रमसेनदुहितरं विवेद, सुतरां विवाहप्रसङ्गं श्रुत्वा विक्रमसेनाय तद्वृत्तं सर्वमवर्णयत्। तेजस्वती च गृहमेत्य विश्वस्तया सख्या रात्रिवृत्तान्तं मात्रे न्यवेदयत्। अथ राजनि काकतालीयवत् एतत् संघटनं श्रुत्वा विस्मितवति मन्त्री समुवाच देव! भवितव्यतैवेयं सतां प्रयोजनसिद्धये विधिरेव जागर्ति।

---

# विधिरहो बलवानिति मे मतिः

आसीत् कस्मिंश्चित् जनपदे हरिशर्म्मा नाम ब्राह्मणः । स तु मूर्खो दरिद्रश्च । तस्य बहवः पुत्रा आसन् । एकदासौ भिक्षार्थमटन् सपरिवारः नगरमेकं प्राविशत् । तत्र च शीलदत्तं नाम गृहपतिं शरणं गतः पुत्रान् तस्य गोरक्षणे, भार्य्यां दासीत्वे, स्वयञ्च दास्ये नियोज्य तदालयसकाशे न्यवसत् कदाचित्। गृहपतेः कन्यापरिणयोत्सवे बहवो लोकाः निमन्त्रिताः । हरिशर्म्मा सपरिवारः प्रभुगृहे यथेष्टं भोजं भोक्तुम् अनाहारमेवातिष्ठत् । क्रमशः सर्व एव सयत्नमाहूय भोजं कारिताः, परं हरिशर्म्मा एव सपरिजनो नाहूतः। हरिशर्म्मा अनाहारेण नितरां क्लिष्टः रजन्यां गृहिणीमब्रवीत्, पश्य, मां दरिद्रं मूर्खञ्च मत्वा अगौरवात् कोऽपि भोजनार्थं नाहूतवान् । तस्मादहं युक्त्या एवं करोमि यथा शीलदत्तो मां सगौरवमाद्रियते । अहं सर्वसमक्षम् अस्य जामातुरश्वं हृत्वा स्थानान्तरे गोपयिष्यामि । ततश्च अश्वानुसन्धाने संवृत्ते यदा कोऽपि तमनुसन्धातुं न शक्ष्यति, तदाहं गणनाविद्यायां मम नैपुण्यं प्रकटयिष्यामि। अथ सर्वेषु निद्रितेषु असौ हरिशर्म्मा सुगूढम् अश्वं स्थानान्तरं निनाय । प्रातश्च अश्वमदृष्ट्वा परिजनेषु अमङ्गलमाशंसत्सु सर्वे एव अनुसन्धानाय सत्वरा अभवन्। परं कोऽपि अश्वं नापश्यत् । ततश्च हरिशर्मणो गृहिणी यथाशिक्षितं शीलदत्ताय समाचख्यौ "महाशय! मम भर्ता गणनायां निपुणो भवदन्तिके आस्ते, तं पृच्छ, स खलु गणनया सर्वं वेत्स्यति" ।

एवमुक्तः शीलदत्तो हरिशर्म्माणमाहूय प्रोवाच भद्र! पूर्वेद्युर्विस्मृतिहेतोः त्वामाहूय भोजनं न कारितवानस्मि, अद्य अश्वे चोरिते स्मृतं । तन्मनसि दुःखं मा कृथाः, सम्प्रति गणनायां निपुणस्त्वं ब्रूहि को मे जामातुरश्वमपजहार। एवमुक्तो हरिशर्म्मा कियतीर्मिथ्यारेखा अङ्कयित्वा प्राब्रवीत् "महाशय! तस्कराः स्थानादस्मात् दक्षिणस्यां दिशि अश्वमपहृत्य सुगुप्तं ररक्षुः, नेष्यन्ति च रात्रौ स्थानान्तरम् । तत् साम्प्रतमेव गत्वा सत्वरमश्वमानयस्व । एवमुक्ते कियतो लोकाः दक्षिणस्यां प्रचलिताः प्रत्यागताश्च सत्वरम् अश्वं नीत्वा । तद् दृष्ट्वा सर्वे हरिशर्म्मणो गणनानैपुण्यं प्रशशंसुः । शीलदत्तोऽपि तं बहुयत्नेन समादृतवान् ।

अत्र गते च कियति काले राजगृहात् प्रभूतानि सुवर्णानि चोरितानि । बहुसन्धानेनापि चारेषु अप्राप्तेषु गणनार्थं हरिशर्म्मा समाहूतः। सुतरां घोरायामापदि पतितः हरिशर्म्मा राजभवनमेत्य पलायनार्थं कल्ये गणयिष्यामीत्युक्तवान्। राजा तु

तम् एकस्मिन् गृहे अवरोध्दुमादिदेश। रक्षिणश्च तथैव चक्रुः। कोऽतिवर्त्तते दैवम्। राज्ञः अन्तःपुरचारिणी जिह्वानाम्नी कापि चेटी आसीत्। सा स्वेन भ्रात्रा सह चङ्क्रान्तं कृत्वा किं वदेदिति कर्णं दत्त्वा अतिष्ठत्। क्षणे च तस्मिन् हरिशर्म्मा स्वां जिह्वां सम्बोध्य समुवाच जिह्वे? कथमीदृशं कर्म्म कृतवती, तदिदानीं यादृशं कर्म्म, तदनुरूपं फलं लभस्वेति।

एतदाकर्ण्य चेटी स्वकृतं चौर्य्यं गणको ज्ञातवानिति निश्चित्य निरुपायम्मत्वा कौशलेन हरिशर्म्मणो गृहमविशत्, अवदच्च तत्पदयोः पतित्वा महाशय! गणनया यं चौरं निश्चितवानसि, साहं जिव्हा नाम। अहमेव समस्तं धनम् अपहृत्य अस्य सदनस्य पश्चिमायां दिशि उद्यानाभ्यन्तरे दाडिम्बमूले निहितवत्यस्मि। तदिदानीं ब्रह्मन्! मम हस्ताभरणमेतत् गृहीत्वा मां रक्ष।

हरिशर्मा तु चेटीमुखेन सर्वं श्रुत्वा सगर्वमाह स्म रे पापीयसि! गच्छ दूरम्, अहं त्रिकालदर्शी न विदितस्तव। तद् यावत् त्वं दरिद्रा, तव कथां न प्रकाशयिष्यामि, परं तव हस्ते यदस्ति मह्यमर्पय। चेटी तथेति प्रतिज्ञाय तस्मात् गृहात् प्रचलिता। हरिशर्मा सविस्मयश्चिन्तितवान् अनुकूलदैवस्य सर्वं समीहितं सेत्स्यति, क्वाहं स्वां जिव्हां निन्दामि, क्व वा कृतचौर्य्या जिवृहानाम्नी किङ्करी, या मद्वचनश्रवणार्थं ममावरोधगृहे दत्तकर्णा तिष्ठन्ती जिव्हायाः निन्दावादं श्रुत्वा मां परिज्ञातवानिति निश्चित्य मत्पदयोर्निपतिता सर्वं वृत्तान्तं न्यवेदयत्। इत्थं विचिन्तयन् हरिशर्मा हृष्टो रात्रिमयापयत्। प्रातश्चोत्थाय अलीकगणनया धनस्थानमदर्शयत्, क्षमयामास च राजानं चौरः किमपि न गृहीत्वा पलायित इति।

राजा तु तस्य तादृशगणनानैपुण्येन भृशमनुरञ्जितः तस्मै कतिपयान् ग्रामान् सुवर्णानि छत्राणि वाहनानि च प्रदत्तवान्। इत्थमसौ चातुर्य्येण क्रमशः समृद्धिमान् समभूत्। तदेवं देव! दैवमेवानुकूलं पुरुषार्थान् साधयति। तदेव सोमदत्तमानीय राजनन्दिनीमयोजयत्।

मन्त्रिण एतादृशं वचनमाकर्ण्य नृपतिः प्रीत्या तेजस्वतीं सोमदत्ताय सम्प्रददौ। सोमदत्तश्च श्वशुरसैन्यपरिवृतः स्वान् शत्रून् निराचकार, निनाय च सुखेन कालं प्राप्तराज्यः सकलत्रः।



# सन्तति निरोधः

पूर्वे ऋषयः पुराणेषु प्रजासृष्टिक्रमं सृष्टिमारभ्य वर्णयाञ्चक्रिरे। तत्र "दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि" इति स्त्रियमुद्दिश्य अपत्यदशकप्राप्ति पर्यन्तं आशिषः प्रायुञ्जन्। दशापत्यजननानन्तरं स्त्रियं मातृवत् संमानयेयुरिति स्मृतिकाराः सूचयामासु; केचन "त्यजन्ति भार्यां दशपुत्रमातरं" इति च। संततिस्तु धर्मसंततिः, कामसन्तानमिति च मनीषिभिः द्विविधं निरूपितमस्ति। मनुरस्मिन् विषये निश्शंकं प्रोवाच।

"यस्मादृणं सन्नयति येनचानन्त्यमश्नुते।
स एव धर्मजः पुत्रः कामजानितरान् विदुः॥"

विवाहविधिषु "धर्मप्रजार्थमिमां वृणे" इत्यादि वचनानि उदाहृतानि। जनसंख्या यदा अल्पीयसी आसीत् तदा ऋषयः एकस्य अङ्कस्य पार्श्वे पुनरेकाङ्कस्य अङ्केन एकादशसंख्या यथा भवति तथा स्त्रीपुरुषयोः समवायेन एकादशत्वं बहूकृतवन्तः इति उत्प्रेक्षितुं शक्यम्। अत एव धर्मशास्त्रेषु धर्मपत्नी, कामपत्नी, धर्मसन्तानं—कामसन्तानमिति भेदान् पर्यगणयन्।

जनसंख्या देशस्य महती सम्पत्। कुण्डगोलकादयः प्राधान्येन सैन्यविभागे अवकाशमलभन्त। अपत्यजननं कुटुम्बस्य देशस्य च आवश्यकतामनुरुन्धति। अशक्तस्यगेहे अपत्यबाहुळ्यं महान्तं क्लेशमावहति। एवमेव श्रीमतां गेहे तदभावश्च न मोदावहो भवति। अपत्यानां जननस्य अदृष्टापेक्षितत्वात् तन्निरोधे नियमने च पुरुषस्यैव ज्यैष्ठ्यं वर्तते। अत एव निरपत्यानामपत्यस्वीकारक्रमोऽपि आयुष्मान् अभिनन्द्यते जनैः। सत्येवं, दैवं पुरुषकारं च लोकयात्रां वहतः, मानवः स्वभावस्य परिणामप्रकारान् स्वप्रयत्नेन निरुन्ध्यात्, परमयं न कदापि असम्भवं सम्भवयितुं समर्थः।

वर्तमान यान्त्रिकयुगे जनानामवकाशः, उद्योगः, नगर वासः, अन्तरराष्ट्रीय विचाराधिगतिश्च क्रमशः अभिवर्धते। वैद्यसहायसंपत्या अकालमरणसंख्यापि न्यूनीभवति। अत एव शतवर्षेभ्यः भूगोळे सर्वेषु देशेषु जनसंख्या पूर्वापेक्षया

त्रिगुणिता वर्तते । एवमेव एकोत्तरवृद्धिः यदि स्यात् पञ्चाशत् वर्षाभ्यन्तरे इतोऽ- तिशयेन त्रिगुणितास्याज्जनसंख्या । इदानीमेवाहाराभ्यवहारादिषु महान् क्लेशः अनुभूयते जनैः । सर्वंसहा कियद्वा आहारवस्त्रादिकमुत्पादयेत् । एवं जनसंख्यायाः अतिवृद्धिः दिने दिने बोभूयते । विशेषेण पौरस्त्येषु, सामान्येन पाश्चात्येषु च आतङ्कमातनोति समस्या । पौष्टिकाराहाभावः, उदात्तध्येयराहित्यं, केवलं संकुचितभावना:, सोदर्ये उपपत्तिचिन्तराहित्यं, धर्मश्रद्धाविरहः, केवलपाशवीभावना च सामान्येन अनपेक्षित- प्रजाभिवृध्यै कारणानि ।

सन्ततिनिरोधाय प्राच्यैः आयुर्वेदविहिताः उपायाः वर्तन्ते । योगाङ्गाभ्यासे अयमुपायः "क्रियाविशेषतया" अङ्गीकृतः । धर्मशास्त्रेषु शमदमा इमं विघ्नं विनिवारयन्ति ज्ञानिनः इन्द्रियनिग्रहं परमोपायं अभिप्रयन्ति । नराणां शौचस्यदुर्लभत्वम्, अतीतकालविवाहः, जातिनियमाश्च एकदा जनसंख्याया नियमने प्राभवन् । इदानीं नियमाभावात् स्वातन्त्र्याभिलाषायाः दुर्वारत्वात् स्वेच्छारतेश्च प्रजावृद्धिः दुर्वारा नरीनर्ति । तस्मात् अधिकारभेदेन इन्द्रियनिग्रहः शमदमान्वयः, योग- साधनाक्रमः, कामशास्त्रीयग्रन्थविशेषाः, वैद्योपज्ञ–भैषज्यानि, इदानींतन प्रौढ- विवाहः, समाजशास्त्रविज्ञानं, आधुनिक वैज्ञानिकरीतयश्च यथाधिकारं यथाशक्ति चोपादाय इमां विपत्तिं सर्वथा तरेयुः । बहवो नक्षत्राः, चन्द्रस्तु एक एव । तस्मात् धर्मसन्तानमेवं धर्मं रक्षति इति सर्वं चतुरश्रम् ।

---

Printed at the New Gadag Printery Gadag, by P. S. Hombali
and Published by Pandharinathacharya Galgali at Gadag

जगद्गुरुश्रीमद्राघवेंद्र मठाधीश श्रीसुधर्मींद्रतीर्थ स्वामिपादानां

कृपापोषिता

# मधुरवाणी

## संस्कृत मास पत्रिका

प्रधान सम्पादकः

कविकुलतिलक विद्यावैभव वेदान्तशिरोमणि साहित्यालंकार

**राजा एस्. गुरुराजाचार्याः**

*

सम्पादकः

**गलगलीत्युपाह्वाः पण्ढरीनाथाचार्याः**



वार्षिक मूल्यं रु० ५ एकांकस्य ०-८-०

## श्रीनरसिंहावतारमङ्गलम्

स्वामिन् भूरिहिरण्यभूघनतृषानामा हिरण्यासुरोऽ
वध्यः केनचनापि लुण्ठति मनःप्रह्लादमुत्पीडयन् ॥
तं त्वं संहर रंहसाऽद्य हृदयस्तम्भे विजृम्भस्व मे
भृत्यं मामपि पाह्यकुण्ठमहिमन् वैकुण्ठकण्ठीरव ॥

१

रक्षःसंहननाय संहननमत्युग्रं हि सैंहं धृतं
रंहश्चापि निरीक्ष्य तेऽसुरकुलं कामं बिभेतु प्रभो
हंहोऽहं तु बिभेमि नेदृशमपि त्वां यत्प्रपश्यन् मुदा
तत्प्रह्लादहृदल्पपञ्जरपुटे बद्धं निरुद्धं सदा ॥

२

दृप्यद्दानवमारणात्परमिदं दृष्ट्वोग्रदेहं मम
लक्ष्मीर्नन्दति नाभिनन्दति तथारूपं रसान्नेक्षते
शेषोऽसौ गरुडश्च धावति भिया कुत्रासितव्यं कथं
गन्तव्यं शयितव्यमेवमुदयच्चिन्तो नृसिंहो मुदे ॥

३

रंहःसंहननोच्चगर्जितमुखैः सिंहोऽपि कान्तेन्दिरा-
फुल्लेन्दीवरसुन्दराक्षिसुषुमालुब्धश्चलेन्दिन्दिरः ॥
सद्हृत्पञ्जररुद्धकीर भजतां भक्तिस्फुरद्वागुरा-
बद्धस्निग्धविमुग्धबालहरिण त्वं पाहि मां श्रीहरे ॥

४

## भासावतरणिका

अत्युग्रैस्तु करैस्त्वमर्दयसि नृन् मित्र भुवं तापयन्
वायोश्चापि नियन्त्रणं वितनुषेऽत्यावश्यकस्याम्वहम्
अंभोऽल्पीकुरुषे च शोषयसि रे सस्यं निरस्यन् सुखं
कांग्रेस्शासनवत्सुदुस्सहमिदं वैशाख ते शासनम् .

## गुरुवन्दनम्

गांभीर्यं हि सरित्पतावसदृशं स्थैर्यं क्षितौ च क्षमा
चौदार्यं दिविषत्तरौ चतुरिमाचास्ते सुराणां गुरौ ॥
सामानाधिकरण्यमिच्छसि सखे द्रष्टुं समेषामपि
तर्हि श्रीसुयमीन्द्रतीर्थयमिनां व्यक्तित्वमालोचय ॥

# मधुरवाणी

सुधानिष्यन्दिन्या मधुरमधुरापकलया चिरावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालंकारा रसिकजनचेतांसि सहसा वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

१४ वर्षं । विकारिसंवत्सर वैशाखमाससञ्चिका । अंकः २


## विशाल मैसूर्

संस्कृतवाङ्मये समयनिर्देशपूर्वकं तत्तत्कालिकघटनानामुपवर्णनं अस्पष्टमिव प्रतिभाति। अनेन कारणेन वेदानां काल–निर्णये तथा पुराणानाञ्च नितरां भिन्नाभिप्रायाः वर्तन्ते । कदाचन परस्परविरुद्धाभिप्रायाः उदासीन-माकुलयन्ति । यथार्थदर्शिनस्तु वेदानां कालनिर्णये वेदमन्त्रेषु प्रतिपादितज्योतिर्गणितरीत्या कालनिर्णयमिच्छन्ति । तथैव श्रीरामजननस्य भारतमहायुद्धस्य च वर्णनेषु ज्योतिर्गणितसूचना विद्योतते । एतं नियमं यद्यनुसरेयुः विमर्शकाः. पौर्वात्यानां पाश्चात्यानां च गवेषणात्मकदृष्टिषु कोलाहलो न कदापि अभविष्यत् । सःस्वयं शाम्येतापि। कर्नाटकजनपदीयाः श्रीरामचन्द्रस्य "राज्याद्भ्रंशः, वने वासः, सीता नष्टा, द्विजो हतः," ईदृशदुःखपरम्परावसरे किञ्चिदिव समानदुःखोऽपि कर्णाटकजनपदाभिजनः सुग्रीवः, महाकर्मयोगी–आञ्जनेयः अन्ये च वानराः सहयोगं ददुः । एषां साहाय्येन रावणं जित्वा सीतां आनिनाय श्रीरामचन्द्रः । पट्टाभिषिक्तः धर्मेण राज्यं पालयामास । अयमेकः कीर्तिमुकुटः कर्णाटकजनपदीयानाम् । श्रीकृष्णः भारतयुद्धं निवारयितुं विराटनगरात् सन्धिमारेभे । देवांशसम्भवानां पाण्डवानां अज्ञातवाससमये रक्षणं पोषणं च कर्णाटकजनपदे विराटनगरे बभूवेति बहूकरणमस्य जनपदस्य। लङ्काधिपतेः

रावणस्य भयं नासीदिति मन्यामहे अस्य जनपदस्य। कुतः खरदूषणादीनां सेनानिवेशः दण्डकारण्ये "नाशिक्" क्षेत्रे समजनि। ताटका-सुबाहुमारीचौ च उत्तरभारत एव आसन्। जगदेकवीरस्य घटोत्कचस्य जननी हिडिम्बी कर्णाटकीति मोदामहे। अद्यापि एतेषां हिडिम्बादीनां ज्ञापकप्रदेशाः विराजन्ते। अतिथिसत्कारः एषां गुणविशेषो बभूव, अस्ति च। परम्परागतेन अनेन गुणेन केरलीयशङ्कराचार्याः द्राविडीयरामानुजाचार्याश्च आश्रयं रक्षणं च अलभताम्। परं कर्णाटकाभिजनानां श्रीमदानन्दतीर्थ बसवेश्वरादीनां रक्षणं, पोषणं, अनुपालनं चात्रैवेति प्रमोदस्थानमेतद्देशीयानाम्।

ऐतिह्यसिककाले विद्यानगरसंस्थापकाः कृष्णदेवरायादयः तत्पूर्वं पुलिकेशिप्रभृतयः हायूसल–चालुक्य–गङ्गभूपतयश्च बभूवुः। यवनैः विजयनगरसाम्राज्य पातनानन्तरं प्रातस्स्मरणीयः शिवाजीमहोदयः अस्मिन्जनपदे पादन्यासमकरोत्। प्रभावितश्च जनन्या, कर्णाटकजनन्या च धर्मरिरक्षया महान्तमायोगमाततान। आङ्गलसाम्राज्ये जनपदोऽयं पञ्चधा भिन्न आसीत्। भारतस्य स्वातन्त्र्यप्राप्त्यनन्तरं क्रि. श. १९५६ नवंबर्मासे पुनश्च कर्णाटकभाषाभाषिणां एकीकरणं बभूव। अस्मिन्जनपदे नवधान्यान्यपि रोहन्ति। सुवर्णखनी वर्तते। श्रीगन्धवनस्य गजानाञ्च आवासभूमिरियम्। मरीच–एला–क्रमुक–नारिकेल–काफील्यादीनाञ्च रसतमाः अत्र उत्पाद्यन्ते। अस्य चीनांशुकाः जगद्विख्याताः। पारिश्रमिकविभागे अयःपरिश्रमकर्मागारं, विमान निर्माणम्, काच निर्माणम् (Glass) मृत्पात्र निर्माणम् (Procelain), दूरवाणी (Telephone), श्रुतप्रकाशकयन्त्र निर्माणम् (Remco & I T-I) इत्यादीनां कर्मागाराणि विलसन्ति।

दक्षिणभारते विद्युदायोजनं प्रथममत्रैवासीत्। कावेरी नद्याः मध्यरङ्गे प्रथमं शिल्पिवरेण्यः विश्वेश्वरः विद्युदुत्पादनकेन्द्रं निर्ममे। अनन्तरं तेनैव सूचितमार्गेण योगक्षेत्रे (Jog Falls) जलपाते अन्यत्केन्द्रं निरमासिषुः। धूम्रशकटमार्गा अपि माकिम् १००० (Miles) अथवा ५०० क्रोशपरिमितास्सन्ति। अचिरेणैव कालेन प्रतिग्रामं विद्युच्छक्त्या अलंक्रियते। कावेरी, उत्तर पिनाकिनी, दक्षिण पिनाकिनी, लोकपावनी, कपिला, तुङ्गा, भद्रा च अन्याभिरनेकाभिर्नदीभिः सङ्गताः प्रवहन्ति। कृष्णानदी अपि कियद्दूरं अस्मिन् जनपदे प्रवहति। दक्षिणकाशीति प्रसिद्धं गोकर्णक्षेत्रं, कनकपुरीति प्रथितं जैनानां प्रसिद्धक्षेत्रं चात्र विलसतः। यादवगिरिः (Melkote) विषकण्ठपुरम् (Najangud) च परश्शतानामास्तिकानां

आकर्षणीये स्तः। कावेरीनद्याः अलङ्कारभूतेषु रङ्गत्रयेषु आदिरङ्गम्—मध्यरङ्ग चास्मिन् जनपदे विलसतः। जनसंख्या कोटिद्वयं वर्तते। द्वौ विश्वविद्यानिलयौ वर्तेते। एकोनविंशति संख्याकाः मण्डलविभागाः (Districts) व्यवहारसौकर्यार्थं परिष्कृताः वर्तन्ते।

नवव्याकृतिपण्डितं हनुमन्तमारभ्य संस्कृतपण्डितपरम्परा इदानीं यावदपि अच्छिन्ना आयुष्मती चकास्ति। वेदभाष्यकारः सायणाचार्यः अत्रैव रेजे। इदानीं संस्कृतविद्याभ्यासाय दश महापाठशालाः शताधिकपाठशालाश्च वर्तन्ते। शृङ्गेर्यां अद्वैतसम्प्रदायस्य महीशूर नगरे विशिष्टाद्वैतसम्प्रदायस्य, उडुपिक्षेत्रे तथान्यत्र च मध्वसिद्धान्तस्य पीठाः वर्तन्ते। वीरशैवानां पुनः पञ्चमठेषु प्रधानेषु त्रयः अत्रैव विलसन्ति। परन्तु परश्शतास्तत्रतत्र समुल्लसन्ति। प्रतिवर्षं पञ्चाशत्सहस्रसंख्याकाः विद्यार्थिनः प्रौढशालातः (High School) निर्गच्छन्ति। बृहज्जलाशयौ द्वौ स्तः कृष्णराजसागरः तुङ्गभद्राजलाशयश्चेति। जैनाः, बौद्धाः, वैदिकाः, यवनाः क्रिस्ताश्च प्राधान्येन वर्तन्ते।

सहस्रवर्षेभ्यः प्रागेव कर्णाटकभाषायाः निर्दिष्टं स्वरूपमासीत्। नागवर्मा नाम पण्डितः छन्दोम्बुधिं प्रणिनाय। इदं प्रथमं कर्णाटकभाषायाः व्याकरणम्। तदनु संस्कृतभाषायाः पुराणानां भाषान्तराणि पद्यरूपेण अहमहमिकया समजनिष्यन्त। वीरशैवानां फक्किकां अनुसृत्य कर्णाटकभाषाया एका शाखा ववृधे। वैष्णवानां भक्तिभावपरिचुम्बिनी अन्या शाखा प्रफुल्लिता बभूव। जैनकवीनां रसभावनिर्भरा अपरा शाखा विराजते। वेणीत्रयमिदं कर्नाटकमोहिन्याः।

श्रीकृष्णपदार्पण पवित्रीकृतः दानशूरेण कर्णेन आटितः सन् कर्णाटकः इति गीयते "कर्णयोरटतीति कर्णाटः"। गच्छता कालेन यदुवंशीया एव अत्रागत्य राज्यमारेभिरे। तेषु चतुर्थः श्रीकृष्णराजभूपालः पुराण प्रसिद्धानां राजर्षीणां प्रतीक इव परदेशीय राज्यक्रमभारावनते अस्मिन् देशे चकाशे। यदुसन्तानश्रीपरम्परया राज्यभारनिर्वहणे धर्मरतिरासीत्। कर्णाटकवाङ्मयमभिवर्धयामास। आर्यसंस्कृते-राधारस्तम्भ इव रराज। वेदानां शास्त्राणाञ्च आश्रयभूमिरासीत्। वेदाध्यायिनः पण्डितांश्च यथाकालं पुपोष। महिषासुरेणाधिष्ठितं सत् महिषासुरपुरमिति (Mysore) नाम्ना प्रथितं नगरम्। उच्चारणव्यत्यासेन इदानींतनसंज्ञा मैसूर इति वर्तते। महिषासुरमर्दिन्याः देवालयमिदानीमपि विद्योतते। इयं देवी कर्णाटक जनपदस्यराज्ञां च कुलदेवता बभूव। एवं सहृदयत्वेन अतिथिसत्कारेण च श्रीरामचन्द्रं ये प्रपेदिरे,

श्रीकृष्णं पाण्डवांश्च ये पूजयामासुः, वालि–सुग्रीव-आञ्जनेयादीन् ये जनयामासुः ते कार्नाटकीयाः पूर्वे रेजिरे ।

मध्यकाले आचार्यत्रयीं आरिराधयिषिरे । सायणमाधवादीन् महापण्डितान् अभिनन्दुः । यवनराज 'औरंगजेब्' महाशयमपि सामोपायेन वशीचक्रुः। वर्धमानशतके पुनः तत्वशास्त्रविशारदं राधाकृष्णमहोदयं, अर्थशास्त्रनिपुणं के. टी. षा महोदयं इतिहासविचक्षणं राधाकुमुदमुखर्जिनमपि विश्वविद्यानिलये अवकाश दानेन बहूकृतवन्तः। विश्वाविख्यातः विश्वेश्वरशिल्पी अत्रैव जज्ञे। नोबल् पारितोषिकेण तथा लेनिन्विश्वशान्तिपारितोषिकेण च सम्मानितः चन्द्रशेखर वेङ्कटराममहोदयः अत्रैव प्रतितिष्ठति। गान्धीमहोदयश्च अस्मिन् जनपदे कियत् कालं रेमे। पराक्रमिणां प्रभावेण, ज्ञानिनामुपदेशेन, भक्तानां सहवासेन, सहृदयत्वं, परमतसहिष्णुत्वं, अतिथिसत्कारश्च सात्मीकृतवतां कर्णाटकीयानां इदं वाक्चित्रम्।

---

आदौ वालिनिषेवितो दशमुखो यैर्निर्जितो वानरैः
रामो यत्र सहायमाप हरिभिः कृष्णश्च सम्भावितः ।
भक्तानां विदुषां तथैव यमिनामाचार्यवृन्दस्य च
या भूमिः शरणं बभूव जयतात् कर्णाट देशस्सदा ॥

# श्रीसायणाचार्याणां ग्रन्थाः

सायणाचार्यो बहून् ग्रन्थान् रचयामास । तेषां शीर्षण्यस्थानं वेदभाष्याणि भजन्ते । अन्येऽपि ग्रन्थास्तत्तच्छास्त्रविषयेऽत्युपकारकाः सन्तीति ध्रुवं तदालोचनया प्रतीयते । ते च सर्वे विरचनक्रमेणाधो निर्दिश्यन्ते—

१. सुभाषितसुधानिधिः— नीतिवाक्यामृतानां सरसः सञ्चयः । कम्पमहीपते राज्यकाले सायणेन विरचितोऽयं ग्रन्थस्तद्ग्रन्थेषु विरचनक्रमेण प्राथम्यं भजते ।

२. प्रायश्चित्तसुधानिधिः— कर्मविपाकापरनामधेयोऽयं प्रायश्चित्तप्रतिपादनपरो ग्रन्थो धर्मशास्त्राभ्यासिनां भृशमुपकारमावहतीत्यस्माकं विश्वासः ।

३. अलङ्कारसुधानिधिः— विचित्र एव काव्यालङ्कारप्रतिपादनपरोऽयं सायणनिर्मितो ग्रन्थः ! दुर्भाग्यतया कृत्स्नो ग्रन्थो नाद्यापि कुत्रचित् समुपलभ्यते । अस्मिन् दश उन्मेषा विलसन्तीति श्रूयते । आर नरसिंहचार्यमहोदयस्य सविधे उन्मेषत्रयात्मक एवापूर्णो ग्रन्थो वर्तते । अत्रत्यानि सर्वाण्युदाहरणान्यलङ्काराणां सायणाचार्यस्य जीवनवृत्तमवलम्बन्ते इति इतिहासज्ञानां परमं प्रमोदास्पदम् । बह्वलङ्कारग्रन्थेषु कवेराश्रयदातुरेव जीवनवृत्तानुबन्धीनि श्लोकजातानि दृष्टान्तत्वेन समुपन्यस्तान्युपलभ्यन्ते । अत्र तु कवेरेवेति भूयान् विशेषः ।

४. धातुवृत्तिः— पाणिनीयमतमनुसृत्य विरचितो धातुविषयकोऽतिप्रामाणिकोऽयं ग्रन्थः सर्वत्र विद्वत्समाजे जागर्ति । लोके इयं 'माधवीया धातुवृत्तिः' इति नाम्ना विख्याता वर्तते, परन्तु सायणाचार्य एवास्या रचयिता न माधवाचार्य इति ग्रन्थस्योपक्रमे स्फुटमेव(१) । त्रयोऽप्येते ग्रन्थाः कम्पराजसूनोः सङ्गमनरेन्द्रस्य विरचिता बभूवुरिति तत्तद्ग्रन्थपुष्पिकाभ्यो ध्रुवमवगम्यते ।

५. पुरुषार्थसुधानिधिः— पुरुषार्थोपयोगिनां पुराणस्थानां व्यासवाक्यानां सुललितोऽयं सङ्ग्रहो बुक्कमहीपतेर्निर्देशमनुसृत्य सायणार्येण निर्मितः ।

६. वेदभाष्याणि— एतेषां विस्तरेण वर्णनमग्रे भविष्यति ।

---

(१) तेन मायणपुत्रेण सायणेन मनीषिणा ।
आख्यया माधवीयेयं धातुवृत्तिर्विरच्यते ॥

७. आयुर्वेदसुधानिधिः- आयुर्वेदसिद्धान्तनिदर्शनपरो ग्रन्थ एषोऽलङ्कारसुधानिधावपि नाम्ना निर्दिष्टो वर्तते।

८. यज्ञतन्त्रसुधानिधिः- यागानुष्ठानविधिरस्य ग्रन्थस्य विषयः। एषः सायणाचार्यस्य रचनासु चरमो ग्रन्थ इति अनुमीयते। अस्य रचना हरिहर (द्वितीय) महाराजाधिराजस्य शासनसमये सञ्जातेति तत्पुष्पिकातो विद्वद्भिरुन्नेयम्(१)।

सायणनिर्मितानां बहूनां ग्रन्थानां पुष्पिकासु ग्रन्थाभिधानेभ्यः प्राक् 'माधवीये'ति पदं समुपन्यस्तं समुपलभ्यते। तथा च सायणरचिता धातुवृत्तिः माधवीयेत्याख्यया तत्पुस्तकेऽपि व्याहृता लोकेऽपि सर्वत्र विख्याता च दृश्यते। वेदार्थप्रकाशाभिधानमृग्वेदसंहिताभाष्यमपि माधवीयेति नाम्ना व्यपदिष्टमुपलभ्यते प्रत्यध्यायं पुष्पिकायाम्(२)। को नु खलु हेतुरस्य स्यात्? सायणेन विरचितानां ग्रन्थानां माधवीयेति समाख्यया सर्वत्र प्रचारे किं ग्रन्थकाराभिमतं समुचितं कारणं भवेत्? माधवेनैव विरचिता इमे ग्रन्थाः इति केचित्। माधवसायणाभ्यामुभाभ्यामपि विरचिता इत्यन्ये। परन्तु अनुपपत्तिहेतोर्नास्ति कस्मिन्नपि मते बद्धमूलाऽस्थाऽस्माकम्। तदा किमत्र उपपन्नं कारणं भविष्यति? वस्तुतस्तु सायणाचार्य एवैषां कर्ता इत्यत्र नास्ति कोऽपि सन्देहलेशस्तत्तद्ग्रन्थस्यारम्भावसानपरीक्षकाणां विदुषाम्। माधवेन प्रोत्साहित एव सायणो ग्रन्थानिमान् अरीरचत्। बुक्कमहीपतिना माधवाचार्य एव वेदभाष्याणामन्येषां च ग्रन्थानां निर्मितौ प्रार्थित आसीत् परं माधवो नैव तत्प्रार्थनामुररीचकार। वेदभाष्यरचनार्थं प्रार्थितो माधवः राजानं प्रत्यभाषत-कृतिनामाद्यो ममानुजः सायाणाचार्यो निखिलं शास्त्राणां वेत्ति, स जानाति। अतस्तमेव वेदानां व्याख्यातृत्वे नियोजयतु भवान्। माधवेनैवं प्रत्युक्तो महीपतिः सायणाचार्यं वेदानां व्याख्याने नियुक्तवान्। अतो ग्रन्थानाममीषां रचनायां माधव एव परमो हेतुः, तस्य प्रोत्साहनमेव आद्यं कारणम्। अतस्तदुपकारभाराक्रान्तहृदयो यदीमान् ग्रन्थान् माधवीयेति नाम्ना व्यपादेश सायणाचार्यः

---

(१) इति श्रीमद्राजाधिराजपरमेश्वरहरिहरमहाराजसकलसाम्राज्यधुरन्धरवैदिकमार्गस्थापनाचार्यस्य सायणाचार्यस्य कृतौ यज्ञतन्त्रसुधानिधौ।

(२) इति श्रीमद्राजाधिराजपरमेश्वर–वैदिकमार्गप्रवर्तक–श्रीवीरबुक्कसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके प्रथमोऽध्यायः॥

तर्हि नितान्तमौचित्यमेव साक्षात्कुर्मः । [illegible] औचित्यापत्तिरस्मिन् विषयेऽस्माकं मतेन परिपतति । अतः सायणेन विरचितानामपि पुस्तकानां माधवीयेति व्यपदेशो नितरां समुचित एवेति पश्यामः । तदत्र प्रमाणतया केचन ग्रन्थस्था एव श्लोकाः समुपन्यस्यन्ते ।

पुरुषार्थसुधानिधौ—

तं सर्वविद्यानिलयं तत्त्वविद् बुक्कभूपतिः ।
सत्कथाकौतुकी हर्षादपृच्छत् राजशेखरम् ॥
श्रुतानि त्वन्मुखादेव शास्त्राणि विविधानि च ।
पुराणोपपुराणानि भारतं च महामते ॥
सर्वाण्येतानि विप्रेन्द्र गहनान्यल्पमेधसाम् ।
तस्मादाख्यानरूपाणि सुखोपायानि सुव्रत ।
पुरुषार्थोपयोगीनि व्यासवाक्यानि मे वद ॥
तस्य तद्वचनं श्रुत्वा युक्तार्थं बुक्कभूपतेः ।
प्रशस्य तं मुदा युक्तो माधवः प्रत्यभाषत ॥
अयं हि कृतिनामाद्यः सायणार्यो ममानुजः ।
पुराणोपपुराणेषु पुरुषार्थोपयोगिनीः ।
उपदिष्टा मया राजन् कथास्ते कथयिष्यति ॥
इति प्रसाद्य राजनं सायणार्यमुदैक्षत ॥
सायणार्योऽग्रजेनोक्तः प्राह बुक्कमहीपतिम् ।
साधु साधु महाप्राज्ञ ! बुद्धिस्ते धर्मदर्शिनी ॥
वदामि व्यासवाक्यानि लोकानां हितकाम्यया ।



# शार्मण्य ब्राह्मणः
## "म्याक्समुलर"

"यदि देवः जन्मांतरे मां मानवं चिकीर्षति तं तर्हि अहमेकमेव वरं प्रार्थये "स्वामिन् भाविजन्मनि भारतवर्षे एव माम् उत्पादय । तत्रापि मां ब्राह्मणमेव आकलय । तत्रापि वेदाध्यायनस्य सदवकाशः सदास्तु सुलभो मम" इति अयं जर्मन् देशीयः वेदविद्वान् मरणकाले स्वदेवतां प्रार्थयामास । तेन विजातीयस्यापि विधर्मीयस्यापि विदेशीयस्यापि अस्य पश्चिमदेशाभिजातस्य विपश्चिदपश्चिमस्य वेदविषये कियाननुरागः कीदृशी वा श्रद्धा बुद्धिरासीदित्येतत्सुस्पष्टमेव भवति। तस्य वेदविषयकं ईदृशमन्यादृशं प्रेमातिशयमालोक्यैव बहव एव भारतीयाः वेदविद्वांसः तस्य जन्मदिने अभिमन्त्रितं यज्ञोपवीतं उपायनरूपेण प्रेषयन् । सोऽपि च तद्ब्रह्म-सूत्रं प्राणपदकवत् रक्षामणिवत् जीवितसर्वस्वमिति मन्यमानः यावज्जीवं भक्त्या धारयामास ।

एवं विदेशीयोऽपि वैदकत्वाभिमानी अयं "मोक्षमूलः" ई. १८२३ वर्षे जर्मन्देशे समुदपद्यत । बाल्यादारभ्यैव तानवितानादीन् एकतानमनसा अभ्यस्य गानगन्धर्व इति गौरवं संपादयितुं तस्य चिरादेवासीत् बलवती खलु इच्छा । तदर्थं शश्वत्सङ्गीतव्यासङ्गव्यापृतस्य तस्य तरुणगायकस्य फ्रान्सदेशे प्यारिस् नगरे युजनी-बर्नोनाम्ना फ्रेञ्चपण्डितेन सह मेलनं समभवद् अवितर्कितमेव ।

स च बौद्धशास्त्रपारदृश्वा फ्रेञ्चपण्डितः भारतीयवाङ्मयस्य तत्रापि वेदराशेः ऋग्वेदस्य सत्वं महत्वं वैभवं वैशिष्ट्यं वैशद्यं वैचित्र्यं च यथामातिनिरूपयामास। तच्छ्रुत्वैव म्याक्समुलरस्य संगीतसमाधिभङ्ग एव बभूव । तत्क्षण एव च सः वीणावेणुमृदङ्गतालतन्त्रीस्वरपेटिकादि संगीत साहित्यं परित्यज्य तेन फ्रेञ्च पण्डितेन प्रदत्तं ऋग्वेदस्य ताडपत्रपुस्तकं पठितुमुपाक्रमत । तत्रत्यं एकमक्षरमपि सः तदा बोध्दुं न शक्नोतिस्म । परं केवलं ऋग्वेद ऋग्वेद ऋग्वेद इत्युच्चरन् तत्ताडपत्र-ग्रन्थं शिरसि निधाय वेदशब्दस्य पुरश्चरणं करोति स्म। ततः सः लण्डननगरमागत्य तत्र कस्यचन वेदविदुषः सकाशात् प्रथमतः संस्कृतसाहित्यं शास्त्राणि समग्रऋग्वेदं च

...धीतवान् । ततोऽनेकवर्षपर्यन्तं बहु परिश्रम्य वैदिकवाङ्मये संशोधनकर्म अकरोत् । ततः समग्रस्य ऋग्वेदस्य आंग्लभाषायां भाषान्तरं चकार ।

परं तस्य प्रकाशनं मुल्लरस्य अशक्यमेवासीत् । तदा अतीव दरिद्रः सः जनानां ...नां प्रतिलिप्यादिकं कृत्वा उपजीवनं करोति स्म । उदरपूर्तयेऽपि पर्याप्तं धनम् अलभमानः सः दरिद्रपण्डितः लक्षावधिरूप्यकव्ययैकसाध्यं स्वग्रन्थप्रकाशनमहाकार्यं कदापि वा कर्तुं कथं शक्नुयात् ।

परं प्रभवति खलु सर्वात्मना भगवती भवितव्यता सर्वत्र । तत्रैव लण्डन नगरे तदा तद्देव चिराद् वेदार्थप्रकाशनोत्सुकः प्रशियादेशस्य राजदूतः बोत् बन्सेन् नामा वेदाभ्यासी पण्डित उवास । सः मुल्लरस्य ऋग्वेदभाषान्तरं दृष्ट्वा स्वस्य सुवर्णं स्वप्नं साकारमिव मन्यमानः परमानन्दभरितो बभूव । तदानीं भारतशासक कम्पनी अधिकारे तस्य अतीव प्रबलः परिणामकारी च प्रभावः आसीत् ।

सः कम्पनीशासकमण्डलाधिकारिणां मनः प्रसादयित्वा भारतशासनसंस्थाद्वारैव वेदप्रकाशनकार्यं भाषान्तरग्रन्थप्रकटनकार्यं च कारयामास । लेखकायापि दापयामास भूरिधनम् ।

तदानीं आंग्लदेशे कम्पनीराज्यं लोकविप्रियं अनादरस्थानं बभूव । कम्पनीहस्तात् भारतप्रशासनाधिकारः आहरणीय इति जना अभिप्रयन्ति स्म प्रकटमेव । एतादृशप्रसंङ्गे भारतस्य सांस्कृतिकाभ्युत्थानाय अस्माभिः महान्ति कार्याणि अनुष्ठीयन्त एव इति जगतो जनानां च निदर्शयितुं कम्पनीशासकमण्डल्या अत्यन्तपरिशुद्धं-सुन्दरं-सुवाच्यं-संशोधनपूर्णं आंग्लभाषान्तरसहितं सुविस्तृतटीकापरिशिष्टानुक्रमणिकादिसहितं च अत्यद्भुतं बृहद्ग्रन्थजातं प्राकाश्यमुपनीतम् ।

तेन च विराड्ग्रन्थराशिना पाश्चात्यप्रपञ्चे महान् कोलाहल एव उदभवत् । भारतीयानां विषये भारतीयवाङ्मयविषये च पाश्चात्यप्रपञ्चस्य तत्रापि सुशिक्षित समाजस्य प्रेमादराभिनिवेशाः वृद्धिमीयुः परमेव । सर्वेष्वपि राष्ट्रेषु संस्कृताध्ययन-संस्कृतसंशोधनादिकार्याणि अभ्यवर्धन्त । प्रायः पाश्चात्यदेशीयेषु सर्वेष्वपि विश्वविद्यालयेषु संस्कृतं शताधिका एव छात्राः अध्येतुं पुरोऽभवन् । पूर्वपश्चिमराष्ट्रेषु समानमेव संस्कृतविद्यायाः पुनरुत्थानस्य समदृश्यन्त सल्लक्षणानि ।

परमत्र भारते सनातनिवैदिकाः “गोमांसभक्षकाणां कुले समुत्पन्नोऽयं म्लेच्छ जातकः अस्माकं वेदमातरं स्पृष्ट्वा अपवित्रामकरोत् । तेन प्रकाशितः वेदग्रन्थः अस्पृश्य एवेति” बहिष्कारमेव समाकलयन् ।

पुण्यपत्तने सर्वेऽपि भारतीयाः वेदविद्वांसः "म्लेच्छापसदस्य अस्य वेदग्रन्थे किमपि नवीनं नास्ति। अशुद्धिबाहुल्यं प्रमादपौष्कल्यं च वर्तते" इति व्यवस्थापयितुं कामपि महतीमेव स्वयं आकारयामासुः विद्वत्सभाम्। तत्र न वयं म्लेच्छप्रकाशितं पुस्तकं स्पृशामः पश्यामः वाचयामश्चेति केनापि ब्राह्मणेतरेण वाचयित्वा शुश्रुवुः समग्रमेव ऋग्वेदं। अक्षिषु तैलं, कर्णेषु सर्वेन्द्रियपाटवं, मनसि च एकाग्रतां आकलय्य शृण्वतामपि तेषां वस्तुतस्तु महापण्डितानां तत्र एकोऽपि दोषः क्वचिदपि प्रमादः लेशतोऽपि अशुद्धिः नैव गोचरीबभूव। तस्य ग्रन्थस्य पदपाठानां संप्रदायशुद्धतां भावार्थबद्धतां टीकाव्याकरणादिसंसिद्धतां च विलोक्य बहव एव निर्मत्सरिणः प्रामाणिकपण्डिताः स्वग्रन्थपाठानेव परिवर्तयामासुः।

ब्रह्मोसमाज आर्यसमाजादि सुधारकवैदिकाश्च मोक्षमुल्लराय प्रकटमेव पत्रं विलिख्य "भवदुपकारं भारतीयाः न जातु विस्मरन्ति" इति निवेदयामासुः।

तया सार्वत्रिकप्रशंसावृष्ट्या प्रोत्साहितः सः "स्याक्रेड्बुक्स् आफ दि ईस्ट" इति ग्रन्थमालामेव आविष्कृत्य प्रायः सर्वेषामपि भारतीय शास्त्रीयग्रन्थानां आंग्लभाषया भाषान्तरं विधाय भारतीयज्ञानगंगां विश्वव्यापिनीं विश्वपावनीं च चक्रे।

एवं जगत एव ज्ञानप्रकाशं सहस्रभानुवदजस्रमेव प्रददतीं पुण्यभूमिं भारतवर्षमेकवारं द्रष्टुं, शिरसा एतद्वेदक्षेत्रं स्प्रष्टुं, च तस्य अतीव उत्कण्ठा आसीत्। परमार्थिकविपत्त्या सः कदाचिदपि आत्मनः स्वप्नलोकं भारतभूमिमागन्तुं न प्रबभूव। परं "अहं काशीं गमिष्यामि अहं काशीं गमिष्यामि" इत्युच्चरद्भावुकब्राह्मणवत् सोऽपि "अहं भारतं गमिष्यामि अहं भारतं गमिष्यामि" इति प्रतिदिनं जपति स्म।

"नाहं ताजमहलशिल्पसौन्दर्यं दिल्ली मुंबयी कलकत्तादिपत्तनवैभवं अजन्ता एल्लोरादि शिल्पकलाकौशल्यं वा द्रष्टुं भारतं जिगमिषामि। किन्तु समग्रानपि चतुरो वेदान् कण्ठस्थीकृत्य गंगासिन्धुकावेर्यादि नदीतटाकेषु विविक्तजीवनं यापयतां श्रोत्रियब्राह्मणानां पावनदर्शनाय समुत्कण्ठते मम हृदयम्। तेषां पुरस्तात् "शिष्यस्तेऽहम्" इति बद्धाञ्जलिपुटमुपवेष्टुं तच्छिष्यत्वसौभाग्यं प्राप्तुं कियद्घोरमपि कियज्जन्मावधिकमपि तपश्चरितुमहमिदानीमेव सिध्दोऽस्मि। एकपद एव च सन्नध्दोऽस्मि। नमोऽस्तु भारताय। नमोऽस्तु श्रोत्रियेभ्यः। नमोनमोऽस्तु भगवते वेदपुरुषाय"।

एव मुद्गिरन्नयं सद्वासनावासितांतःकरणः जर्मन्देशीयः वेदविद्वान् ई. १९०० वर्षे परलोकमगादन्ते भारतभुवमेव मनसा संस्मरन्।

# पुराणानुपरि आक्षेपाः तत्परिहाराश्च

अहो गरीयान्किलैष: काल: समागतितो यदत्र हिन्दुकुलसंभवैरपि समाश्रित्य कुतर्कान्परमप्रामाणिकेषु पुराणादिप्रबन्धेषु प्रत्यवस्थीयते। 'प्रतारकाणां किलैतानि वचनानि यानि नाम पुराणानि' 'फाल्गुनिकानि बालजल्पितानि खल्वेतानि पुराणानि' इत्येवमनेकविधाः किलात्र विषये विप्रलापाः श्रूयन्तेऽर्वाग्दृशां केषांचिद्वैदेशिकविद्यापिशाचिकाविष्टानां भारतीयानाम्। एवंविधेनैव च केनापि प्रणीतं किमपि पुस्तकमिदानीं नो नयनसरणिमारूढम्। न खल्वेतेन विपरिवर्तेत पुराणविषयकं मतं युक्तायुक्तविवेकपटीयसां स्थिरधियां विदुषाम्। आलोकितमात्रं चैतदाविष्कुर्याद्दोषजालमात्मगतम्। तथापि व्यामोहयेदेवैतत्केषांचिदनभिज्ञप्रायाणां धर्मे श्रद्धावतामप्यन्तःकरणानि। शिथिलयेच्च धर्माभिनिवेशमेतेषाम्। समुपनमयेच्च विनैवायासं निरयमितीदानीं प्रवर्तामहे पुस्तकमिदं विस्तरशःखण्डायितुम्।

तत्र तावदेतदेतस्यादिमं पलपितम् 'अन्धश्रद्धाजुषः किल हिन्दवोऽष्टादशानां पुराणानामष्टादशानां चोपपुराणानां प्रणेता भगवान्व्यास इत्येव श्रध्दधते। भगवाँश्च व्यासो मुनेः पराशरस्यात्मजः। आसीच्चायं महाराजस्य युधिष्ठिरस्यावसरे। युधिष्ठिरत एवोपक्रन्तः कलिः। तस्य चेदानीं वर्षाणां पञ्चसहस्राण्यतिक्रान्तप्रायाणि। तत्पुराणानामप्युत्पत्तेरेतावानेव समयोऽतिक्रान्त' इति। अयुक्तं पुनर्मतमेतदेतेषाम् तदेतन्निम्ननिर्दिष्टैः प्रमाणैः स्फुटीभविष्यति।

अहो पराकाष्ठा धाष्टर्यस्य यदेवं निर्विशङ्कमेव प्रलप्य यथाभिलषितं दूष्यन्ते श्रध्दाजुषां हृदयानि। न खलु पुराणानां व्यासप्रणीतत्वे संन्देहावसरः 'अष्टादशपुराणानां कर्ता सत्यवतीसुत' इहि श्रूयते। कर्तृत्वमप्येतन्न पुराणानामादितो रचयितृत्वं किन्तु विस्तृततमानां संक्षिप्ततापादनमेव। विस्तृततमानि हि परमात्मना प्रणीतानि पुराणानि न चैतानि मानुषैः परिमितप्रज्ञैराकलयितुं शक्यानीत्याकलयता किल जगदीश्वरेण भगवता महर्षिणा पाराशर्येण संक्षिप्तानि। अत एव च याः किल तेषां तेषां पुराणानां श्लोकसंख्याः प्राचीनाः संदृश्यन्ते ततो न्यूनतमा एवेदानीमुपलभ्यन्ते। यथाविष्णुपुराणादीनाम्। न चैतन्निर्मूलमिति भ्रमितव्यम्। एवं हि नारदीये पठ्यते—

पुराणमेकमेवासीत्पूर्वकल्पेषु मानद ।
चतुर्वर्गस्य बीजं च शतकोटिप्रविस्तरम् ॥
प्रवृत्तिः सर्वशास्त्राणां पुराणादभवत्ततः ।
कालेनाग्रहणं दृष्ट्वा पुराणस्य महामतिः ॥
हरिर्व्यासस्वरूपेण जायते च युगे युगे ।
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ।
तदष्टादशधा कृत्वा भूर्लोके निर्दिशत्यपि ॥ इति ॥

एतेन चाष्टादशानां पुराणानामादित एकरूपेणैवावस्थितानां विभाजयिता च संक्षेपयिता चैव भगवान्व्यास इति स्फुटीभवति । आदितो ह्येकरूपेणावस्थितस्य पुराणस्य शतकोटिश्लोकवैशिष्ट्यमप्युक्तम् । अष्टादशधा विभक्तस्य चैतस्य लक्षचतुष्टयमेव पद्यानां स्मर्यते । न ह्येतद्विना संक्षेपं संभवति । संक्षेपश्च नवीकरणनिर्विशेषः कर्तृत्वमेव संक्षेपयितुः प्रतिष्ठापयति । तत एव चोपपद्यन्ते व्यासस्य पुराणकर्तृत्वप्रख्यापकानि 'अष्टादशपुराणानां कर्ता सत्यवतीसुत' इत्यादिनि वचनानि । एकरूपेणावस्थितानि पुनः पुराणान्येतानि वेदादिवदनादीन्येव । यदि ह्येतान्यर्वाचीनान्यादिमन्ति च भवेयुः कथं नाम तदा श्रुत्यादिष्वपि पुराणपदमुपलभ्येत? उपलभ्यते चैवम् । यथा यजुरारण्यके — यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान् गाथा नाराशंसीः इति । एतचर्ग्वेदाद्यध्ययनमाहात्म्योपवर्णनोत्तरमुपवर्ण्यते। अत्र च पुराणपदं विशेषतश्च बहुवचनान्तं न विस्मरणीयम् । अस्य च ब्राह्मादिपुराणपरत्वमेवेति निःसन्देहम्। इतिहासपदसाहचर्यात्। न च वेदान्तः पात्येव कश्चिद्भागः पुराणाख्य इति भ्रमितव्यम् । प्रमाणाभावात् । वेदाध्ययननिरूपणेनैव तदन्तःपातिनः पुराणभागस्याध्ययनाभिधानमर्थादायातमिति पार्थक्येन तन्निर्देशस्य वैयर्थ्याच । यद्धि यदन्तःपाति भवति न हि तत्तद्वचनोत्तरं पुनः पार्थक्येनोच्यते। पौनरुक्त्यापातात् । ततश्च सिध्दमत्र पुराणपदस्याष्टादशपुराणपरत्वम् । एवं च यजुरारण्यकावसरेऽप्यासन्नेवैतानि पुराण्यशेषाण्यपीति निर्विशङ्कमेव प्रतीयते। छान्दोग्येऽपि च श्रूयते (७।१।१–) अधीहि भगव इति होपससाद सनत्कुमारं नारदः। त ҫ होवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति सहोवाच।१। ऋग्वेदं भगवोऽध्येमि यजुर्वेद ҫ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदम् ।' अत्रापि वेदचतुष्टयनिर्देशोत्तरमितिहास पुराणयोर्निर्देश एतयोर्वेदचतुष्टयविभिन्नत्वमेव प्रतिपादयति। अन्यथा श्रुतिनिर्देशेनैव गतार्थतया

पार्थक्येनेतिहासपुराणयोर्निर्देशस्य वैयर्थ्यापातात् । तानि च पुराणानि ब्राह्मादीन्येवेति विस्पष्टमेवेदम् । पुराणान्तराणामप्रसिध्दतया कल्पयितुमशक्यत्वात् । अत्र चेतिहास-पुराणयोः पञ्चमवेदत्वोक्तिर्न विस्मरणीया । एतेन हि वेदसंमितत्वमत एव च प्रामाणिकतमत्वं पुराणानां प्रतिपाद्यत इति ।

तत्रैव चाग्रेऽपि—(७।४)' नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणं पञ्चमो वेदानां वेदः' इति च । अत्रापि चोक्तपूर्वयैव दिशा पुराणपदस्य ब्राह्मादिपुराणपरत्वमेवेति विस्पष्टम् । अन्यथा हि वेदनामनिर्देशेनैव गतार्थतया पुराणानां पार्थक्येन निर्देशो नोपपद्येत ।

तत्रैव च तृतीयाध्यायस्य चतुर्थे खण्डे श्रूयते 'अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्योऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपः । १ । ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳरसोऽजायत ॥ २ ॥' इति । अत्रापीतिहासपुराण-निर्देशः सुस्पष्टमेव प्रत्याययति श्रुतिसमसामयिकत्वं पुराणादीनाम् ।

तदेवं विद्यत एव सामवेदे पुराणनामोल्लेख इति स्पष्टम् । वाजसनेयब्राह्मणेऽर्थाद् बृहदारण्यकोपनिषद्यपि श्रूयते पुराणपदोल्लेखः । यथा—अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणमिति । तत्रैव च षष्ठेऽध्याये द्वितीयखण्डे 'वाचा वै सम्राड्बन्धुः प्रज्ञायत ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणविद्या' इति ।

बृहज्जाबालेऽपि 'स कल्पानधीते स नाराशंसीरधीते स पुराणान्यधीत' इति । अत्र च श्रुतीनामिव पुराणानामप्यध्ययनीयता विधीयते ।

एवमन्यत्रापि बहुषु श्रुतिवचनेषु पुराणनामोल्लेखः संदृश्यते । अवकाशाभावात्पुनर्नात्र विस्तरश एनमुपनिबन्धुं प्रभवामः ।

तदेवं श्रुतिवचनेष्वपि पुराणानामुल्लेखेन निर्विशङ्कमेव प्रतीयते श्रुतिसमसामयिकत्वमेतेषामिति सिद्धम् । न च नास्त्युपनिषदां श्रुतित्वमेवेति विप्रतिपत्तव्यम् । एतासां तत्तच्छाखीयब्राह्मणविशेषतया श्रुतित्वस्य दुर्निवारत्वात् । न च ब्राह्मणभागस्य नास्ति श्रुतित्वमिति प्रलपनीयम् । मन्त्रब्राह्मणयोर्वेदनामधेयमिति वेदलक्षणस्य मुनिभिः प्रतिपन्नत्वात् । मुनय एव च संप्रदायविदो वेदस्य । तत एव च योऽयं वेद इत्यमीभिराख्यायते स एव वेद इति प्रतिपत्तव्यमस्माभिः । यो हि

यत्सम्प्रदायं जानाति स एव तत्स्वरूपनिरूपणे प्रामाण्यमावहति। नैव पुन संप्रदाया नभिज्ञो यः कोपि। यथा ख्रिस्तीयानां बायबल माहम्मदानां कुराणं पारसीकानां च झेंदावेस्तेत्येवमादयो ग्रन्थास्तत्तत्संप्रदायाभिज्ञैरेवोच्यमाना गृह्यन्ते। नैव पुनस्तत्र भिन्नधर्मीयाणां वाञ्छा प्रमाणं भवति। एवमेवैतत्। तत एव च निराबाधं मन्त्राणामिव ब्राह्मणानां ब्राह्मणान्तःपातित्वाच्चोपनिषदामपि वेदत्वम्। तत्र च निर्दिष्टतया पुराणानामपि श्रुतिसमकालिकत्वमबाधितमेवेति कृतं पल्लवितेन। एतावता महाभारतोत्तरकालिकान्येव पुराणानीति कस्याप्यसंबद्धं प्रलपितं सुदूरतोऽपास्तमिति बोद्धव्यम्। तथापि पुनरप्यत्र मनागिव लेखनीं व्यापारयितुमिच्छामः।

यत्किलोक्तं पुराणविद्वेषिणा 'यथा पुराणेषु महाभारतस्य नैवं महाभारते पुराणानां निर्देश उपलभ्यते। ततश्चार्थादेवापतितं महाभारतोत्तरकालिकत्वं पुराणानां' इति। तदेतन्महाभारतानवलोकनबीजमिति ब्रूमः। संदृश्यते हि महाभारते पुराणनामोल्लेखः। यथा वनपर्वणि १९१ तमेऽध्याये युधिष्ठिरं प्रति मार्कंडेयस्योक्तिः-

एतत्ते सर्वमाख्यातमतीतानागतं तथा।
वायुप्रोक्तमनुस्मृत्य पुराणमृषिसंस्तुतम्॥ इति।

एतेन च सुविस्पष्टमेव प्रसिध्यति महाभारतप्राक्कालिकत्वं वायवीयपुराणस्य। ततश्च निर्मूलमेवैतद्यदुच्यते नास्ति महाभारते पुराणनामोल्लेख इति। न चैवं सत्यपि वायवीयपुराणनामोल्लेखेऽपरेषामनुल्लेखान्नास्त्यष्टादशानां पुराणानां महाभारतप्राक्कालिकतेति वक्तव्यम्। पुराणानामष्टादशत्वस्यापि महाभारते प्रोक्तत्वात्। तथाहि स्वर्गारोहणपर्वणि चरमेऽध्याये-

अष्टादशपुराणानां पठनाद्यत्फलं लभेत्।
तत्फलं समवाप्नोति वैष्णवो नात्र संशयः॥ इति।

अष्टादश पुराणानि च वैष्णवादिषु प्रोक्तानि---

ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा।
अथान्यन्नारदीयं च मार्कण्डेयं च सप्तमम्॥
आग्नेयमष्टमं चैव भविष्यं नवमं तथा।
दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम्॥
वाराहं द्वादशं चैव स्कान्दं चात्र त्रयोदशम्।
चतुर्दशं वामनं च कौर्मं पञ्चदशं स्मृतम्॥
मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम्। इति।

तदेवं विद्यत एवाष्टादशानामपि पुराणानां श्रीमति महाभारते समुल्लेख इत्यसंदिग्धमेवेदम् । सत्येवं कथं नामोपपद्यतां महाभारतोत्तरकालिकान्येवाष्टादश पुराणानीति केषांचिद्वचनम् । असङ्गततमं चैतत्कथंकारं वा समवगाहतां प्रमाणत्व-मिति स्वयमेवैतद्विचार्यतां धीमद्भिः ।

इतोऽपि च महाभारतप्राक्कालिकान्येव पुराणानि । महाभारते ह्यानुशासनिके पर्वणि 'श्रुता मे मानवा धर्मा' इत्यादिषु मनुप्रोक्तानामर्थान्मनुस्मृतिगतानां धर्माणां श्रवणमभिधीयते । ततश्च मानव्याः स्मृतेः श्रीमतो महभारतात्प्राचीनतमत्वं स्फुटी-भवति । सुविशदं च प्रतीयतेऽयमर्थः शान्तिपर्वादिभ्यः । तत्र हि 'इत्याह भगवान्मनु' रित्येवमादिवचनान्तैः श्लोकैर्मनुस्मृतिगतानि पद्यान्यनूद्यन्ते । मनुस्मृतौ च तृतीयेऽध्याये श्राद्धेऽभिश्रवणविधौ पुराणान्यपि श्रावयेदिति विधिः संदृश्यते । यथा-

**स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैव हि ।**
**आख्यानानीतिहासांश्च पुराणानि खिलानि च ॥ इति ॥**

एतानि च पुराणानि ब्राह्मादीन्येवेति नात्र शङ्कावसरः । एवं च साक्षात्पर-म्परया च प्रमाणत एव श्रीमतो महाभारतात्सुतरां प्राक्कालिकानि पुराणानीति द्रष्टव्यम् । ततश्च महाभारतोत्तरोत्तरकालिकान्येव पुराणानीति रिक्तं वचो नार्हति प्रमाणपदवीमिति विभाव्यतां प्रज्ञावद्भिः ।

अथ यदुच्यतेऽर्वाचीनः किल भगवतो व्यासाच्छ्रीमान् बुद्धः । एतस्य जन्मनो भूतकालिकत्वमुपवर्ण्यते पुराणेषु । भूतकालिकत्वं च न हि भविष्यतः संभवति । ततश्च बुद्धजन्मनो भूतकालिकतामुपवर्णयन्ति भगवतो बुद्धदेवादर्वाची-नान्येवाष्टादश पुराणानि । तत एव च नैतानि भगवता व्यासेन प्रणीतानीति पर्यवस्यति । इति । तन्न प्रामाणिकम् । न हि निखिलेष्वपि पुराणेष्वतीतत्वेनैव निर्दिष्टं जन्म भगवतो बुध्दस्य । प्रत्युत भविष्यत्कालिकत्वेनापि । यथा भागवते

**ततः कलौ संप्रवृत्ते संमोहाय सुरद्विषाम् ।**
**बुद्धो नाम्ना जिनसुतः कीकटेषु भष्यति ॥ इति ॥**

यश्च काचिदतीतत्वेन निर्देशः सोऽयमपि नाश्चर्यकरः । सर्वोहि कल्पः कल्पपूर्वो भवति । यथा सप्ताहपूर्वः सप्ताहः । यथा च वर्तमान एवमतीतेऽपि कल्पेऽवश्यं संभूतः श्रीमान् बुध्दः । तत एव च कल्पान्तरोद्भूतबुध्दावतारपरतया न विरुध्यते भूतकालिकत्वनिर्देश इति सुष्ठूत्पश्यामः ।

इतोऽपि च दुर्निवारं भगवतो बादरायणतः प्राचीनत्वं बुध्दस्य । यानि हि भगवता बादरायणेन प्रणीतानि ब्रह्मसूत्राणि खण्डितं हि तत्र बौध्दमतं तेन । यथा ब्रह्ममीमांसाया द्वितीयाध्यायस्य द्वितीयपादे —

**समुदाय उभयहेतुकेऽपि तदप्राप्तिः ।**

इतिप्रभृतिषु सूत्रेषु । सूत्रमेतदेवं वेदान्तपारिजातसौरभेऽवतार्यते 'सुगतमतं निराकरोति' इति । वेदान्तकौस्तुभेऽपि 'इदानीं ततोऽप्यतिनिकृष्टस्तत्सादृश्या. द्बौद्धपक्षो निराक्रियते समुदाय' इत्यादि । एवमन्यत्रापि द्रष्टव्यम् । न चान्य एव महाभारतप्रणेतुर्व्यासाद् ब्रह्मसूत्राणां रचयिता व्यासः । स च बुध्दतोऽर्वाचीन इति बौध्दमतस्य ब्रह्मसूत्रेषु खण्डनात्प्रतीयत इति वाच्यम् । महाभारतादपि ब्रह्मसूत्राणां प्राचीनत्वात् । या हि श्रीमति महाभारते विनिवेशिता श्रीमती भगवद्गीता तस्यां किल समुल्लिखितानि त्रयोदशेऽध्याये ब्रह्मसूत्राणि 'ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः' । इति । ब्रह्मसूत्राणि च न हि भगवता व्यासेन प्रणीतेभ्योऽपराणि संदृष्टानि । ततश्च ब्रह्मसूत्राणां महाभारततः प्राचीनतया तत्समकालिकतया वा तत्र च बुध्दमतस्य खण्डिततया न व्यासतोऽर्वाचीनत्वं भगवतो बुध्दस्येति प्रतीयते । तत एव च न विरुध्यते क्वचित्पुराणेषु बुध्दं प्रति भूतकालिकत्वनिर्देश इति द्रष्टव्यम् ।

अथवा भाविनोऽप्यर्थस्य संघटनाया विनिश्चितत्वमवधारयतां भवति तत्रापि भूतवन्निर्देशः । यथा मुमूर्षौ मृत एवायमिति । यथा वाऽवश्यं घटिष्यत इति निश्चये संघटितमेवैतदिति । एवमवश्यं भावी बुध्द इति कृतनिश्चयानामविरुद्ध एवायं भूतकालिकत्वनिर्देश इति । प्रतीच्या हि दृष्ट्या साक्षात्कृत्य भूतं च भवन्तं चार्थमाचक्षते मुनयः । ऊर्ध्वस्रोतसां ह्यप्रतिहतं प्रज्ञामयं चक्षुरेतेषामिति ।

अथवाऽऽर्षत्वादेव भाविन्यप्यर्थे भूतकालिको निर्देश इति प्रतिपत्तव्यम् । अनियता हि पुराणेषु विभक्तयो दृश्यन्ते । आर्षत्वमेव चैतासामुपपादकं मन्यन्तेऽनसूयका विद्वांसः । एतदपि वाऽत्र समाधानं द्रष्टव्यम् ।

तदेवं सर्वथा नास्ति बुध्दं प्रत्यतीतत्वेन निर्देशस्य पुराणानामर्वाचीनतापादकत्वमिति सिध्दम् ।

---

Regd. No. B. 7171

## मधुरवाणी नियमावली

ये पञ्च नवीनग्राहकान् सम्पादयन्ति तेभ्यः विना मूल्यं मधुरवाणी पत्रिका प्रेष्यते ।

वर्षे यदाकदाचिदपि वा ग्राहकत्वं स्वीकर्तुं शक्यते । यदा ग्राहकता स्वीक्रियते तद्दिनादारभ्यैव वर्षपर्यन्तं प्रदीयन्ते ।

विना मूल्यं आदर्शसंचिका न प्रदीयते । अवलोकनार्थं संचिका अपेक्षमाणैः अष्टाणकं पोष्टटिकीट प्रेषणं कार्यम् ।

व्हि. पी. द्वारा पत्रिका नैव प्रेष्यते । प्रतिवर्षं वर्षारंभे मनिआर्डर द्वारा एव शुल्कं प्रेषणीयम् ।

ग्राहकेतरेषामपि लेखाः सरसाश्चेत् प्रकाशयेरन् । असुवाच्याक्षराः नीरसाः दीर्घतराकाराः कठिणतमाश्च लेखा नैव अवसरमासादयेयुः सरलतमानां लेखानां प्रथमप्राशस्त्यं प्रदीयते ।

**Book-Post**

To. *Shree*....................

If addressee is not found please return to sender—

पंढरिनाथाचार्य गलगली
संपादक मधुरवाणी
मधुरवाणी कार्यालय, गदग (कर्नाटक)

Printed at the New Gadag Printery Gadag, by P. S. Hombali and Published by Pandharinathacharya Galgali at Gadag

॥ श्रीशः शरणम् ॥

# मधुरवाणी

## संस्कृतमासपत्रिका



चैत्राङ्कः — वसन्तपल्लवः

योषीकृतदृषद्रेणुचरणाम्बुजमम्बुधौ ।
प्लावितोपलनामानं सीतारामं नमाम्यहम् ॥



प्रधान-सम्पादकः

पं. गलगलीरामाचार्यः
संस्कृतसाहित्यरत्नम्

सम्पादकः

पं. गलगलीपण्ढरीनाथाचार्यः

१८७४ शकस्य

वार्षिकं मूल्यम् रूपकपञ्चकम्

बा ग ल को ट



# अनुक्रमणिका

॥ श्रीशः शरणम् ॥

# मधुरवाणी.

सुधानिष्यन्दिन्या मधुरमधुरालापकलया खलावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

१७ वर्षे ]  चैत्राङ्कः  [ १ संचिका

॥ श्री ॥

## नंदनसंवत्सरस्वागतपंचकम्

( कवयिना—प्रान्ताधिपः श्री अणे महाभागः )

नंदनं सुंदरोद्यानम् वृंदारकप्रहर्षणम्
नवाऽब्दवेषसम्प्राप्तं वन्दे कल्पद्रुशोभनम् ॥ १ ॥

सत्संकल्पा जनाः सन्तु सुशीला गतकल्मषाः
दैन्यदुःखामयैर्हीनाः सर्वे सिद्धमनोरथाः ॥ २ ॥

कलहो विलयम् यातु सौमनस्यं च वर्धताम्
विश्वप्रेमनिबद्धास्ते जना नन्दन्तु नन्दने ॥ ३ ॥

सद्विचाराः सदुच्चारा दुराचारविरोधिनः
सदाचारप्रवृत्ताश्च भारते सन्तु शासकाः ॥ ४ ॥

पूजितोद्य नन्दनाब्दः पद्मविल्वदलैर्मया
कालप्रभुः प्रसन्नोऽस्तु तेनोमेशः सदाशिवः ॥ ५ ॥

पाटलिपुत्र क्षेत्रे—शके १८७४
नंदन संवत्सरे चैत्र शुक्ल प्रतिपादिम्

'अणे' इत्युपाह्वः
श्रीहरिसूनुमाधवः

# मङ्गलाचरणम् ।

दन्तेनोन्नमितेऽद्रिकेलिषु मुदा कैलासशैले शिवे ।
वेगाक्षिप्तपदं क्षिपत्यपि तनूभारं दशास्यभ्रमात् ॥
संभ्रान्तां गिरिजां स्वयंग्रहपरिष्वङ्गातिबद्धादरां ।
दृष्ट्वा स्मेरमुखः सुखं गजमुखः कुर्यादमर्यादितम् ॥ १ ॥

निद्राणः सविधे विवर्तनवशाद्व्यालोलकर्णानिलै- ।
रुन्मीलत्सुरतश्रमौ स्वपितरौ संमोदयन् खेदयन् ॥
कुम्भोद्यन्मदलाभलोभिमधुलिङ्झङ्कारकोलाहलैः ।
प्रौढप्रेमरहस्यविघ्नकलनात् पायात्स विघ्नेश्वरः ॥ २ ॥

---

# मासावतरणिका

चण्डाल्याननचुम्बिताः सुमनसो हा लोकबन्धुर्जग- ।
त्संतापी मधुपानमत्तमनसो गायन्ति सर्वे द्विजाः ॥
जातिः क्वापि गता प्रसादमतुलं धत्ते च दोषाकरः ।
चैत्रोयं प्रतिभाति हन्त कलिदुष्कालानुकूलो भुवि ॥ १ ॥

---

# सुभाषितम् ।

कविः—विद्यार्थी **गलगली मुरलीधरः**

सर्वो विधत्ते लोकेऽस्मिन्नाश्रितं स्वसमं सदा ।
संस्कृतं संस्कृतं कुर्यात्प्राकृतं प्राकृतं जनम् ॥
उत्तमस्याश्रयान्नूनं सामान्यं मान्यतामियात् ।
संस्कृतालङ्कृता भाषा प्राकृता सुमनोहरा ॥

---

## सम्पादकालोकः

# संस्कृतसाहित्ये सुधारणाया आवश्यकता

संस्कृतसाहित्यस्य अवनतेरधोगतेर्बहून्येव हि कारणानि समुपदर्शयितुं शक्यन्ते समुपदर्श्यन्ते च तैस्तैरितिहासविद्भिर्विद्वद्भिस्तेषु तेषु नियतकालिकेषु तदा तदा। परं गीर्वाणमानिताया देवभाषायाः परागतिमीमांसा मानवीयभाषाणां प्रगतिकारणपरामर्शनेन सरलसाध्या भवति। यतो हि संस्कृतजनिताः संस्कृतेनैव पालिताः पोषिता भूषिता वेषिता अपि सर्वाः सबला अबला भाषा स्वां स्वां समुन्नतिं सर्वांगीणां प्रगतिं सर्वतोमुखीं चाभिवृद्धिं च समाप्नुवन्ति आरोहन्ति च वैभवस्य परामेव काष्ठाम्। परं तासां सर्वासामपि भाषाणां मूलोगमस्थानीया तासां जीवनजीवातुभूता सौन्दर्याभिवर्धकनैकालंकारैकाकरायमाणा सुरसरस्वती पदात् पदमपि न पुरः प्रचलन्ती स्थाणुर्वा भाषा वेति संशयपदवीमवगाहते इति च चित्रीयते चेखिद्यते च नश्चेतः। इयमास्माकीना देवगवी इतश्शतसहस्रवर्षेभ्यः प्राग् यथाऽसीत् यादृशी आसीत् यत्रासीत् यावत्यासीत् इदानीमपि सा तथैव तत्रैव तथाविधैव आतिष्ठते। न वयं तत्र स्तोकमप्यन्तरं समुपलक्षयामः। अनादिकालतः अस्याः तदेव हि विशिष्टजातेः ब्राह्मणानां तत्रापि विशिष्टलिङ्गस्य पुल्लिंगस्यैव तत्रापि च कतिपयविदुषामेव वदनकुटी संचरणक्षेत्रम्। त एव च क्लृप्ता अलंकाराः। सैव च ग्रन्थग्रन्थिमयी दुरूहा दीर्घसमासभूयिष्ठा रीतिः। न तत्र सुरभारती अल्पीयसीमपि प्रगतिं साधितवती। परं तदुत्पन्नाः तनुवाग्विभवा अपि भाषास्तत्तत्प्रान्तेषु प्रचलन्त्यः विलक्षणामेव विस्मयकरीमेव च प्रगतिमासादिताः। तावताप्यपरितृप्ता पुनरधिकाधिकां प्रगतिं संसाधयितुं जागतिकवाङ्मयभाण्डारमालोडयन्ति। निरीक्षन्ते च सप्रत्याशं विपुलेस्मिन्वसुन्धरावलये कस्मिन् वा देशे का वा भाषा कीदृशं वा पन्थानमवलम्ब्य कं वा

विनूतनं वाङ्मप्रकारमाविष्कृत्य भिन्नरुचिं रसिकलोकं समाराधयति समाह्लादयति समासेवते च । एवं युरोप अमेरिकादिदेशेषु प्रचलितानां सर्वांगसुन्दरीणां सहृदयहृदयाह्लादकनैकविधवाङ्मयीनविभागे विस्फुरन्तीनां पारदेशिकभाषाणां रीतिं नीतिं धाटीं परिपाटीं सरणिं धोरणीं च सगौरवमालोकयन्ति आद्रियन्ते आस्वादयन्ति आलोचयन्ति च । अन्ततः साध्विति प्रतिभातं चेत् स्वभाषायां स्वात्मन्यन्तर्भावयन्ति तत्क्षणादेव तं रसभागम् । परं संस्कृतभाषा संस्कृतभाषानिष्णाताः पण्डितप्रकाण्डाः अखण्डेस्मिन्ब्रह्माण्डे भरतखण्डादन्यत्र कानिचिद्राष्ट्राणि वर्तन्ते, तत्र काश्चित् सर्वांगपरिपुष्टाः सुन्दराः सुमधुराः भाषा अपि विद्यन्ते इत्येतत्तत्वं नैव जानन्तीति प्रतिभाति । जानन्तोपि ता अवगन्तुं सकृदपि मनसापि न मनागपि कांक्षन्ते न वा निरीक्षन्ते च । कुतो वा किमर्थं वा तैर्निरीक्षणीयास्ताः भाषाः । यतो हि जगति यद्यत् यावत् सौन्दर्यं माधुर्यं स्वारस्यं सौष्ठवं सौभाग्यं च विद्यते तत्तत्सकलमपि संस्कृतवाङ्मय एव निगूहितं सुरक्षितं च वर्तते । 'यन्नेहास्ति न तत्क्वचिदपि वर्तते' इति खलु तेषां द्रढीयान् सिद्धान्तः । कालिदासभवभूतिभारव्यादय एव ब्रह्मण औरससन्ततयः । तेषामेव मेधासु सविशेषां प्रतिभां कल्पनाशक्तिं च निदधाति स्म भगवान् । तेषामेव काव्यानि साधूनि स्वादूनि सरसाणि हृदयंगमानि च । अवलोकितेषु आस्वादितेषु वा तदीयकाव्येषु नास्त्येव अन्यदेशीय–अन्यभाषीय–अन्यकृतकाव्यावलोकनस्य आवश्यकता इति दृढं अभिप्रयन्तः बाढं विश्वसन्तः गाढमाश्वसन्तश्च तूष्णीं सुरसरस्वत्या अवनतिमप्युन्नतिमेवाकलय्य स्वस्थमासते संस्कृतज्ञाः । परमितः संस्कृतसंजातास्तत्तत्प्रान्तीयाः भाषा तद्भाषोपासकाश्च न तथा पिण्डे पिण्डे मतिर्भिन्ना, यथास्माकमस्मत्पूर्वजानां प्रतिभाऽऽसीत् कल्पकताऽऽसीत् तथैव तेषां परदेशीयकवीनामपि स्यात्, तेषामपि काव्येषु रमणीयता चमत्कृतिः हृदयंगमता चावश्यं भवेदिति निश्शंकं निरभिमानं च पुरः प्रसृत्य ताः भाषा आत्मसात्कृत्य तादृशं सौन्दर्यं माधुर्यं स्वकीयास्वपि भाषासु समापादयन् । इदानीं

भारते तत्तत्प्रान्तेषु प्रचलन्त्यः वङ्ग-हिन्दी-महाराष्ट्री-गुर्जरीप्रमुखाः संस्कृतोत्पन्नाः सर्वा अपि भाषाः प्रथमोत्पन्नजनन्यपेक्षया अनंतरं तदुत्पन्नकन्या एव द्राघीयस्यः जाता इति आभाणकमनुसृत्य संस्कृतभाषापेक्षया परामेव प्रगतिमुन्नतिं महतीमाश्नुवन् अश्नुवन्ति च । संस्कृतभाषा परं स्वकीयभोज-विक्रम-काशी व्याख्यानगौरवं राजैश्वर्यं व्यास-भास-कालिदासादिसामयिकानितरसाधारणसौभाग्य-वैभवप्रतिष्ठादिकमेव मुहुर्मुहुस्सपुलकोद्गमं सधन्यंमन्यताबुद्धिं चानुस्मरन्ती स-प्रौढिमभरं च जनाननुस्मारयन्ती विधवेव स्वपूर्वतननीलमेघमण्डलसदृश-सुदीर्घकेशराजिरामणीयकमनुस्मरन्ती तावतैव परितुष्यति अन्तस्समादधाति च । परं किं तस्याः सनातनसौन्दर्येण अधुनातनजनानाम् । किं तस्यां प्राक्सौन्दर्य-मासीदित्येव सा बहु मन्तव्या ? । एषा तारुण्ये अतीव सुन्दरी आसीदिति ज्ञानमात्रेण अथवा तदीयपूर्वकालीनसौन्दर्यनिदर्शकप्रतिकृतिदर्शनमात्रेण वा इदानीं विरूपायां कस्यांचित् जरठायां किं कस्यापि वा प्रवृत्तिरुदीयात् । जनानां प्रवृत्तौ आदृतौ च सर्वकालीन–सार्वजनीन–सर्वाङ्गीण–सौन्दर्य-मावश्यकम् । तादृशसौन्दर्यविशेषस्य इतरभाषासु भरितत्वादेव तासु जनानां स्वारसिकी प्रवृत्तिः । तदभावादेव च गीर्वाणगिरि च स्वारसिकी निवृत्तिः । अतो यदि संस्कृतभाषायाः इतरभाषासमानकक्षायां निवेशयितुमभिलाषो विद्यते तदा तस्यां भाषायां परित्यज्य अभिमानं दूरीकृत्य दुराग्रहं अपसार्य च परेषु हेयताबुद्धिं यत्र यत्र सौन्दर्यं संस्फुरति यत्र यत्र वा माधुर्यं परिष्यन्दते यत्र यत्र च स्वारस्यं संस्रवति स्वादुता साक्षाद्भवति वा तत्र तत्र गत्वा तत्समासेवनीयं समास्वादनीयं च । तत्समासाद्य समास्वाद्य तत्साधु जीर्णीकृत्य ततः स्वजनानामपि तादृशरससाक्षात्कारः कारणीयः । एवं कृत्वैव वंगमहा-राष्ट्रादिभाषाः पुरोगताः प्रगताः उन्नताः प्रथिताश्च अभूवन् । अतो संस्कृत-भाषापि प्राक्काले प्राचीनराष्ट्रेष्विव पुरातनजनतायामिव एतत्कालेपि इदानीन्तन-राष्ट्रेष्वपि अद्यतनीनजनतायामपि प्रसृतिं प्रसिद्धिं प्रगतिं प्रतिष्ठां च समा-

सादयेत् इति यदि संकल्पः तदा तयापि इतरभाषाभिरिव मानमुत्सृज्य आग्रहमुच्छिद्य अनुकरणीया अनुसरणीया च पश्चिमदेशीयसाहित्यप्रणालिका। नैतदस्याः सुरभाषायाः लाघवकरमिति मन्यामहे, यतो हि वर्तत एव तस्यामप्येवंविधमन्यादृशं सौन्दर्यमद्वितीयं रमणीयत्वमसाधारणं च हृदयंगमत्वम्। परं तन्माधुर्यं पश्चिमवाङ्मयीनमाधुर्येण संगतं चेत् गंगायमुनासंगम इव सशर्करपयसः एलाकेशरसंयोग इव उज्ज्वलसुवर्णस्य सौगंध्यस्पर्श इव नितांतमनोहरं भवेत् ।

आदत्ते हि तयोः प्रयोग उभयोरामोदभूमोदयं ।
संगः कस्य हि न स्वदेत मनसे माध्वीकमृद्वीकयोः ॥

पश्चिमदेशेषु विविधा वाङ्मयविशेषाः सहृदयहृदयानि समाल्हादयन्तः रसिकान्तरङ्गाणि रञ्जयन्तः प्रचलन्ति प्रसरन्ति प्रवर्धन्ते च । लघुकाव्य–भावगीत–लघुकथा–एकांकनाटक–प्रहसन–लघुनिबन्ध–व्यंग्यप्रबन्ध – कादंबरी–नाटक–चरित्र–इतिहास–प्रवासवर्णन–पत्रलेखनप्रभृतयः नैका एव मनोरञ्जकबुद्धिबोधकमेधाशोधकचित्तवेधकचमत्कृतिजनकवाङ्मयप्रकाराः विद्यन्ते । अत्र एकैकोऽपि वाङ्मयविशेषः सचेतोमनोविनोदनाय अलम् । एतेषु सर्वेष्वपि वाङ्मयपरिपुष्टेष्वेव यस्य कस्यचित् साहित्यस्य पूर्णता आयाति । एतैस्सर्वैरपि प्रकारैः जीवनस्य सर्वशाखासु संशोधितासु तदैव जीवितरहस्यं साधु स्पष्टीभवति। अतस्संस्कृतभाषयापि एतानि सर्वाण्यपि साहित्याङ्गानि परिपोषयितुं यावच्छक्यं प्रयतनीयम् ।

---

## हास्यलास्यम्

एकदा वसन्तः माधवस्य गृहं गतः । तत्र गोष्ठीप्रसंगात् वसन्तः परिहासेन अपृच्छत् ।

वयस्य, त्वं रूपशत्रुभूताया पत्न्या सह प्रेमलीलां कथं करोषि ?।

तदा धूर्तेन माधवेन अभाषि ।

अत्र को विशेषः । तस्मिन्प्रसङ्गे तव रमण्याः स्मरणं करोमि ।

# मकरसङ्क्रमे मधुरवाण्याः कोऽपि हीरहारोपहारः

ले०—श्री. के. एस्. कृष्णमूर्तिशास्त्री महामहोपाध्यायः
पण्डितराजः राजकविः

अव्यादव्याजसौजन्यपर्जन्यो जानकीसखः ।
वत्सां मधुरवाणीं नः पत्रिकाचक्रवर्तिनीम् ॥

अस्ति मम कोऽपि कौतुकातिरेकः । यदियमस्माकं मूर्तेव परिणत-भाग्यपरम्परा वत्साभ्यधिका, सौहार्दसमृद्धा, लोभनीययौवनसौकुमार्यातिशय-स्पृहणीयहृद्यानवद्यसर्वाङ्गसुन्दरी दरीदृश्यमाना मानातिशायिमहिमसमवेता सहृदय-हृदयेन्दीवरवरानन्दसन्दोहैकसन्दोहैकशरच्चन्द्रिका मोहमहान्धकारदूरीकारमिहिरम-यूखमालिका अभिधेयसर्वस्वप्रकाशनरत्नप्रदीपिका मधुरवाणी स्वैरमङ्कूरयन्त्यन्त-र्वाणिगणानामन्तःकरणेषु चिरलीनमानन्दकन्दममन्दरसनिष्यन्दसुन्दरमधुरतरमधु-मयभणननिपुणिम्नेति नाविदितमेतत्सङ्ख्यावतां समस्तानाम् ।

समुपस्थितेऽस्मिन्सन्दर्भे, प्रकृत्या महालसा मदालसेव, लेखिन्यपि मे तपस्विनी लेखभाषापोषैकशेमुषीका, विहीनापि कयाचन वैदुष्या, प्रहृष्यति विशेषतः, प्रभाषितुमशेषसुषमास्पदमिमामधिकृत्य मधुरवाणीम् ।

अन्तःकरणहरणनिपुणिम्नानणीयसा च चरिम्णा किमपि विहरणं मधुर-वाण्याः परमरमणीयं, पुष्पितं फलितं चन्द्रतारकवत्प्रतिमण्डितञ्च सञ्चकास्तु फलेग्रहिणा पण्डितपुण्डरीकाणां स्तोमेन महतीनामाशिषामित्याशीविषसुराजान-मानतः प्रार्थये ।

अपेक्ष्य च विचक्षणानितरानहमेक एव चक्षे स्वक्षः स्पृशन्मधुरवाण्यां पक्षपातातिरेकबहुमान्य इति सगर्वोद्रेकम् । यतोऽहमारूढः स्फुरामि राजकवि-

स्थानादिकं भजामि च निष्प्रत्यूहमभ्युदयपारम्पर्यं सर्वस्याप्यस्य मूलकारणं नियतमियं मधुरवाण्येवेति विभायात्साकं मया कतीनानूचन रहस्यं विदुषामिति दुरपह्नवोऽयं विषयः। अतः कृतज्ञोऽहं न केवलमिमां कलयामि तनयामपि तु पूज्यां जनयित्रीमित्यपि वस्तुतः। स्वस्ति मे भूयात्सौहार्दाय। नैकप्रकारं प्रापितः सत्कारं मधुरवाण्या नास्मिन्नुजन्मनि केवलमपि तु जन्मसहस्रेष्वप्याधमर्ण्यमेतदपोढुं कथं ढौकेय पाण्डितीमिति चिन्तयन्सन्ततं परं ताम्यामि। अयि भो वाचका महाभागाः!

किञ्चिदिव कर्णे कुरुत करुणया, सप्रश्रयां मे विज्ञप्तिं पश्यत परिस्थितिममरभारत्याः।

समुन्मिषन्त्यविशेषमनिमिषभाषामृते भाषा अशेषास्तत्तद्देशीयाः। बलवतीत्वाद्भवितव्यताया देवताद्वैतमापादितापि क्रतुभुजामियं व्याहृतिर्दुर्दास्यमनुभवद्राजकलत्रमिव क्रशिमानमसीमानमनुभवति। हन्त! कालोऽयमननुकूलः सर्वथा पूज्यानां भावानाम्। बिभिमो वयं क्रमेण लुप्येत वेति शङ्कापङ्ककलङ्कितात्मानः शरणीकुर्वाणाः परं धर्मरक्षिणं लक्ष्मीरमणम्।

कुत्र कोणे भिया न्यलीयतास्माकं सनातनो धर्म इति भगवानेव वेदः तत्सममहिमसमुन्नतः। इतोऽपि ज्ञानदुर्भिक्षयोगः कथं सेत्स्यतीति विस्मयामहे। सर्वथा विनाशितमविमृश्यकारिभिरधिकारिभिः कतिभिश्चन विवेकविधुरैर्गौरवमस्मद्भारतमातुरिति कस्याग्रे रुदिमः क्व वा यामो वा इति कर्तव्यतामूढाः स्मः संवृत्ता विपश्चितः। प्राचीनकलाचारात्मिकां चरित्रप्रसिद्धामस्माकं भारतीयां संस्कृतिं लोकोत्तरां कथङ्कारं परित्रायेरन्नास्तिककल्पतामुपगमिता वृथैव स्वातन्त्र्यं समत्वं सहोदरत्वमित्यसकृदाम्रेडयन्त इमे अन्तरेण सर्वश्रेयःसमुद्रैकमूलशिलायमानाममरवाणीमिति नैव प्रतीमः। सत्यमभिदध्महे सहस्रगुणमितः प्रवृद्धमस्फुरदाङ्गिलेयसाम्राज्यमिति प्रेक्षावन्तः कतिचिदाचक्षते। उदासितारः सुतरां श्रुतिमहितस्यास्य संस्कृतस्य राष्ट्रक्षेमविधानैकदीक्षितान्स्वात्मनः

प्रख्यापयन्त्यपत्रपम् । नैव शृण्वन्ति वास्तवलोकक्षेमङ्कराणामधिकारमदेन मान्यतमानां वचनान्यमृतसध्रीचीनानि कैलासनाथकटजु—देशमुख—अणेमुन्सीप्रमुखानां देशभक्तानामिति हंहो ! समूलमुन्मूलितं स्वातन्त्र्यं केनापि सम्पादितं महात्मना परिश्रमभरेणेति खिद्यते साधुलोको भूयस्तराम् । संस्कृतस्य तद्विदुषाञ्च पारतन्त्र्यं कः पुण्यात्मा परिहरिष्यतीति हरिरपि वेद न वा । अर्थप्राधान्यं केवलमवलम्बितमद्यतनैर्भारतपुत्रैरस्माभिः । अखण्डिततण्डुलग्रहणार्थं परिभ्राम्यामो गोणीपाणयः पण्यवीथीषु । तिर्यगविशिष्टाः कथं स्याम विशिष्टाः ? । कालमनादिमारभ्य पृच्छामि वः सम्प्रति सम्प्रतिपन्नानपि नाम दारिद्र्यमियदन्वभावि भारतीयैरिति । क्रियमाणे च विमर्शे नान्यदुत्पश्यामो निदानमृते धर्मप्रहाणेः । हन्त ! देशान्तरेभ्य इव लोकान्तरेभ्योऽप्यशनवसनदिव्यज्ञानानि दिशन्त्यै कति नाम स्पृहयांबभूवुरमर्त्या अप्यवतीर्य सुखमनुबुभूषवो भारतभूम्यै ।

या मर्त्येभ्योऽप्यस्मभ्यमुपासकेभ्यः स्वतादात्म्यापादनेन वितरत्यमर्त्यभावं यामजस्रमुपजीव्यैव सर्वात्मना प्राणितुं प्रभवन्ति भाषान्तराणि ययास्माकं भारतप्रसवित्र्या गौरवं पर्यत्रायत लोकोत्तरं यस्यै स्पृहयन्तितमाममृतान्धसोऽपि यस्याः प्रादुःषन्ति स्म दोषगन्धदुर्विदग्धाः श्रुतिस्मृतीतिहासपुराणोपपुराणादयः सतां ग्रन्थाः सम्मताः यस्या महिमानमसीमानमनीशान एव भवति भणितुं फणीशानः यस्याञ्च व्यश्राम्यन्सविस्तरा धर्मार्थकाममोक्षाख्याश्चत्वारः पुरुषार्थाः पुरुषोत्तमदिव्यचरणसरोजसाम्राज्यवितरणप्रवणास्तस्या एतस्या मातृसहस्रेभ्योऽप्यभ्यधिकाया दिविषद्भाषाया विनङ्क्ष्यदवस्थां समुदीक्ष्यापि वयमुदास्महे ज्ञानेन मानेन च विहीना मृगप्रायतां केवलमयमानाः । इतोऽपि मरणं सामुदायिकमाधुनिकविज्ञानपरिश्रमैकप्रयोजनभूतं कामयामहेऽत्यन्ताय श्रेयस्करमिति ।

अपि नामाङ्ग्लकला स्वाभिवृद्धये प्रचारं कञ्चिदपेक्षते ? । हन्त ! अति हालाहलोऽयं भवति कलिबलकोलाहलः । यदि वयं स्याम सत्यमेकस्य पितुः पुत्राः यद्युत्तमा भारतमातुः सुताः यद्युत्सार्य सुदूरतो मृगभावमिममभिलषामो दिविषदामप्यसुलभं स्थानं यदि सत्सम्प्रदायानुसृतिरताः प्राप्तुमीहामहे परत्रेह च

शर्मणे परिशुद्धतमाः सन्ततीः यद्यसारस्यास्य संसारस्य गरलमहीरुहस्य समूलोन्मूलनमाकलयामः तर्ह्यवश्यमस्माभिः "अनिर्वेदः श्रियो मूलं" "नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छती" त्यादिका रत्नेभ्योऽपि महार्घा अनुसन्दधानैः सूक्तीर्महतामपोह्य प्रत्यूहपरम्पराः समुत्साहशक्तिसम्पन्नैर्जातिमततारतम्यमरम्यमनाकलयमानैः प्रयतितव्यं संस्कृतसंरक्षणलक्षणेऽस्मिन्पुण्यकर्मणीति सुनिपुणं भणामः ।

यद्यप्यत्र जाग्रति नैके प्रकाराः तथापि पत्रिकामुखेन प्रचारः सुकरः प्रतीक्षितलक्ष्यसाधकश्चेति सर्वसम्मतोऽयं पन्थाः । फलमुत्तममुन्नतञ्चैतदुद्दिश्यैव प्रवर्तितः पत्रिकाप्रपञ्चः सर्वोऽपि कल्याणमतिभिर्बहुभिर्गीर्वाणवाणीप्रणयिभिः । अथापि तासां पत्रिकाणां सम्राज्ञी विराराज्यतेऽस्माकमियं मधुरवाणी । अस्याश्च पितृस्थानापन्ना दौर्भाग्यवशात्संस्कृतलोकस्य नामावशेषतां दुर्दैवतविलसितेन नीता अपि कालत्रयेऽपि यशश्शरीरेण वर्तमाना एव चकासत्युत्तमश्लोका बुधश्रीश्रीनिवासाचार्याः ।

तदन्यूनज्ञानसम्पत्समृद्धौ सरससाहितीसुरवल्लरीकल्पभूमीरुहौ शास्त्रैकरत्नाकरौ सुरभारत्याः किङ्करौ समुदग्रप्रेमाणावभिवर्धयन्तौ स्फुरतस्तरामस्माकमिमां मधुरवाणीं श्रीगलगलिरामाचार्यपण्डिताखण्डलपण्ढरीनाथाचार्याविति महानस्ति समाश्वासः । तथा कुसुमसुकुमारपदविन्यासपेशलसदुपन्यासकलनकलाकुशलाः संराजन्ते रसनिष्यन्दबन्धुरगद्यपद्यविरचनचतुराः श्रीमत्क्षमादेवीरावप्रमुखा लेखकलेखर्षभाः सहस्रशः । सन्ति च शतशो धनदमप्यतिशयानाः प्रभवस्तत्र । अर्था बहिश्चराः प्राणा इति भणितिमगणयित्वा परममौदार्यमवलम्ब्य सर्वधर्मावलम्बभूतां संस्कृतवाग्देवतां प्राणेभ्योऽपि गरिष्ठामाकलय्य तत्परिरक्षणाय मधुरवाणीमाद्रियेरन्यादि द्रविणिनस्तर्हि पर्यावर्तेत नियतं कृतयुगमिति द्रढीयानस्माकं सम्प्रत्ययः ।

कुर्वीष्टाभीष्टं विष्टरश्रवास्सन्सर्वान्तर्यामीति प्रार्थयमाना विरमामो विस्तरादिति सकलमनाविलम् ॥

---

# धन्या यशोदा

**( कविकोकिलः मङ्गलवेदी बालाचार्यः )**

कस्मिञ्जन्मनि कीदृशं कृतवती पुण्यं यशोदे कथं
पूजां कुत्र च कीदृशं त्वमकरोर्जप्तं च किं नाम तत् ॥
किं क्षेत्रं गतवत्यथो कतिविधैर्दानैः पवित्रासि यत्
पूर्णं ब्रह्म बिभर्षि दुर्लभतमं क्रोडेन सर्वोत्तमम् ॥ १ ॥

धूल्या धूसरिताङ्गमिन्दुवदनं मन्दस्मितं प्राङ्गणे
दृष्ट्वा क्रोडगतं विधाय मुदिता नन्दाङ्गना चुम्बति ॥
तद्भाग्यं तु यशोदयाऽलमतुलं लेभे न यद्देवकी
का वार्ता पुनरन्यसंसृतिजुषां धन्या यशोदा भुवि ॥ २ ॥

पुन्नागागुरु-चन्द्र-कोलक-लसत्कस्तूरिकामिश्रितं
तैलं मङ्गलमूर्तिमोहनशिशोः संलिप्य साशीर्वचः ॥
गन्धाढ्योष्णजलैः सुवर्णकलशैस्तं स्नापयित्वा मुदा
धूपैर्वासितमातनोति च कचं धन्या यशोदा भुवि ॥ ३ ॥

प्रीत्या केशरगन्धमिश्रतिलकं विन्यस्य भालस्थले
सौवर्णाभरणैः समौक्तिकसरैः स्रक्पुष्पपीताम्बरैः ॥
आपादाम्बुजतः शिखान्तममलं संभूष्य दुग्धामृत—
स्वाद्वन्नं प्रणयेन भोजयति या धन्या यशोदा भुवि ॥ ४ ॥

गोविन्दं वरधेनुपालनपरं वेणुं क्वणन्तं मुदा
कालिन्दीयतटे विहारनिरतं याऽऽहूय वृन्दावने ॥
आलोक्याचललोचनेन रभसाद्बाहू प्रसार्यात्मजं
श्लिष्यन्ती दृढमाशु लालयति सा धन्या यशोदा भुवि ॥ ५ ॥

अम्बाम्बेति वदन् क्षुधार्त इव संपप्रच्छ कृष्णो यदा
वात्सल्याकुलमोदमानमनसा स्तन्यं ददौ ब्रह्मणे ॥
स्तन्यप्राशनकारणेन वितते ब्रह्माण्डमास्ये हरेः
दृष्ट्वा विस्मयविस्मृताक्षिनिमिषा धन्या यशोदा भुवि ॥ ६ ॥

दामाकृष्य दधि श्रमेण परितो भाण्डे मुहुर्मथ्नती
मन्थानेन तदैत्य गव्यममलं बालाय संप्रार्थिने ॥
प्रेम्णा या नवनीतमाशु ददती सानन्दनृत्योत्सवे
मग्नं वीक्ष्य सुतं मृदुस्मितमुखी धन्या यशोदा भुवि ॥ ७ ॥

## श्रीकृष्णस्तवनम् ।

श्रीमद्भारतपारिजातमधुना गीतामृतेनार्जुनं
सन्तर्प्याञ्जनिकासुतध्वजयुतं चारुह्य दिव्यं रथम् ॥
भूभारक्षपणाय भारतरणक्षेत्रं हि यः प्राविशत्
सोऽयं पातु महाप्रभुर्मुररिपुः श्रीपाण्डवानन्ददः ॥

---

# विज्ञवाचकेषु विज्ञप्तिः

षोडशवर्षे परिस्थित्यनाकूल्याद् मधुरवाणी अङ्कत्रयादधिकं प्रकाशयितुं नापारयदिति विषीदति । परं विषादोऽप्यस्याः पुनस्समुत्साहात्मना वाचकसमाश्वासनविश्वासप्रभावात्परिणतो नियतवेलं सप्तदशवर्षे प्रकाशनाय प्रावर्तयदिमाम् । अतः सर्वैः संस्कृतप्रणयिभिरस्याः नियतकालप्रकाशनदृढसंकल्पसफलीकरणाय समनोयोगं प्रयतनीयमिति प्रार्थयामः ।

---

# श्री. प्रा. हुपरीकराणाम् अपूर्वग्रन्थः ।

लेः—हुकेरी श्यामाचार्यः ।

सर्वैः संस्कृताभिमानिभिः करवीरस्थप्राध्यापकश्रीहुपरीकरेषु तेषां संस्कृतानुशीलनविवेकनाम्नः गुरुग्रन्थस्य लेखनप्रकाशनार्थं कृतज्ञताभावः दर्शयितव्यः । प्राचीनभारतीयशास्त्राणि व्याकरणमीमांसान्यायवेदान्तधर्मालङ्कार-साहित्यादीनि गहनभाषाबद्धानि दुरवबोधानीति सामान्यप्रतिपत्तिः । एतेषां शास्त्राणाम् अध्यापनपद्धतिसंशोधनार्थं तेषां प्रक्रियाः विलोडय तासां शैक्षणिक-मानसशास्त्रदृष्ट्या संगतिं विरच्य महान् परिश्रमः कृतः विद्वद्भिः प्राध्यापकवरैः । मानसशास्त्रनिष्ठा अध्यापनपद्धतिः पाश्चात्या, न सा पौर्वेषु दृश्यते इति बहूनामाधुनिकानां मिथ्याभावना । एतां मिथ्याभावनां साधारं सप्रमाणम् उन्मूलयितुं प्रशस्यः प्रयत्नः अत्र कृतः । अभिधालक्षणाव्यञ्जनारसादीनां मूलभूततत्त्वानि मानसशास्त्रदृष्ट्या परीक्षितानि । विशेषतः ध्वनिरसयोश्च गर्भभूतमनःशास्त्रतत्त्वानि विशदीकृतानि । काव्यप्रकाशरसगङ्गाधरादिसाहित्य-ग्रन्थानां विवरणकाराः श्रीकाणे-झा-डे-महाशयाः यद्यपि एतं विषयं व्याख्यातवन्तः तथापि अस्य विषयस्य तौलनिकविचारः मनःशास्त्रनिष्ठः शिक्षणशास्त्रोपयोगी विस्तरेण यथा श्रीहुपरीकरैरत्र कृतः तथा न कृतपूर्वः इति भाति । अस्य कार्यस्य आधुनिकशिक्षणशास्त्रविदः शिक्षणमहाविद्यालये प्राध्यापकपदं भूषितवन्तः श्रीहुपरीकरशास्त्रिणः विशिष्टयोग्यतावन्तः इत्यपि वक्तव्यम् । विविधशास्त्र-मूलतत्त्वावगाहनप्रसङ्गेन विषयविस्तारः प्रवृद्धः इति सत्यम् । तथापि विविधप्राच्यशास्त्राणां मूलतत्त्वानि भारतीयदृष्ट्या आङ्ग्लभाषया प्रकाशं लभन्तीति सन्तोषजनकोऽयं प्रसङ्गः । प्रतिशास्त्रं परिश्रमं कुर्वाणा अत्र स्फूर्तिं सूचनाश्च विन्देरन्निति विश्वासः प्रकटयितुं शक्यः । पुरतोऽध्ययनस्य एष ग्रन्थः नूनं मार्गदर्शको भवेत् ।

अध्यापनपद्धतिमधिकृत्य श्रीहुपरीकराणां परिश्रमफलं सविशेषमभिनन्दनीयम् । त्रिविधान् प्राचीनटीकाग्रन्थानालोड्य दण्डान्वय-खण्डान्वयपद्धती विविच्य तयोर्लक्षणानि विस्तरशो निरूप्य मनःशास्त्राधिष्ठितखण्डान्वयपद्धतिः प्रतीच्यपद्धतेः न मूलतो भिन्ना, अधुनापि महोपकारिणीति निर्णीतम् । पतञ्जलिना व्याकरणमहाभाष्ये, शबरस्वामिना मीमांसासूत्रभाष्ये, प्रयुक्तेयं पद्धतिः अद्योपलब्धभिन्नग्रन्थचतुर्दशटीकासु इतरैरनुसृतेति नामनिर्देशपुरस्सरं दर्शितम् । नामपदानि किं शब्देन, विशेषणानि कीदृशकथंभूतादिशब्दैः, क्रियापदानि किं करोत्यादिप्रश्नैः, क्रियाविशेषणानि कदाकुत्रादिशब्दैः आविष्कर्तुं तदनन्तरं स्पष्टीकर्तुं शक्यानि । तादृशी पद्धतिः खण्डान्वयटीकासु अनुसृता । एतस्या उपयोगः अधुनापि माध्यमिकशालासु महाविद्यालयेष्वपि संस्कृताध्यापने कर्तुं शक्यः इति श्रीहुपरीकरैः सोदाहरणं दर्शितम् । पश्चिमदेशेषु अधुना प्रश्नोत्तरपद्धतिः बहु मन्यते । खण्डान्वयस्य सैव सारभूता । पुनश्च श्रीहुपरीकरैः प्राध्यापका भारतवर्षीयैः आधुनिकैः शास्त्रिभिः पत्रद्वारेण संमन्त्र्य

पदच्छेदोऽन्वयोक्तिश्च समासादिविवेचनम् ।
पदार्थबोधस्तात्पर्यं व्याख्यावयवपञ्चकम् ॥

इति पञ्चावयवव्याख्यानं पुरस्कृत्य तान् पञ्चावयवान् विस्तरशो वर्णितवन्तः । एषः पुस्तकभागः आधुनिकसंस्कृताध्यापनविधौ श्रीहुपरीकराणाम् अपूर्वदानमिति मन्तव्यः । श्रीबोकिलपारसनीसभद्रपुरस्कृता पद्धतिः यद्यपि श्रीहुपरीकरैः सारत्वेन स्वीकृता तथापि तस्याः आवश्यकः विकासः खण्डान्वयपद्धतिविवरणेन संघटितः इति सत्यं वक्तव्यम् । श्रीबोकिलानां गृहमूलं श्रीहुपरीकराणां भित्तिरचनां विना न कदापि पूर्णत्वं प्रतिपद्येत । एषा भित्तिरचना संशोधनपरिश्रमेण विचारसामंजस्येन च संघटिता उच्चशिक्षणेऽपि महोपकारिणी । एतत्कृते महाविद्यालयेषु संस्कृतग्रन्थाः संस्कृतेनैव व्याख्यातव्याः संस्कृतं बोधभाषात्वेन अंशतः प्रयोक्तव्यमिति श्रीहुपरीकरैः विचारसरणिः मण्डिता । अत्र वक्तव्यं भवति ।

संस्कृताध्ययनस्य प्रयोजनं पद्धतिं च विमृशन्तः ग्रन्थकर्तारः यदि धाष्ट्र्येण "महाविद्यालयेषु विशेषतः पदवीवर्गेषु संस्कृतमेव बोधभाषात्वेन प्रयोक्तव्यं येन अन्यभाषाद्वारेण—विशेषतः आङ्ग्लभाषाद्वारेण—संवर्धितं संस्कृताध्ययनस्य अस्वाभाविकत्वं नश्येत्, भारतवर्षस्य पदवीधराः संस्कृतज्ञानिनः स्वविचार-व्यञ्जनक्षमाः संस्कृतबान्धव्यप्रचारकाश्च भवेयुः, शक्तियुता च भाषा ऐक्यपोषका भवेत्" इत्यपि स्पष्टं प्रत्यपादयिष्यन् तर्हि निस्संशयं संस्कृतप्रचारे सुविचारप्रचारे च अधिकं महोपकारं अकरिष्यन् । अनेन मार्गेण संस्कृतोपयोगं कर्तुं समर्थाः शिक्षका अपि माध्यमिकशालार्थमुपलभ्या भवेयुः । एते सर्वे विचारा श्रीहुपरीकरैः यद्यपि स्पष्टतया न प्रतिपादिताः तथापि बहुविधं सूचिताः ।

संक्षेपतो वाच्यं यत् श्रीहुपरीकराणां शब्दतोऽर्थतश्च गुरुग्रन्थः नूनं तेषां गौरवमावहति । नानाशास्त्रगतशैक्षणिकविचारसंग्राहकोऽयम् । मानसशास्त्र-मंथनकारी खण्डान्वयपद्धतिपुरस्कारी संस्कृताध्यापनस्य प्राचीनपद्धतेः अर्वाचीनपाश्चात्यरीत्या संयोगकारी संस्कृताध्यापनस्य सर्वशाखासु नवप्रकाश-प्रसारकोऽयं ग्रन्थः सर्वैः संस्कृतशिक्षकैः ध्यातव्यो मन्तव्यो निदिध्यासितव्यश्च ।

---

# मेघसंदेशसारास्वादिनी

ले०—वे. गोपालाचार्यः एम्. ए.

रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः
प्रत्यासन्नौ कुरवकवृतेर्माधवीमण्डपस्य ।
एकस्सख्यास्तव सह मया वामपादाभिलाषी
काङ्क्षत्यन्यो वदनमदिरां दोहलच्छद्मनाऽस्याः ॥
(मेघः ११)

अस्योद्यानवने कामिभोगसाधनं बहु निवेशितम् । रक्ताशोकवृक्षः चलकिसलयः । 'अधरः किसलयरागः' "यानि स्म रमणीयानि तया सह भवन्ति मे । तान्येवारमणीयानि जायन्ते मे तया विना" इति किष्किन्धाप्रथमे पम्पातीरे सीतावियुक्तरामगीः । कान्तविरहितायाः नायिकायाः इदं सर्वं दुःसहदुःखप्रदम् । "अशोकस्तबकांगारः षट्पदस्वननिःस्वनः । मां हि पल्लवताम्रार्चिर्वसन्ताग्निः प्रधक्ष्यति" । इति च रामगदितं भाव्यम् । माधवीमण्डपः कामिदम्पत्योर्भोगगृहम् । तस्य 'वृतिः' कुरवकमयी तन्मण्डपसमीपे रक्ताशोकः केसरश्च संवर्धितौ । तौ चेदानीं विरहिजनशोकवर्धकौ । उभावपि दोहदाभिलाषिणौ कान्तवत् । 'कान्त' इति पदं उभयोरपि वृक्षयोर्विशेषणम् । कान्तवृक्षस्यैकैकस्यैकैको दोहदः । कान्तस्य मम तु तद्दोहदद्वयमपि । उभाभ्यामपि साहित्यं मम दोहदाऽभिलाषे । 'सह मया' इति चरमपादेष्यन्वेति । मत्कान्तायाः कमनीयता वृक्षचित्तमप्याकर्षति । दोहद इति संकेतमात्रम् । छद्मैव तत् वस्तुतस्तु तयोः शृंगारभाव इव ।

> तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टिः
> मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ।
> तालैः शिंजद्वलयसुभगैर्नर्तितः कान्तया मे
> यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥
> (मेघः १२)

माधवीमण्डपप्रत्यासन्नौ कान्ताप्रियौ वृक्षौ वर्णितौ । कान्तासंवर्धितस्तया प्रदोषसमये नर्तितो नीलकण्ठो वर्ण्यते । नीलकण्ठश्च त्वत्सुहृत् । तन्मध्ये गृहांगणमध्ये वासयष्टिः मयूरस्य निवासभूतो वासदण्डः शिखरप्रोतस्फटिकशिलामयपीठयुक्तः । 'क्षितितलनिखातमूलो वासार्थो दण्डः' इति पूर्णसरस्वती । मूले नववेण्वंकुरसदृशमणिभिर्बद्धा वासयष्टिः । अस्तमनसमये मयूरो वासयष्टि-

मध्यास्ते । मत्कान्तया शिंजद्वलयसुभगैः अव्यक्तमधुरस्वनत्स्वहस्तवलयध्वनिशीतलैः स्वहस्ततालैर्नर्तितः । इदानीं सोऽपि नीलकण्ठः नर्तनभाग्यं न लभते सत्यपि नर्तयित्रीसांनिध्ये ।

एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथाः
द्वारोपान्ते लिखितवपुषौ शंखपद्मौ च दृष्ट्वा ।
क्षामच्छायं भवनमधुना मद्वियोगेन नूनं
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥
( मेघः १३ )

स्वगृहस्य लक्षणानि वर्णितानि । साधो—आनृशंस्यगुणपरवश । हृदयधृतैरेतैरभिज्ञानैः मद्भवनं विशेषतो जानीहि । गृहद्वारोपान्ते शंखपद्मनिधिदेवतारूपे लिखिते । परममंगलरूपाणि लिखितानि सन्ति । तथापि भवनं न शोभते । क्षामच्छायं—कान्तिहीनमेव दृश्येत त्वया । मद्वियुक्तं गृहं नैवशोभां धरेत् । कमलानिवासभूतं मद्भवनं कमलमिव । तस्मिन्नहं सूर्य इव गृहस्वामी । सूर्यासंनिधाने पद्ममिव न स्वशोभां तन्वीत गृहकमलम् । न दिवा वा निशि वा मद्भवनमिदानीं शोभेत ।

गत्वा सद्यः कलभतनुतां शीघ्रसंपातहेतोः
क्रीडाशैले प्रथमकथिते रम्यसानौ निषण्णः ।
अर्हस्यन्तर्भवनपतितां कर्तुमल्पाल्पभासं
खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥
( मेघः १४ )

ग्रन्थारंभे 'वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श' इति क्रीडद्गजौपम्यमनुभूतं यक्षेण । स्वभवनक्रीडाशैले मेघस्य 'कलभतनुतया भासनमुत्प्रेक्ष्यते । शीघ्रपतनाय कलभाकारतया आत्मनो विपरिणामः । कलभवदल्पपरिमाणताप्य-

पेक्ष्यते । 'प्रथमकथिते क्रीडाशैले' इति वर्णनेन मेघस्य साधोः स्वोक्तस्य स्वोक्तक्रमेण तद्धृदये धारणमभिमन्यते सुदूरगतकामोन्मादपारवश्यात् इति द्योत्यते। मेघस्य विद्युदेव दृष्टिर्भवेत्। तद्दृष्टेः गृहान्तरप्रकाशनमपि विद्युद्वासैन साध्यम् । चक्षुः आलोकप्रददीपः उभयमपि विद्युदेव । विद्युता सह मेघस्य शीघ्रसम्पाते विद्युत्सम्पातेन गृहान्तरं तत्रस्थाश्च पीड्येरन् । तन्माभूदिति अल्पाल्पभासा विद्युता दृष्टेरुन्मेषः प्रार्थ्यते । मेघस्य दूतस्य भाषणमपि विद्युत्स्तनितेनैव कर्तव्यं भवति । "विद्युद्गर्भः स्तिमितनयनां त्वत्सनाथे गवाक्षे वक्तुं धीरस्तनितवचनैर्मानिनीं प्रक्रमेथाः" इति वक्ष्यते । अस्ति भूयः कार्यं मेघस्य दूत्यनिर्वहणे । विद्युदुन्मेषः तटित्स्फुरणम् । तदेव चक्षुः कार्यकरं मेघस्य । तटित्स्फुरणं सापायमेव । नयनपीडनं च खद्योतावलीसदृशमन्दद्युतिमात्रं प्रसारणीयम् । न ततोऽधिकम् । "खिन्नविद्युत्कलत्रः" इत्यादौ विद्युतो मेघकलत्रत्वं वर्ण्यते । त्वत्कलत्रमेव त्वद्दृष्टिर्भवेत् मत्प्रियादर्शने तदुज्जीवनकरणव्यापारे च ।

> तन्वी श्यामा शिखरदशना पक्वबिम्बाधरोष्ठी
> मध्ये क्षामा चकितहरिणप्रेक्षणा निम्ननाभिः ।
> श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
> या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः ॥
> ( मेघः १५ )

तन्वी—नातिकृशा, अस्थूला, अनतिकृशा । 'भृशं कृशत्वं' वर्जनीयमिति सामुद्रिकवचनमुदाहृतं पूर्णसरस्वत्या । श्यामा—वर्णतः, श्यामस्त्रीलक्षणतो वा । शिखरदशना—'पक्वदाडिमबीजाभं माणिक्यं शिखरं विदुः" इति हलायुधोक्तं, "श्लक्ष्णैः स्निग्धैः सितैर्दन्तैः शोभनत्वं च गच्छति" इति सामुद्रिकोक्तं चोदाहृतं पूर्णसरस्वत्या । पञ्चवट्याश्रमे त्रिदण्डिच्छद्मधारी रावणः

समाः शिखरिणः स्निग्धाः पाण्डुरा दशनास्तव" इति सीतां प्रति क्ति । 'शिखरिदशना' इति पाठस्तदनुसारी वा । 'पक्वबिम्बाधरोष्ठी'—पक्वदाडिमबीजाभं दशनं पक्वबिम्बाभमधरोष्ठम् । शरीरं तनु, क्षामक्षामम् । मध्यं तनुतमम् । शून्यकल्पम् । चकितहरिणप्रेक्षणा—'केनचित्कारणेन भीताया मृग्यास्तत्कालतरलतरमुग्धस्निग्धासितदीर्घविपुलेक्षणमिव प्रेक्षणं यस्याः' इति पूर्णसरस्वती । तादृशचाकितहरिणप्रेक्षणमस्याः स्वाभाविकं सार्वकालिकम् । निम्ननाभिः गभीरनाभिरन्ध्रा । 'त्रस्तैकहायनकुरंगविलोलदृष्टेः' इति कव्याद्गृहीत-सीतादृष्टिवर्णनमुत्तरचरिते । 'श्रोणीभारादलसगमना'—शरीरस्य तनुत्वेपि गमनमलसम् । तत्र कारणं श्रोणीभारः । पयोधरभारश्च तत्र कारणमिति सूच्यते अनुपदमेव 'स्तोकनम्रा स्तनाभ्यां' इति । 'दुर्वहश्रोणीपयोधरार्ताः' इति कुमारसंभवे अश्वमुखीनां मन्दगतित्वे हेतुरुक्तः । ईषदेव नम्रत्वम् ईषन्नमितांग-यष्टिः । धाता—विश्वस्रष्टा, आदिस्रष्टा । स्त्रीरत्नसृष्टिविधौ सामुद्रिकोक्त-लक्षणानि सर्वाणि चित्ते निवेश्य मातृकां कांचित् मनसा धाता ध्रुवं कल्पित-वान्भवेत् । मत्कान्ताया रूपमेव । सा आद्या धातृबुद्धिकल्पिता स्त्रीरत्नमातृका । देवीस्तोत्रात् "नतनाभि नितम्बखिन्नमध्यादधरे शोणमचाक्षुषं विलग्ने । स्तन-शालि वपुस्तवाम्ब धातुर्महिलासृष्टिषु मातृकायमाणम् ।" इति श्लोकः उदाहृतः पूर्णसरस्वत्या ।

तां जानीथाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठा गुरुषु दिवसेष्वेषु गच्छत्सु बाला
जाता मन्ये शिशिरमथिता पद्मिनीवान्यरूपा ॥
(मेघः १६)

'तां जानीथाः' तामिति प्रियायां निरतिशयप्रीतिबहुमानौ द्योत्येते । 'युवति-विषये सृष्टिराद्येव धातुः' इति खलु तस्यां सर्वोत्तमत्वबुद्धिः । 'तां जानीथाः'

अवश्यं ज्ञेया ईदृशी अपूर्वा सर्वगुणोपेता नारी। 'तमेवैकं जानथ आत्मानं' इति ब्रह्मविषये मुण्डकानुशासनम्। 'परिमितकथा' वाचालत्वमौत्सर्गिकं स्त्रीषु। इयमतिमितभाषिणी। 'जीवितं मे द्वितीयं' न सा मद्भिन्ना व्यक्तिः ऐकात्म्यमेवावयोः। एकस्यैवात्मनो मम जीवितद्वयमस्ति प्रिया चाहं चेति। 'एकं दुःखं सुखं च नौ'। अन्यतरस्य सुखं दुःखं इतरस्यापि तदैव समं भवति। दम्पतीमध्ये एकैकव्यक्तेर्जीवितद्वयमस्ति। कान्तस्य कान्ता द्वितीयं जीवितं, कान्तायाश्च कान्तो द्वितीयं जीवितम्। विधिवशात् विरहे समुत्पन्ने द्वितीयजीविते असंनिहितेऽपि स्वस्य मुहूर्तमपि प्राणनसंभवः। 'अस्या देव्या मनस्तस्मिन् तस्य चास्यां प्रतिष्ठितम्। तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति॥" इति सीतादर्शने लब्धे सुन्दरपञ्चदशे हनूमदुक्तं स्मर्तव्यं। 'त्वं जीवितं त्वमसि मे हृदयं द्वितीयं' इत्युत्तरचरितरामवचोनुवादकवासन्तीवचनं च। 'दूरीभूते मयि सहचरे' सहधर्मचारिणौ दम्पती। सहकामचराविमौ कामुकदम्पती। धर्मस्थाने कामः अभिषिक्तः। 'घोरशापवशात् सुदूरं प्रेषिते मयि'। अभूततद्भावे च्विः। अभूतचरोयं प्रथमविरहः। 'चक्रवाकीमिवैकां' प्रियाविरहितोऽयं स्थाने रामाद्वियोजितां सीतां, आदिकवेरच्छोकवर्णनं च स्मरति, सुन्दरवर्णनमनुसरति'। 'रामायणरसायनपरायणेन च कवीन्द्रेण तदर्थचमत्कारतत्परतया तदर्थच्छायायोनिरर्थोऽस्मिन्पद्ये निवेशितः' इत्यत्र पूर्णसरस्वतीव्याख्योक्तं भाव्यम्। 'हिमहतनलिनीव नष्टशोभाव्यसनपरंपरया निपीड्यमाना सहचररहितेव चक्रवाकी जनकसुता कृपणां दशां प्रपन्ना' इति हनुमन्मुखारविन्दनिर्गलितश्लोकस्य सुसदृशोऽयं श्लोकः। 'चक्रवाकी' एकरात्रिविरहं न सहते। सीतायाः एकः संवत्सरः कृत्स्नोपि रात्रिरेवाभवत् "दूरीभावात्। जनकदुहितृदूयमानान्तरात्मा" इति हंसारंभे द्वितीयश्लोके एतच्छ्लोकवर्णनं हनूमद्वर्णनं च मिलित्वा सहचरितचक्रवाकवत् रामस्य दूयमानत्वं वर्णितम्। एकां–द्वितीयरहिताम् तत एव अद्वितीयां शोके। द्वितीयजीवितरहिता एका। गाढोत्कण्ठां

गुरुषु दिवसेष्वेषु 'यथा प्रोषितनाथा पतिं प्रति निरन्तरं सोत्कण्ठा' इति ध्यानाच्च' इति भगवद्विश्लेषस्य दुःसहतया तत्संश्लेषानुग्रहलाभाय प्रियतमभक्तस्य ध्यानयोगो वर्णितः श्रीशंकरभगवत्पादैः । 'दिवसेषु' चक्रवाक्याः रात्रिर्गुर्वी । प्रियायाः दिवसा अपि गुरवः । न दिवारात्रिभेदोऽस्या विरहस्य । 'दिवसेषु गच्छत्सु' सोत्कण्ठं दिवसगणनातत्परेयम् । दिवसेषु गच्छत्सु उत्कण्ठा गुरु गुरु वर्धते । 'बाला' 'वयोऽस्या ह्यतिवर्तते' इति युद्धकाण्डारंभे सागर-दक्षिणतीरे रामानुशोचनं भाव्यम् । 'पद्मिनी' इत्युत्तमस्त्रीजातित्वमपि । 'वर्षाकी-र्णामिव कमलिनीं' इति हंसे वर्णनम् 'मन्ये' इत्यस्य नायकस्य दूरादुत्प्रेक्षा । हनुमांस्तु सीताशोकप्रत्यक्षदर्शी मेघो दूतस्तद्वत् प्रत्यक्षदर्शी भवेदित्याशयः ।' प्रत्यक्षं ते निखिलमचिरात् भ्रातरुक्तं मया यत् " इति वक्ष्यते ॥

नूनं तस्याः प्रबलरुदितोच्छूननेत्रं प्रियायाः<br>
निश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम् ।<br>
हस्तन्यस्तं मुखमसकलव्यक्ति लम्बालकत्वात्<br>
इन्दोर्दैन्यं त्वदनुसरणक्लिष्टकान्तेर्बिभर्ति ॥

( मेघः १७ )

'शफरनयना' इति नेत्रस्य स्वाभाविकी चारुता वर्णिता । इदानीं नेत्रं त्वद्वीक्षणसमये प्रबलरुदितैरुच्छूनं स्यात् । 'बाला' इति सा वर्णिता । 'बालानां रुदितं बलं' इत्याभाणकः कविबुद्धिमायादिव । 'प्रबलरुदितं' इति सद्यः पदविन्यासः कृतः । 'पक्वबिम्बाधरोष्ठी' इत्यधरोष्ठवर्णो वर्णितः । तच्च स्वाभाविकम् । इदानीं 'निश्वसन्तीं पुनः पुनः' 'निश्वासबहुलां' इति सुन्दरकाण्डवर्णितवत् दीर्घैरु-ष्णैश्च निश्वासैः भिन्नः अधरवर्णः । 'निश्वासेनाधरकिसलयक्लेशिना' इत्युत्तरत्र गास्यते । किसलयरागेऽधरे निरतिशयो रागः कान्तस्य ।

'रतिसर्वस्वमधरम्' । ईषत्तापेनापि क्लिश्येत् किसलयस्य रागः । 'तस्याः' इति तस्याः नेत्रान्तरयोः पूर्वदशा सूच्यते । निश्वासेन अधरोष्ठं भिन्नवर्णम् । अधरोष्ठस्वरूपं च निश्वासोष्मणा बहुधा भिन्नः । 'हस्तन्यस्तं मुखं' चिन्ताभारेण अधःपिपतिषन्मुखं पतनापायात् रक्षणार्थं हस्ते न्यस्तं मुखं न संपूर्णं दर्शनीयतां भजते । मुखलम्बायमानालकावृतत्वात् । 'अव्यक्तलेखामिव चन्द्रलेखां' इत्यादिकविवर्णनं स्मार्यते । व्यक्तिः प्रकाशमानता । चन्द्रप्रकाश इव स्वकान्तायाः मुखस्य प्रकाशो लोकस्य प्रेक्षणीयः इति तत्र स्वगौरवं व्यज्यते व्यक्तिशब्देन । 'एतां चन्द्रकलां लोकः केन भावेन पश्यति' इति दुष्यन्तस्य शकुन्तलाविषय इव । दैन्यं शोच्यता । शोभाविकलता । त्वदावृतेन्दोर्दैन्यं भवति । अलकस्थाने मेघः आवारकः । 'त्वत्' इति तत्स्वजातीयमेघग्रहणम् । मन्नायिकामुखं चन्द्रबिम्बं त्वदागमने त्वत्समानमेव निरतिशयं शोभां बिभृयात् ।

---

# वादीभसिंहः

( लेखकः—**श्रीयुत पं. के. भुजबलीशास्त्री,** विद्याभूषणम् )

श्रीवादीभसिंहो नामाचार्यो लोकविश्रुतजैनमहाकविष्वन्यतमः । तस्य वादीभसिंह—अजितसेन—ओडेयदेवेति नामत्रयमुपलभ्यते यत्र क्वचित् । एषु ओडेयदेवेति जन्मनामाजितसेनेति दीक्षानाम वादीभसिंहेति च पाण्डित्योपार्जितोपाधिमात्रमिति वयं प्रतीमः । असौ चाचार्यस्तृतीयनाम्नैव महतीं ख्यातिमलभतेत्यपि मन्यामहे । एतेन चोपाधिनास्य प्रतिवादित्वं सम्यक्

क्ष्यति । श्रवणबेल्गोलस्थ—मल्लिषेणप्रशस्त्या चैतदेव प्रतीयते[1] । अष्टसहस्त्र्याः टिप्पणकारेण श्रीलघुसमन्तभद्रेणापि तस्या मङ्गलाचरणटिप्पणे "तदेवं महाभागैः तार्किकार्कैरुपज्ञातां श्रीमता वादीभसिंहेन उपलालितामाप्तमीमांसामलंचिकीर्षवः ........प्रतिज्ञाश्लोकमाहुः श्रीवर्द्धमानमित्यादि" इति लिखितम् । एतेन श्रीसमन्तभद्रकृताप्तमीमांसायाः वादीभसिंहकृता कापि टीकाप्यासीदिति समनुमितुमः । स्वतन्त्रन्यायग्रन्थस्य स्याद्वादसिद्धेरयमेव रचयिता । अयञ्च वादीभसिंहः पुष्पसेनमुनीनां शिष्य आसीदिति तद्विरचित—गद्यचिन्तामणि—ग्रन्थात् प्रमाणीभवति[2] ।

यद्यपि सम्प्रति वादीभसिंहस्य जन्मस्थानमज्ञातमेव । तथापि ओडेयदेवेति नाम्ना मद्रासप्रान्तान्तर्गततमिलप्रदेशस्थ—पोन्नूरु—मण्डलस्य तिरुमलै इत्यभिधप्राचीनक्षेत्रे वर्तमानेन समाधिस्थानेन, द्राविडसंघेन, अरुंगलान्वयेन चायं वादीभसिंहः तमिलप्रान्तीयो भवेदित्यनुमीयते । वर्तमानमद्रासप्रान्तान्तर्गततमिलप्रदेशोऽतिप्राचीनकाले 'द्राविड' नाम्ना विख्यात आसीदित्यत्र संदेहलेशोऽपि नास्ति । अत एवैतत्प्रान्तसम्बन्धेनैव वादीभसिंहस्य संघः द्राविडसंघ नाम्ना विश्रुतो जातः । यतः जैना अजैनाश्च सर्वे एव पुरातत्त्वविशारदाः प्रकटयन्त्येतत् यत् दिगम्बरजैनमुनिसम्बद्धेषु संघगणशाखादिशब्देष्वनेके स्थानद्योतका एवेति । यथा—माथुरसंघ—पुन्नाटसंघ—नविलूरुसंघ—कित्तूरुसंघ—कोलत्तूरुसंघ—देशीयगण—काणूरुगण—हनसोगेशाखाप्रभृतिशब्दाः । यद्यपि मद्रासप्रान्ते तमिलकन्नडतेलुगुतुलुमलयालमिति पञ्चापि भाषाः द्राविडभाषा-

---

१—सकलभुवनपालानम्रमूर्धावबद्धस्फुरितमुकुटचूडालीढपादारविन्दः । मदवदखिलवादीभेन्द्रकुम्भप्रभेदी गणभृदजितसेनो भाति वादीभसिंहः ॥

२—श्रीपुष्पसेनमुनिनाथ इति प्रतीतो दिव्यो मनुर्हृदि सदा मम सन्निदध्यात् । यच्छक्तितः प्रकृतिमूढमतिर्जनोऽपि वादीभसिंहमुनिपुङ्गवतामुपैति ॥

जातावेवान्तर्भवन्ति । तथापि तमिलभाषा एव द्राविडभाषेति ख्यातिरद्यापि प्रचरति । सम्प्रति अरुंगलान्वयमुद्दिश्य किञ्चित् वच्मः । एतेनापि तमिलप्रान्तस्य गुडियपत्तनमण्डलान्तर्गतारुंगलाख्यं स्थानं प्रति ध्यानमाकृष्यतेऽस्माकम् । इदञ्चाति-प्राचीनं बहुप्रख्यातञ्च स्थानम् । श्रूयतेऽद्यापि जैनाः जैनमन्दिराणि चात्र विद्यन्ते । यद्यपि संघगणगच्छान्वयादयः सर्वेऽपि शब्दा एकार्थवाचका एव । अत एव मुनिसंघमुद्दिश्येमे सर्वेऽपि यत्र-तत्र व्यवहृता दरीदृश्यन्ते । तथापि प्रायः संघभेदार्थको गणशब्दः, संघोपभेदार्थकश्च गच्छेति प्रणाली संवहति । यथा— 'नन्दिसंघे बलात्कारगणे सरस्वति गच्छे कुन्दकुन्दान्वये' इति । बहुषु स्थलेषु संघोऽपि गण उच्यते स्म । यथा—नन्दिगणः, सेनगणः, द्रमिलगणो वा द्राविडगण इत्यादयः । अस्तु विषयान्तरमेतत् । मुनिसंघानामिति वृत्तमिदानीं यावदन्धकारावृतामिव प्रायः । तेनास्मिन् विषयेऽस्माकं परिज्ञानमपि सीमितमेव । तथाप्यत्रावश्यमेव वक्तव्यं यत् द्राविडसंघः नन्दिसंघस्यैव भेदः[3] । अत एव श्रवणबेल्गोलस्थ मल्लिषेणप्रशस्त्यादिषु कुन्दकुन्द—समन्तभद्र-सिंहनन्दि—वक्रग्रीव—श्रीवर्द्धदेव—पात्रकेसरी—अकलङ्कदेवादिपरमाचार्याणां द्राविडसंघपरम्परायां परिगणनं संगच्छते ।

भवत्यत्रैकः सन्देहः । तथाहि नीतिसारकर्त्रा यापनीयद्राविडसंघौ पञ्चसु जैनाभासेषु परिगणितौ[4] ।

---

३—श्रीमद्द्रमिलसंघेऽस्मिन्नन्दिसंघेऽस्त्यरुंगलः ।
अन्वयो भाति योऽशेषशास्त्रवाराशिपारगः ॥
—नगरताल्लुकस्यशिलालेखः सं. ३८ ।

४—गोपुच्छिकः श्वेतवासा द्राविडो यापनीयकः ।
निःपिच्छश्चेति पञ्चैते जैनाभासाः प्रकीर्त्तिताः ॥
—नीतिसारे ।

अत्र विषये श्रीनाथूरामजी प्रेमिमहोदयानामिदं कथनम् "वर्तमान-भट्टारकाः स्वान् नन्दिसंघ-बलात्कारगण-कुन्दकुन्दाचार्यान्वयभुक्ता इति ब्रुवन्ति । तथापि यथा वयं तान् शिथिलाचारिणः भ्रष्टान् जैनाभासान् वा ब्रूमः तथैव दर्शनसारकर्त्ता देवसेनः द्राविडसंघीययापनीयसंघीयमुनीनामाचारदर्शनात् तान् जैनभासा इति वक्तुं शक्नुयात् । यतो हि ते भट्टारका इव प्रायः मठेषु मन्दिरेषु च निवसन्ति स्म, राजसभासु च प्राविशन्, स्वीयमठसम्बद्धसम्पदामपि प्रबन्धम-कुर्वन् । अर्थात् तिलतुषमात्रपरिग्रहाग्रहणात् भ्रष्टतां गता उचिताचारात्" सर्वमेतत् स्पष्टीकृतं प्रेममहोदयेन "बनवासियों और चैत्यनिवासियोंकेसम्प्रदाय" शीर्षकलेखे विस्तरेण । अस्तु, उपर्युक्तविचारप्रपञ्चेनेदं प्रतीमः यत् वादीभसिंहः तमिलप्रदेश एव जन्म लेभे । किन्तु मैसूरप्रान्तेऽयं निजं बहुकालमयापयदिति सत्यमेव । यतः मैसूरप्रान्तान्तर्गत—पोम्बुच्च—स्थानमेवास्य प्रचारक्षेत्रमासीदिति । अत्र च प्रमाणभूताः तत्रत्याः शिलालेखा एव ।

एष वादीभसिंहः नृपसम्मानितः कविरासीदिति मल्लिषेणप्रशस्त्या स्वरचित—गद्यचिन्तामणि—ग्रन्थेन च सिद्धयति[५] । महामन्त्रिदण्डाधीशप्रभृतयोऽ पुच्चपदाधिकारिणस्तस्यानन्यभक्ता आसन् । विशेषेण विक्रमसार—त्रिभुवनमल्लादि पोम्बुचस्थानस्य तत्कालीनसान्तरवंशशासकाः, विष्णुवर्द्धनस्य महामन्त्री माधवः, सामन्तः परमादिः, श्रेष्ठी जविकश्चेति सर्वे वादीभसिंहस्यैकान्ताशिष्या आसन्[६] ।

जैनसिद्धान्तमहामर्मज्ञोऽयं वादीभसिंहः । छन्दोऽलंकारकाव्यकोश-व्याकरणतर्कादिषु च पारंगत आसीत् । यद्यप्यस्य सम्प्रति संस्कृतभारती-

---

१—श्रीमद्वादीभसिंहेन गद्यचिन्तामणिः कृतः ।
स्थेयादोडेयदेवेन चिरादास्थानभूषणः ॥

—गद्यचिंतामणिः ।

६—एतदर्थं जैनसिद्धान्तभास्करोऽवलोकनीयः भाग ६, पृष्ठ ८०—८१ ।

निबद्धकृतय एवोपलभ्यन्ते तथापि कन्नड—तमिलप्रभृति लोकभाषास्वपि निपुणो भवेदिति प्रत्येतुं शक्नुमः । नायं कविरेव शिरोमणिः, किन्तु महान् वाग्मी अप्रतिभटो वादी चाभवत् । अत्र च विद्वन्मण्डलोद्घोषिते वादित्वप्रत्यायके वादीभसिंहेत्युपाधौ सत्त्वे नान्यत्प्रमाणमपेक्ष्यते । 'कोप्प' स्थानस्यैकस्मिन् शिलालेखे 'जैनागमतोयनिधिवृद्धिकरकलाधरे'ति विशेषणेनायं विशेषितो वर्तते। इत्थं 'वोगादि' स्थानस्य शिलालेखेऽयं 'महान्योगी' कथितः । एतेनायं निष्कर्षो भवति यदयं वादीभसिंहः महान् योगी, त्यागी, तपस्वी, वादी, वाग्मी, कविः, तत्त्वज्ञानी चासीत् ।

सामान्यश्रावकादारभ्यानेके राजानः बहवश्च राजकर्मचारिणस्तत्र भवतो भक्ता आसन् इति तु पूर्वमेवोल्लिखितम् । श्रवणबेलगोलस्थानस्य मल्लिषेण-प्रशस्त्यामपि द्वयोरस्य शिष्ययोर्नामनी लिखिते वर्तेते । शान्तिनाथः पद्मनाभश्चेति । अनयोः प्रथमस्योपाधिरस्ति 'कविताकान्तः' द्वितीयस्य च 'वादिकोलाहलः' इति । उल्लिखितोऽयं लेखः एतस्यैकस्य विदुषः शिष्यस्य मल्लिषेण—मलधारिदेवस्य समाधिमरणसूचको विद्यते । अयं विद्वन्मण्डले च 'मल्लिषेण—प्रशस्ति' नाम्ना प्रख्यायते । अस्मिंश्च लेखे न केवलं मल्लिषेणस्यैव, किन्तु तस्य गुरुपरम्पराया अपि प्रशस्तिभाग उपलभ्यते । पोम्बुच्चस्थानस्य ३७ संख्याके ११४७ खृस्ताब्दीये एकस्मिन् स्तम्भलेखे वादीभसिंहस्यैकस्याः शिष्याया नाम पम्पादेवीत्युपलभ्यते । इयं हि तैलसान्तरस्य पुत्री विक्रमसान्तरस्य भगिन्यासीत् । पम्पादेवी च महापुराणस्य मर्म सम्यक् जानाति स्म । एतेन वादीभसिंहः न केवलं सान्तरराजानामेव, किन्तु अन्तःपुरस्यापि शिक्षणाचार्यो भवेदिति सिद्ध्यति ।

---

७—एतदर्थं जैनसिद्धान्तभास्करोऽवलोकनीयः भाग ६, पृष्ठ ८०–८१।

८—अवलोकनीयः ५४ (६७) संख्याको लेखः ।

अथेदानीं वादीभसिंहस्य कालो विचार्यते। एष हि दशमशताब्द्यां विद्यमानो भवेदिति श्रीयुत टी. एस्. कुप्पुस्वामिशास्त्रि, प्रोफेसर एस्. श्रीकण्ठ-शास्त्रि, श्रीयुतनाथूरामप्रेमि-महोदयाः स्वीकुर्वन्ति । 'संस्कृत साहित्य का संक्षिप्त इतिहास' नामकग्रन्थस्य लेखकौ च तदेव मन्येते। अत्र तैः प्रमाण-द्वयमुपस्थाप्यते—

(१) भोजराजसमकालिकस्य कालिदासस्य 'अद्य धारा निराधारा निरालम्बा सरस्वती' इति वचनं 'अद्य निराधारा धरा निरालम्बा सरस्वती' इति वादीभसिंहस्य वचनसदृशमेव। तेन वादीभसिंहः भोजराजात् पूर्वकालीन एव अर्थात् दशमशताब्द्यामेव भवेदिति।

(२) यशस्तिलकचम्पूकाव्यस्य २तीयोच्छ्वासे १२६ संख्याकश्लोक-व्याख्यावसरे व्याख्याकारेण श्रुतसागरसूरिणा महाकविवादिराजस्यैकः श्लोक उद्धृतः। तत्रैव च लिखितं यत् वादिराजोऽपि सोमदेवाचार्यस्य शिष्य आसीत्। एवं 'वादीभसिंहोऽपि मदीयाशिष्यः श्रीवादिराजोऽपि मदीयः शिष्यः' इति सोमदेवाचार्यस्य पद्यमुद्धृत्य वादीभसिंहवादिराजयोः परस्परं सहपाठितां सोमदेवाचार्यस्य च तयोः शिष्यत्वमज्ञापयत्। सोमदेवस्य यशस्तिलकचम्पूकाव्यं ८८१ शकाब्दे (सन् ८५८) समाप्तिमगात्। वादिराजस्य पार्श्वनाथचरित्रं च ८४७ शकाब्दे (सन् १०२५) पूर्णतां गतम्। अतः वादीभसिंहस्य कालः दशमशताब्द्यामेवान्तर्गच्छतीति। परमेतत्सत्यं यदुल्लिखितविद्वत्सु कश्चित् द्वे एव प्रमाणे समुद्धृतवान्, कश्चिच्चैकमेवेति ज्ञातव्यम्। किंतु तत्र प्रथम-प्रमाणं नास्मभ्यं रोचते। अतः कदाचित् वादीभसिंह एव कालिदासवाक्य-मन्वकरोदित्यपि सम्भाव्यते, द्वितीयप्रमाणमुद्दिश्य श्रीयुत पण्डितकैलासचन्द्रस्येयं सम्मतिः—"यावदुक्तोल्लेखस्य स्थलप्रतीकादीनां पूर्णं विवरणं नोपलभ्यते, अन्यैश्च स्थलैर्वा समर्थनं यावन्न भवेत् तावत् प्रमाणकोटौ तं नोपस्थापयितुं

शक्नुमः । यतः उभयोः लेखकयोरन्यतरेणापि सोमदेवसम्बन्धे न किञ्चिल्लिखितम् । किं च न्यायविनिश्चयालङ्कारस्यान्ते प्रशस्तिभागे वादिराजः मतिसागरनामानं स्वं गुरुं स्वीकरोति वादीभसिंहस्य पुष्पसेनं स्मरति । अतः समुपलब्धप्रमाणैरकलङ्कदेवस्य सतीर्थः पुष्पसेन एव वादीभसिंहस्य गुरुरित्यनुमिनुमः । एवं सति तस्य कालस्तु खृस्तसप्तमशताब्द्या उत्तरार्ध एव प्रमाणीभवति" । सोमदेवस्य गुरुत्वे पण्डितकैलासचन्द्रमहोदयस्याशङ्का न निर्मूला, प्रत्युतोचितैव । किन्तु भवत्कथनानुसारेण वादीभसिंहोऽकलङ्कदेवसतीर्थस्य खृस्ताब्दसप्तमशतकविद्यमानपुष्पसेनस्य शिष्यो न कथमपि सिद्धो भवति, यतोऽस्मिन् कालनिर्णय-समर्थनपक्षे शास्त्रिमहोदयप्रदत्तप्रमाणान्यतिनिर्बलानि सन्ति । 'भास्करस्य' षष्ठभागे द्वितीयकिरणे 'किं वादीभसिंहोऽकलङ्कदेवस्य समकालीनः ?' इति शीर्षकलेखे विषयोऽयं मया सम्यक् प्रकाशितः । अत्र पुनरावृत्तिः पिष्ट–पेषणमिव प्रतिभाति । अधुनेत्थं विचार्यते यदुपर्युक्तविदुषां लेखैर्निर्धारितोऽयं वादीभसिंहः दशमशताब्द्यामासीन्नवेति । स्वर्गीयस्य आर. नरसिंहाचार्यस्येदं मतमस्ति यत् नगरस्य ४० संख्याकेन ३७ संख्याकेन च शिलालेखेन वादीभसिंहस्य समयः ११ शताब्द्या उत्तरार्धे १२ शताब्द्याः पूर्वार्धे वाऽनुमितो भवति[९] । मयापि भास्करस्य षष्ठभागे द्वितीयकिरणे प्रकाशिते 'किं वादीभसिंहोऽकलङ्कदेवस्य समकालीनः ?' इति शीर्षकलेखे 'मद्रास व मैसूरप्रान्त के प्राचीन स्मारक' इति संग्रहात् अजितसेनविषयकाः वादीभसिंहसम्बद्धा वा दशलेखाः समुद्धृताः । तेषु प्रथमः १०७७ खृस्तवत्सरस्य सर्वान्तिमश्च ११७० खृस्ताब्दस्यास्ति । सर्वेषु चैतेषु वादीभसिंहः 'अजितसेनपंडितदेव' 'वादीभसिंह–अजितसेन' 'अजितसेन–मुनिपति' 'अजितसेन भट्टारक' 'मुनि–अजितसेनदेव–आचार्य' प्रभृति नामभिः यत्र तत्रोद्घोषितो

९—अवलोकनीया न्यायकुमुदचन्द्रप्रस्तावना पृष्ठ ११२.

१०—अवलोकनीयः 'जैनसिद्धान्तभास्करः' भाग २, पृष्ठ १५३ ।

विद्यते । तथापि सर्वाण्यप्येतानि नामानि वादीभसिंहवाचकान्येवेत्यत्र न किमपि बाधकप्रमाणं दृष्टिपथमायाति । शिलालेखानां लेखनक्रमेणापीदमेव सिद्धं भवति ।

उपरि लिखितेषु शिलालेखेषु १०७७ खृस्ताब्दीय प्रथमलेखेन तु तस्मिन् काले पोम्बुच्चस्थानेऽजितसेनस्य वादीभसिंहस्य वा विद्यमानता स्पष्टतः प्रमाणीभवति । यतस्तस्मिन् 'पंचकूटजिनमन्दिराय विक्रमसान्तरदेवेनाजितसेन-पण्डितदेवानां चरणौ प्रक्षाल्य भूमिः प्रदत्ता' इति स्पष्टमेवोल्लिखितमस्ति । वादीभसिंहस्य शिष्या पूर्वोक्ता पम्पादेवी अस्यैव विक्रमसान्तरस्य भगिनी भवति स्म । ११४७ खृस्ताब्दीये ३८ संख्याके पोम्बुच्चस्थानीयस्तम्भलेखे 'इयम-जितसेनपण्डितदेवस्य वादीभसिंहस्य वा शिष्या श्राविकाऽऽसीत्' । इत्येवं प्रकारेणाङ्कितमस्ति । १०९० खृस्ताब्दस्य द्वितीयलेखे तु लिखितं वर्तते यत् 'स्मारकोऽयं स्वगुरूणां वादीभसिंहाजितसेनानां स्मृतिरक्षार्थं सान्तर-वंशोद्भवेन महाराजमारेण स्थापितः' इति । अग्रे च नैवं विधः कोऽपि लेखः स्मारको वोपलभ्यते येन वादीभसिंहस्योपस्थितिः प्रमाणीभवेदिति । अत इदमपि सम्भवितुमर्हति यत् केचित् १०८० खृस्ताब्दं यावत् वादीभसिंहस्य जीवन-कालमर्यादां स्वीकृत्य, तदर्वाचीनलेखान् तत्रभवतो स्मृतिलेखानेव मन्येरन् । किन्तु जीवनकालेऽपि भक्तः स्वपूज्यानां स्मारकं निर्मापयतीति न लोकविरुद्धम् । प्रत्युत साम्प्रतमपि दृग्गोचरीभवन्ति बहुधा स्मारकाः । नैतेन वयमेतत्सिद्धयितुं प्रयतामहे यत् वादीभसिंहनामघटिताः सर्वेऽपि स्मारकाः तज्जीवनकालीना एवेति । किन्तु १०७७ खृस्ताब्दीयो लेखो यदि वस्तुतः वादीभसिंहस्योप-स्थितिकालीन एव तदा वादीभसिंहः ११ शताब्द्या उत्तरार्धे आसीदिति स्वीकर्त्तव्यमेवेत्यस्माकमभिप्रायः । एवं १३१ संख्याके (सन् १११७) हासनमण्डलान्तर्गतमुगुल्लूरुग्रामसमुपलब्धे लेखे ४९२ संख्याके (सन् ११२९) श्रवणबेलगोलस्थानोपलब्धे च लेखे प्रतिपादितः पुष्पसेन एव वादीभसिंहस्य गुरुर्भवेदिति ज्ञातुं शक्यते ।

अस्मिन् विषये प्रोफेसर एस्. श्रीकण्ठशास्त्रिमहोदयो वदति "यत् १०३९ खृस्ताब्दे चालुक्यजयसिंहजगदेकमल्लेन वादिरुद्रगणाय प्रदत्ते दान-सूचके बेलगांवस्थदानपत्रे स्पष्टमेतदङ्कितं यत् वादिरुद्रगणो महान् वाग्म्यासीत्। तेन च वादेऽकलंकदेववादिघरट्ट (?)—वादीभसिंह—वादिराजादिविद्वांसः पराजिताः। अतो वादीभसिंहस्य कालः ११ शताब्द्या उत्तरार्धे न भवितुमर्हति"। सम्प्रति तद्दानपत्रन्नास्माकं समक्षे; तथापि यदुल्लिखितदानपत्रे प्रतिपादितोऽयं विषयः स्वीक्रियेत, तदाप्युक्तसमयनिर्णये न कोऽपि विरोधः दरीदृश्यते। यतः १०३९ खृस्ताब्दात् १०७७ खृस्ताब्दे नाधिकं कालभेदो भवति। अस्माकं चेतसि तु दानपत्रविषय एवाशङ्का। सा चेत्थम्-यमकलंकं वादिरुद्रगणः पराजयते, स भट्टाकलंको न भवितुं शक्नोति; यतोऽकलंकदेवस्य समयः सप्तमशताब्दी तदुत्तरकालं वा सर्वैः स्वीक्रियते। वादीभसिंहवादिराजसमकालीनस्यापरस्याकलंकस्य तु ज्ञानमिदानीं यावन्न लब्धम्।

इत्थं वादीभसिंहस्य कालनिर्णयविषये यावदुपलब्धसामग्रीः समुपस्थाप्य तन्निष्कर्षनिर्णयाय विज्ञपाठका एव प्रार्थ्यन्ते। अत्रायमवशेषः भास्करस्य द्वितीयभागस्य द्वितीयकिरणे, षष्ठभागस्य द्वितीयकिरणे च मया लिखितं यत् वादीभसिंहकृतक्षत्रचूडामणिग्रन्थस्यान्ते 'राजतां राजराजोऽयं राजराजो महोदयैः। तेजसा वयसा शूरः क्षत्रचूडामणिर्गुणैः' श्लोकोऽयमस्तीति। अस्माकं नये पद्यगतो राजराजशब्दः श्लिष्टोऽस्ति। अस्मिंश्च चरितनायकेन जीवंधरेण सहैव तत्कालीनशासकस्य राजराजस्यापि ग्रन्थकर्त्रा स्मरणं कृतम्। चोलवंशीयोऽयं राजराजः भवितुमर्हति। वंशेऽस्मिन् राजराजाभिधौ द्वौ राजानावास्ताम्। प्रथमस्य समयः ९८९ खृस्ताब्दात् १०१२ खृस्ताब्दं यावदासीत्, द्वितीयस्य च ११४६ खृस्ताब्दात् ११७८ खृस्ताब्दं यावदभवत्। एवमिदं सम्भाव्यते यत् वादीभसिंहोऽन्तिमावस्थायां मैसूरस्थानात् स्वजन्म-

भूमिं परावृत्य चोलशासकस्य राजराजस्य राज्यान्तर्गत एव कुत्रचित् स्थाने स्थित्वा क्षत्रचूडामणिग्रन्थं रचितवान्, ग्रन्थान्ते च तत्कालीनं तत्प्रान्तवर्तिशासकं स्मृतवानिति इदमस्माकमनुमानं स्वर्गीयेण आर. नरसिंहाचार्येण श्रीयुतेन प्रो. एस्. श्रीकण्ठशास्त्रिणा च समर्थितम्। किन्तु पूर्वोक्तस्वनिर्णीतसमयमनुसृत्य प्रथमपुरातत्त्वविशारदो वादीभसिंहं द्वितीयराजराजस्य समकालीनममन्यत। द्वितीयविशारदश्च प्रथमराजराजस्य समकालीनं वादीभसिंहं स्वीकरोति। द्वितीयराजराजापेक्षया प्रथम एव बहुप्रसिद्ध आसीदिति शास्त्रिमहोदयस्य तर्कः। परन्नायं सबलः, यतः ग्रन्थकर्त्तुः प्रसिद्धस्याप्रसिद्धस्य वा तत्कालीनशासकस्य स्मरणमात्र एव तात्पर्यम्।

सम्प्रति विषयमिममुपसंहृत्य वादीभसिंहस्य रचनाविषये किञ्चिद् वच्मः। वादीभसिंहस्य क्षत्रचूडामणिः गद्यचिन्तामणिश्चेति ग्रन्थद्वयं सम्प्रत्युपलभ्यते। अनयोः प्रथमः पद्यमयं काव्यम्, द्वितीयश्च गद्यमयः। द्वयोरपि महावीरस्वामिसमकालीनस्य महातेजस्विनः क्षत्रियोचितशौर्यगुणसम्पन्नमहाराजस्य जीवंधरस्य चरितं वर्णितं वर्त्तते। एतेनैतत् प्रतीयते यत् वादीभसिंहाय महापुरुषस्य महाराजजीवंधरस्य चरितं रोरुच्यते स्मेति। यतस्तेन सर्वापि स्वीया प्रतिभा तच्चरितवर्णन एव व्ययीकृता। तत्र क्षत्रचूडामणिग्रन्थं तूत्तमनीतिग्रन्थं वक्तुं शक्नुमः। प्रायः प्रत्येकं श्लोकार्धेनाभीष्टचरित्रांशमुपवर्ण्यार्थान्तराद्यलंकारालंकृतोत्तरार्धेन नीतिसारः प्रकटितो ग्रन्थकारेण। द्वितीयो गद्यचिन्तामणिग्रन्थोऽपि काव्योचित–माधुर्य–सौकुमार्यादिप्राञ्जलगुणैर्विशिष्टो महत्त्वपूर्णश्च। ग्रन्थस्यास्यालोचने न किञ्चित् स्वयमुक्त्वा श्रीयुतानां टी. एस्. कुप्पुस्वामिशास्त्रिमहोदयानां कथनमेवोद्धरामः—'पदलालित्य–श्राव्यशब्दसन्निवेश – निर्गलवाग्वैखरीसुगमकथासारावगम – चित्तविस्मापिककल्पना – चित्तप्रसादजनकधर्मोपदेश-धर्मानुकूलनीत्यादिकाव्यसुलभरुचिरगुणाः प्राचुर्येणा-

स्मिन्नुपगुम्फिताः सन्ति' इति। परमेतत्सत्यं यत् बाणमहाकवेः रचनापद्धतिमनुसृत्यैव वादीभसिंहेनेमौ ग्रन्थौ रचितौ ।

निबन्धान्ते च विद्वद्वर्यश्रीकुप्पुस्वामिशास्त्रिभ्योऽनेके साधुवादाः प्रदीयन्ते यतस्तेषामसीमप्रयासेनैवैतद्ग्रन्थद्वयं प्रकाशतां गतं, मद्रासविश्वविद्यालयस्य पठनक्रमे च प्रविष्टमिति ।

---

# 'क्षत्रियाणी मृणालिनी'

ले०—**म. पं. वासुदेवाचार्य बागेवाडीकरशास्त्री**, सोलापूर.

आसीत् पुरा किल गुर्जरेषु दिगन्तविश्रान्तकीर्तिः क्षेमसिंहो नाम क्षात्रकुलभूषणो भूपालः। तस्य च राजधानी राज्ञीपुरं नाम नगरम्। न्यायप्रियो वीरः स भूमिपालः सदैव प्रजारञ्जनपर आसीत् । तस्य कन्या शूरधीरा विक्रमशालिनी नाम्ना मृणालिनी लावण्याढ्या प्राणेभ्योऽपि प्रियाऽभवत्। तस्यास्त्रिभुवनसुन्दर्याः सौन्दर्यकीर्तिः पाटलीपुत्राधिष्ठितस्य रहिमतस्य श्रवणपथं प्राप्ता। कामलोलुपः कामिनीलावण्यहृतचेताः स तां चकमे। यस्यां स मनो बध्नाति तां वशीकर्तुं सर्वात्मना प्रयतते स्म। तदनु स क्षेमसिंहं तामयाचत। मानधनाग्रणीः क्षेमसिंहस्तां हीनहीनां याचनां न्यक्कृतवान्। परं समरप्रसङ्गेण क्षत्रियकन्याभिलाषो दुष्प्राप्य इति विजज्ञिवान् स यवनभूपः प्रथमं कपटप्रबन्धं रचितवान् ।

अथ क्षेमसिंहस्य पुत्रं मूलसिंहं राज्यपदलोभेन पितुर्भेदयामास। क्षात्रकुलकलङ्को राजपूतकुलपादपवनस्य दावाग्निः स कुमाराधमः स्वभगिनीं स्वाभिमानिनीं तस्मै म्लेच्छाय प्रतिश्रुतवान्। भर्तुरिदं कुचरितं कुतोऽपि निशम्य

प्रक्षुब्धमानसा मानिनी स्वकुलधर्माभिमानिनी तस्य धर्मपत्नी स्वमंदिरं प्रविष्टं स्वपतिं न्यक्कारपूर्वकमवादीत्—"क्षत्रियकुलज, धनलोभवशात् कुलोत्तमां स्वस्वसारं यवनाधमाय ददानस्त्वं कथं न जिह्रेषि । स्वाभिमानशालिनां राजन्यानां कुले महति मानहीनो भवान् कथं समुत्पन्नः । क्व ते तत्कुलक्रमागतं क्षात्रं तेजः क्व वा तत् पारंपर्यागतं ते शौर्यम् । क्व वा कन्यकाजनानां तन्मंदाक्षर क्षणाभिमानं ते । क्व वा सा तेऽवलिप्तता । क्व वा सा दुर्जनहननशक्तिः अबलाजनत्राणमतिश्च । हन्त । सर्वथा निष्फलं धर्मज्ञानम् । निरर्थकं क्षात्रकुलजन्म । निष्प्रयोजनः संस्कारः । निरुपकारका गुरुपदेशाः । यतस्त्वादृशोऽपि लोभवशादेतत्सर्वमवगणय्य शीलशालिनीं सहोदरीं नीचाय शौनिकाय गृहधेनुमिवार्पयितुमुत्सहते । धिक् त्वामसत्पथसेविनं नृशंसम् । नृशंस, अपेह्यस्मात् सतीमन्दिरात् । निरभिमानिन् निर्गच्छास्मदभिमानधनाद् राजकुलात् । यावदहं प्राणिमि तावत् स कामवृत्तिर्नीचः कन्यकाकुलदूषकः तां सत्कुलजां कन्यकां मे ननान्दरं विलोकयितुमपि न क्षमः किमुत दूषयितुम् । यावन्मे प्राणा नापयान्ति तावत् स पापो मे श्वशुरकुलधर्षणाय नालं भवेत् कदापि । यदि तस्य महान् रणोत्साहस्ततोऽवतरतु रणभुवम् । प्रत्यक्षीकरोतु च क्षात्रकुलाङ्गनानां साध्वीनां रणकौशलम् । अतः परं न त्वं मे पतिः । नाहं ते पत्नी । त्वादृशस्य कुलदूषकस्य संस्पर्शेन नाहमुत्सहे स्वं पुनीततमं कुलं सन्दूषयितुम् । "पत्युरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथं प्रतिपन्नस्य त्याग एव विधीयते" इति वृद्धा धर्मज्ञा आहुः । कुलस्त्रीध्रुक् महीयानपि कुलाङ्गनानां वध्य एव ।" इति ।

अभीरोरस्या इमां गभीरां गिरं निशम्यावाङ्मुखोऽसौ कुलपांसुलो-ऽपांसुलायास्तस्मान्मन्दिरात् तूष्णीं प्रचलितः । ततोऽसौ दुरात्मा पाटलीपुत्रं गत्वा स्वपत्नीं प्रतिकूलवर्तिनीं तस्मै यवनाधिपाय निवेदयामास । गजः कमलिन्याः

सौरभ्येणेव मदान्धः क्षत्रियकन्यायाः सौन्दर्येणाकृष्टो महता यवनबलेन युद्धाय प्रतस्थे । अभियास्यन्तं तं श्रुत्वा सा राजवधूर्वधूकुललज्जारक्षणाय सन्नद्धा जाता । अल्पीयांसमपि प्रबलं वीरबलमधिष्ठिता रणाभिनिवेशिनी क्षत्रियाणी स्वयं रणवेशमाधाय वामांसे धनुः पृष्ठे च बाणपूर्णौ तूणीरौ दक्षिणेन च पाणिना शितं खड्गं दधती समरभुवमवतीर्णा ।

तस्मिन् घस्मरे समरे सा राजस्नुषा वीरजनोचितं निधनमुपेता । क्षीणबले रिपुबले विजयोन्मत्तो रहिमतस्तस्याः श्वशुरौ वृद्धौ निगृह्य पाटलीपुत्रं प्रस्थापितवान् । ततो राजमन्दिरं प्रविश्य तत्रैकाकिनीं दुःखितां बालां मृणालिनीं वने यूथपरिभ्रष्टां बालमृगीं वृक इवावस्कन्दितुं प्रावर्तत । तदा समयमन्वेक्षमाणा समयचतुरा बालिका तं कामातुरं वञ्चयितुं गभीरमभाणीत् । "सम्प्रत्यहं पुष्पवती । मा स्पृश माम् । त्रीणि दिनानि तावत् प्रतिपालय" इति । एतेन तस्या मृदुलेन वचसा सन्तुष्टमनाः स दुर्मनास्तां वशीभूतामाकलय्य समयं प्रत्यपद्यत । स्वमनोरथं संपन्नमिव मन्यमानः स तानि त्रीण्यहानि सोत्कण्ठं कथमप्यत्यवाहयत् । ततश्चतुर्थे दिने तन्मन्दिरं प्रसाधितं यदा स वीराधमः प्राविशत्तदा सा भुवनसुन्दरी स्वशीलरक्षणोपायं निश्चित्य प्रसङ्गं प्रतिपालयन्त्यासीत् । प्रथममेव विजयप्रोत्साहिताय मदिरापानमत्ताय मदिराक्ष्याः समागमोत्सुकमानसाय तस्मै निर्भीका सा बाला स्वागतं नाम व्याजहार । प्रथममेव मदिरापानमत्तः प्रमत्तस्तेन स्वागतेन वञ्चितो वञ्चकः सुतरां सन्तुष्टः । तेनातिभूमिं गतेन मद्यप्राशनेन मोहिनीव तमसुरं मोहयामास । मोहमापन्नं निःसंज्ञं तमेकाकिनं तत्र परित्यज्यैकाकिनी सा बाला निशीथे सहसा केनाप्यलक्षिता ततश्चचाल । पुनर्निग्रहभयात् सुगम्यं राजपथं हित्वा दुर्गमं कान्तारपथमनुप्रविष्टा । राजमन्दिरे मणिकुट्टिमेऽपि दूयमानाभ्यां कमलपत्रकोमलाभ्यां पद्भ्यां चलन्ती सुकुमारी राजकुमारी कण्टकानुविद्धे प्रस्तरास्तीर्णे स्खलन्ती

शीलेऽपि पथि अस्खलन्ती स्वशीलं रक्षन्ती गहने वने कस्यचिन्मुनेराश्रमं श्रमं प्राप ।

अथ शीलरक्षणपराऽऽर्यबालिका महान्तमप्यध्वखेदमविगणय्य शरणार्थि-न्यशरणा शरणं प्राप्तेति ज्ञात्वा स मुनिस्तां समाश्वासनपूर्वकं यवनजनदुष्प्रवेशे स्वसन्निवेशे निगूढमस्थापयत् ।

अथैकदा तस्यामाश्रमवासिन्यां समीपवर्तिन्यां तटिन्यां स्ववसनानि प्रक्षालयन्त्यां वैरिसिंहो नाम चन्द्रावत्या राजपुत्रो मृगयायै भ्रमंस्तत्र पिपासा-कुलः सम्प्राप्तः । स्वदर्शनेन सम्भ्रान्तचित्तां तां परिकल्प्योवाच "अयि प्रमदे अलं भयेन । न त्वामाश्रमवासिनीं मुनिकन्यकां समर्थये । कथय कस्मादाश्रम-माश्रयसि । नूनं त्वामकुतोभयां करिष्ये" इति । अत्रान्तरे स तपोधनस्तत्र समागतोऽवदत्—"क्षत्रियकुमार, सत्यमिमां सत्कुलजां क्षात्रकुमारिकां त्रातु-मर्हसि" इति । ततः स मुनिः प्रणताय तस्मै यूने तस्याः सकलं वृत्तान्तं न्यवेदयत । श्रुतवृत्तः स सुवृत्तः "न चिरादेव तं कुमारीजनदूषकं यवनापसदं यमसदनं यापयित्वा राजकुमारीमिमामपगतभयां विधास्ये" इति प्रतिजज्ञे । तपोधनं च तमामन्त्र्य स्वराजधानीं वव्राज ।

अथ चन्द्रावत्या राजकुमारं चतुरंगबलान्वितं संयुगाय सन्नद्धं समाकर्ण्य मृणालकोमला मृणालिनी समरभुवमवतीर्णा । अश्वारूढा वामांसावलम्बिना खड्गेन शोभमाना तूणीरद्वयं पृष्ठेन बिभ्राणाऽलक्ष्यमाणसन्धानविमोचना रिपुसैनिकानसुविहीनान् कुर्वाणा मूर्तिमती रणदेवतेव रणे विचचार । अनेन क्रोधाविष्टोऽगण्यसेनापरिवृतो रहिमतो राजपूतयोधान् प्रकृष्टान् संहरन्नास्त । राजपुत्रो वैरिसिंहोऽपि प्रकृष्टाभिनिवेशिना बलेन, विधाता सितामसितां च सरितं व्यदधान्न तु शोणितामिति बुद्ध्येव रिपुक्षतजेन शोणितां तटिनीमकरोत् ।

अभीकयोर्भीमदर्शनयोस्तयोरुभयोः सेनयोः खड्गाखड्गि, भल्लाभल्लि परस्परं घस्मरं जन्यमजनि । परं त्रीणि दिनानि जयश्रीर्गतागतं कुर्वन्ती संशयितेवासीत् । ततश्चतुर्थेऽहनि स्वसेनां द्विधा विभज्यैकतो वैरिसिंहमन्यतो मृणालिनीं भीमपराक्रमै रणकर्कशैर्बहुभिर्वीरैरहिमती रहिमतो रोधयामास । निर्भीका रणधुरंधरा सा क्षात्रकन्याऽतुलेन रणवीर्येण दिविषदामपि विस्मयमाततान ।

अथानेकैरावृतं वैरिसिंहं पश्चाद्भागेन प्रहरिष्यमाणं खड्गेन रहिमतं विलोक्य तं वीरशार्दूलं जीवितसंशयान्मोचयितुकामाऽभिरामा सा रामा पवनजवनं स्ववाजिनं पार्ष्णिप्रहारेण झटिति प्रेरयामास । स्वस्वामिन्यास्तं महाशयं विदित्वा स सदश्वो निमेषमात्रात् तं यवनजनसेनानिवेशमभेद्यं भित्वा तां तन्निकटमसंकटं प्रापयामास । प्राप्तमात्रैव सा सत्वरं रहिमतस्य शिरश्चिच्छेद । तच्छीर्षं वामेन दक्षिणेन च पाणिनाऽसिं धारयन्ती चण्डी प्रचण्डं गर्जन्ती घोरे समरे पलायनपरान् परान् संहरन्तीतस्ततः समचरत् । स्वसेनोत्तमं छिन्नोत्तमाङ्गं वीक्ष्य सकलमपि रिपुबलं सर्वास्वाशासु जीविताशया पलायत । सा धन्या कन्या स्तुतिसुमनोभिः सर्वैरभिवृष्टा । वैरिसिंहस्त्वनेन वीरत्वेन तस्यां सविशेषमस्निह्यत् ।

ततो बन्धानान्मुक्तः क्षेमसिंहः स्वकन्याया वीर्यशुल्काया वीरकुलावतंसेन वैरिसिंहेन पाणिं सानन्दमग्राहयत् । पाटलीपुत्रस्य सिंहासनेऽभिषिक्तो वैरिसिंहो राज्ञीपुरं नयेन प्राशात् । ततः पुत्रजन्मना परस्परं प्रेमरसं सविशेषं सेवमानौ सुखेन कालं नयमानावतिष्ठताम् ।

अथ म्लेच्छस्वभावसुलभादाक्रमणचापलाद् राजपूतानामभ्युदयामर्षाच्च पाटलीपुत्रराज्यं प्रत्यवाप्तुमना देहलीपुराधिपो बहुतुरगपदातिबलसमन्वितं खुस्रुनामानं सेनाधिपं प्राहिणात् । सोऽपि श्रुतमृणालिनीलावण्यकीर्तिरेकेनैवाह्ना समागत्य पाटलीपुत्रं न्यरुन्द्ध । तदसहमानोऽक्षमी क्षमापतिर्वैरिसिंहः सिंह इव

स्वसैन्योऽभ्यपतत् सहसा । ततो यवनराजपूतानां भूयस्तुमुलं जन्यं सप्ताहं यावत् समजनि । परं क्षात्रकुलस्याधन्यतया परपुरञ्जयो धन्यो वैरिसिंहो वीरोचितं निधनं समुपैत् । तेन हि सम्प्राप्तप्रोत्साहा रिपुसेना प्राकारं भित्त्वा नगरं प्राविशत् । तदनु विदितपतिमरणा सा रमणी मृणालिनी स्तनंधयं तनयं धात्रीसात्कृत्याविलम्बितं मूलबलावलम्बिता सायुधा तुरंगमाधिरूढा बलीयसाऽरिबलेन तेन युयुधे । प्रबलेनाश्वबलेनाजौ बाणावलीं किरन्तीं तां दृष्ट्वा सा बलिष्ठा वीरभूयिष्ठा शत्रुसेना क्षणमिव विस्मयस्तिमिताऽभवत् । प्रबलया विक्रमशाल्या सा तद्रिपुकाननमुत्सन्नमिवाकरोत् । एतेन पराक्रमदर्शनेन प्रथमं भयाद्रणादुपरतं राजपूतबलं रणविमुखं रणोन्मुखमभवत् । परशुरामविक्रमः पुरा सागरवेलामिव यवनसेनासागरवीचिं देहलीपुरं यावदुदसारयत् । एवं युध्यमाना साऽबला बाला नैकाभिर्हेतिहतिभिः क्षतशतदेहा क्षीणबलाऽक्षमा क्षमामापेदे । तदवस्थां तां सतीमसन्मतिर्यवनसेनापतिः स्वसन्निवेशं संप्रावेशयत् । तत्र च तां विरोपितव्रणां विधातुं सेवकैर्निजैरुपाचारयत् । अथैकदा रहस्यर्धविरोपितव्रणां तामनुनेष्यन् स पापात्मा पूतात्मानं वीराङ्गनां विलोभयितुं स्ववैभववीर्यविकत्थनपरो बभूव । तस्य तेन विकत्थनवचनेनासाधुना साधुवृत्ता सा मनसि महतीमप्रीतिमवहत् ।

ततः काममोहितः स चुम्बकस्तस्याश्चुबुकं करेणास्पृशत् । तदसहमाना सा रुधिरस्रावेण क्षीणाऽप्यक्षीणशीला सहसोत्थाय कृपाणपाणिः कामबाणहतस्य तस्य यवनहतकस्य चित्तं विलोकयिष्यमाणेव वक्षो व्यदारयदेकेनैव प्रहारेण । अवादीच्च—"निस्त्रप पाप, भारतललना निर्धनाऽपि धनाशया प्रणष्टाऽपि प्राणाशया न कथंचिदपि स्वशीलाद् विचलति । एतत्ते सम्यग् विदितमेव स्यात् । निर्नाथाऽबला मृत्युशय्यामापन्नाऽप्यहं त्वां निषूदयितुं सबला । 'शीलं हि साध्वीनां महद्बलम्' । इति वादिन्येव सा

मृणालिनी तस्मात् पटमण्डपान्निर्जगाम। निर्गतमात्राया एवानेनायासेन त्रिपाटितेभ्यो व्रणेभ्यो बहुला रुधिरधारा अस्रवन्। तेन सा तथा चिरमूर्च्छामापन्ना यथा न कदाऽपि पुनः संज्ञां प्रापत्। हा हन्त। इयमेव भारतभूः पुरैतादृशं वीरकन्यारत्नं प्रासूत।

---

# 'स्त्रीणामधिनियोजनं कर्मचारिपदेऽप्रागतिकम्'

ले०—शा. गो. राघळे, B. A.
काव्यतीर्थः, शास्त्री, नागपुरम्.

अहो सौंदर्यं शब्दस्य प्रागतिकाभिधस्य नाम। कोऽर्थः प्रतिपाद्यतेऽनेन। का च प्रगतिः कावाऽप्रगतिः। पुनश्च सा किल कस्मिन् क्षेत्रे—कथं कस्माच्च—इत्यस्य न सम्यगत्रबोधो भवति। स्त्रीभिः पुरुषपदोपलब्धेः कियत् सुखं समाधानं च समवाप्तम्। पुनः पुरुषाणाञ्च किं कदर्थितम्। उभे यदि चक्रे समाजस्य भवतः तर्हि परस्परस्पर्धालुतया स्वतंत्रवृत्या निरपेक्षतया च कोवा लाभः स्यादुभयोः। प्रत्युत हानिरनयोः सुनिश्चिता।

कर्मचारिणः कार्यस्वरूपमेवास्त्येतादृग् विषमं यत् यत्र पुरुषा अपि खिलीभवन्ति तत्र का कथा कोमलांगलतानां सौकुमार्यभाजां स्त्रीणाम्। तासामन्यत्राभिनियोजनेन भूयान् तावल्लाभोऽभिलब्धुं शक्यः समाजेन। यदि ता ग्रामोद्योगं गृहोद्योगं वोररीकरिष्यन्ति शैक्षणिकविषयेऽधिराज्यं कुर्युः साहित्यादिषु नैपुण्येन सुसमृद्धतां समाजं नेतुं प्रयतेरन् विविधासु कलासु कौशल्यं भजेयुस्तर्हि धातुर्मनीषा नारीप्रकृतिघटनायां सफला भवेत् समाज-

हितमपि सम्यक् परिपालितं स्यात् । पुरुष-पदाधिकारिण्यः स्त्रियः स्वप्रकृति-प्रतिकूलं—कर्म कुर्वन्त्यः स्वात्मानमवनमयन्त्येव खलु । अधोगतिरेषा स्त्री-जीवनस्य । आत्मनाशम्प्रति ता उद्युक्ता अनया रीत्या ।

केचन प्रतिपादयन्त्येवं यत्—कर्तव्यदक्षता, कौशलं क्रियासु, गतिमानता-ऽनालस्यं सुगमत्वं सुकरत्वं च पुरुषेषु ताभिः सम्प्रविष्टानि । वचनमिदं कियद्या-थार्थ्यं भजत इति सर्वे एव जानन्ति । यद्यनालस्यहेतुः स्त्रियः, सुगम-सुकरतायां यदि ताः कारणम्—महद्धि नामेदमभिनवं यंत्रं सामाजिकैरन्विष्टं किल । यदि स्वानिवार्यतामपहाय पुरुषप्रकृतिर्न विपरिणमेत्, यदि च संजायेत सामंजस्यं कुटिले विटे, धृष्टः पुण्डोऽथ भजेत मार्दवं तर्हि महानयं विजयः स्यान्मानवमनोवृत्तेः ।

परं यथा प्रतिपाद्यते तथा न प्रत्यक्षतया प्रतिभाति । अहो वंचक-तास्य लोकस्य । प्रतारणेयं सर्वत्रैव वरीवर्ति । प्रागतिका-वादिनो नास्यापवाद-पदतां भजन्त इति । दीपाधस्तात् प्रसृतं तत्र तमः । यत्ते न निभालयितुं प्रयतंते तत्र नायमन्यस्य दोषः । नवनिर्माणोत्फुल्लांगाः सुधारका नास्याः पुनर्निर्मितेः मूलभूतं तत्वं जानंति । यत् किमाधारा कार्या सुधारणा । कानि चिरंतनानि बीजानि नित्यप्रगतिक्षमाण्यवलंबितव्यानीति । सर्वममीषामनिश्चितम् । यदेकस्याभिमतं तन्नान्यस्य सम्यक् प्रतिभाति । प्रतिपादयति पूर्वामेकः प्रत्य-गतिरन्यश्च । नैकोऽपि नेता यन्मतं प्रमाणम् । परदूषणान्वेषणेनैव दोषज्ञता तेषाम् । स्वात्मनिरीक्षणं नैकेनापि विधीयते ।

अंधतया पाश्चात्याननुकुर्वन्तस्तानेवादर्शान् मन्वाना धिगात्मानं परि-गणयन्त इमे ब्रुवतेऽत्रत्यान् संस्कृतिसंप्रदायजुषो भारतीयान् प्रखरात्मीयताभाजो नरान् 'अन्धश्रद्धा' इति । पुनश्च प्रतिगामिन इत्याक्षिप्य दूषयन्ति तान् । अहो नु नीती रीतिश्च जडवादिनाम् । यत् स्वात्मसंशोधनं विनैवान्यान् दोषा-

विलया दृशाऽवलोकन्ते ते । यदाचर्यते तैस्तत्सत् । यच्च दूष्यते तदसदिति तेषां दण्डकः । अतस्तस्यां प्रगतिंमन्यतायामप्रगतिशीलतैव प्रच्छन्नेति ते नैवावगच्छन्ति ।

पुरुषवदधिकारः कांक्ष्यते स्त्रीदाक्षिण्यवद्भिस्तासाम् । परम्प्रयत्नोऽयमधरीकर्तुमेवास्पदं तासां स्त्रीणाम् । पुरुषोपरिष्टाद् विराजते स्त्रीणाम्पदम् । ताभिः प्रणयेन निघ्नीकरणीया जनाः तैस्तु ताः सम्यक् प्रतिपालनेन । नाधिकारोऽन्तरा स्वकर्तव्यभावनां विराजते । स्वधर्ममनुरुन्धाना जातिरेव स्वादर्शम्पुरस्करोति । स्त्रीभिः सौजन्य, सौकुमार्य, सौशील्यादिकं यदि वीतम् तर्हि कुत्रान्वेषणीयं तत्पुरुषैः । सर्वदाऽतः कथंचिदपि परिरक्षणीयमेव तत् । मूलाधारश्च संसृतेरस्या एतत् । महती हानिर्विना तेनास्य समाजस्य । सहपुरुषसंपर्काद्भङ्गुरतां यायादयं गुणमहिमा । मनोगुणधर्मा इन्द्रियाणि जन्तूनामीशेनपराञ्चि विहितानि । अन्तर्मुखताविरोधिनी प्रकृतिरेव । अतःस्त्रीणामुपरि महतीयमापद् यत्ताभिः समाजसंधारणं करुणया सुशीलतया च स्वात्मसंरक्षणेन विधेयम् । उन्नतिपदन्नेतुं नरं यदि ता अर्हन्ति तर्हि स्वास्पदं सर्वदा यथोन्नतमेव स्यात्तथा वर्तनीयं ताभिरिति सुस्पष्टमेव किल ।

अहो प्रागल्भ्यं प्रागतिकानां यदा तैः प्रतिपाद्यते यत् स्त्रीसमक्षं साध्वाचारप्रकटनेन जनैः समीहितं यथा तथा वा शिष्टसंमतमेव समाचारितं समाजहितायैव सुतरां कल्पेत । परं न ते जानन्ति यत् परा किल स्पर्धा संजायेत स्त्रीकटाक्षसुखमधुकरायमाणानामेतेषाम् । पुनश्च तदनुकूलतां कामयमानानां वरोऽयमवरोऽन्य इति यथार्थतो निर्णायिकात्वं स्त्रीषु केन कथं वा विश्वसितव्यम् । भवेत तासां संमतो राजमान्यः लोकमान्यश्च । साधुरपि टीकास्थानं लभेत तासां विमतः । इमां कार्याकार्यविचक्षणतां निर्दोषं दधानाः

कियन्त्यो नाम नार्यः सन्ति । सुतरामिदमुक्तम्—'स्त्रियो हि मूलं कलहस्य पुंसः । निधनस्य च' । 'स्त्रीदेवाः नारीकिंकरा जनाः' किम्प्रगतिलक्षणम् ।

वन्द्यं स्त्रीदाक्षिण्यं वरमपि । न पुनः स्त्रैणत्वं नृणाम् । पुरुषपदाधिनियोजनेन श्वः परश्वो वा नाश्येरन् नराः । पौरुषमपास्य कापुरुषत्वं भजेत पुंजातिः । का नाम गतिः स्यात्तदा । किमिदमपि गौरवास्पदमेव । स्यादेषाऽपि प्रगतिरेव । अहो प्रागतिकता स्त्रीणां सामाजिकं स्थानमुन्नेतुमनसाम् ।

पुनश्च नैतत्प्रधानं कार्यं तासाम् । सा तु शूराणां वीरधीराणां विदुषाञ्च आभूतिः । ताभिः श्रीरामकृष्णादयः समाजहितायोत्पाद्य संवर्धनीया नराः । प्रजासंगोपनोदासीनत्वं तासां महदनर्थकम् समाजहितस्य । अतः सीताद्रौपदीसदृश्यो नार्यः समाजे यथा भवेयुः तथा करणेनैव प्रगतिर्नान्यथा । अस्मिन् यंत्रयुगेऽपि समाजसंधारणायै सुस्थिरतायै च तदावश्यकमित्यत्र न कस्यापि विप्रतिपत्तिः । तस्मात् स्त्रीभिः स्वधर्मपरिपालनेनैव समाजोऽयमुन्नतिपदं लभेत ।

गृहिणी गृहमुच्यते । तया हीनं सदनं कांतारादतिरिच्यते । पुरुषाणां यथा बहिःगृहाद्कार्यं तथा न स्त्रीणाम् । तास्तु गृहदेवताः । पुरुषसम्पादितस्य धनस्य विनियोगो कुटुंबस्थैर्याय ताभिरेव कार्यः । एषैवार्या संस्कृतिः । रीत्याऽनया सुदृढं समाजहितं संजायेत । परं नवविचाराचारप्रवाहपतितानां का गतिः स्यादिति न जानीमो वयम् । यदन्ते हितकरं तत्कटु अपि पथ्यमेव । अतो द्रष्टारो भाविकालदृष्टयो भवन्ति । येषां नैषा परा दृष्टिस्ते कियत्साधयेयुः समाजहितम् । बहुजनहिताय यत् कल्पते तदेव मत्वा प्रागतिकं, क्षणिकं हेयं सुखं कल्यवर्तं सौंदर्यं च । अथवा तदूरीकरणेनाधःपात एव । अतः सुविचार्य उपपद्यते यत् नैषा प्रगतिः । प्रत्युत अप्रागतिकमेव सर्वमिदमितिशम् ।

---

॥ श्री ॥

# 'प्रजासत्ताकदिनमहोत्सवमुद्दिश्य'

ले०—**शामशर्मा रावळे**, B. A.
काव्यतीर्थः, शास्त्री, **नागपूरम्.**

स्वातंत्र्यं समवाप्तमेव सुचिरादार्यैः सुधन्यैः श्रमात् ।
तन्त्रं नूत्नमिदं विधाय सुधियः कुर्वन्ति राज्यं प्रजाः ॥
राष्ट्रोद्धाररताः स्वयं—कृतिपराः सर्वे समुत्कर्षिणः ।
दैन्यापद्दुरितानि हर्तुमनसो जीवन्तु कुर्वन्तु शम् ॥ १ ॥



त्रैगुण्यं भजमान एष रुचिरः केतुः सुचक्रांकितः ।
रक्तं शुभ्रमहो हरित्सु—नितरां जीयात् त्रिवर्णान् दधत् ॥
सौहार्दं समतां स्व-तंत्रविभुतां सम्पोष्य नः संस्कृतिर् ।
विश्वादर्शगुणा चिरं वितरतात् शीलं परं भूषणम् ॥ २ ॥



धान्यं चात्र धनं श्रुतं सुविमलं शश्वद् विधत्ताम्पदम् ।
भद्रं सर्वगतं तनोतु सततं सन्मंगलं प्राणिनाम् ॥
आयुः—क्षेमविरोगितासहकृता शान्तिश्चिरं राजताम् ।
सर्वेऽस्मिन् सुखिनो जनाः प्रगतिताभाजः सदा सन्त्वमी ॥ ३ ॥

---

# श्रीभगवद्गीता

**पं. जवाहरलाल नेहरू**

श्रीभगवद्गीता महाभारतग्रन्थस्य एकः भागः महाभारतमहानाटकस्य [illegible]ऽकः । इयं च भगवद्गीता महाभारतांतर्गताऽपि स्वयं परिपूर्णः एकः [illegible]क् ग्रंथ एव । आकारदृष्ट्या विचार्यमाणे सप्तशतश्लोकात्मिका इयं [illegible]लघुकाव्यवत् आभासते । सर वुलियम् हंबोल्ट नामकः एकः सुप्रसिद्धः [illegible]लंतत्वज्ञः गीताविषये

"The most beautiful perhaps the only true [p]hilosophical song existing in any known tongue"

[illegible]गति विद्यमानेषु विदितवाङ्मयेषु एव अत्यंतश्रेष्ठतमं स्वादिष्टं सत्यसुंदरं च [illegible]कमात्रं अध्यात्मकाव्यं नाम श्रीभगवद्गीता एव इति स्पष्टमाचष्ट । बुद्धपूर्वकाले [illegible] विरचिताया अपि अस्याः गीतायाः नैकसहस्रवर्षानंतरम् अद्यापि महती [illegible]कोत्तरप्रसिद्धिः प्रतिष्ठा वा न स्तोकमात्रमपि न्यूनीभवति । तद्दिनादारभ्य [illegible]द्ययावत् लोकेषु बलवत्तर एव तत्प्रभावः परिणामश्च दरीदृश्यते । जगति [वि]शेषतः भारते सर्वविधा अपि विचारप्रणालिकाः तत्वशास्त्राणि च स्वस्य [प्रा]माण्यसिद्ध्यर्थं गीताग्रंथमेव अवलंबंते । सर्वेऽपि च आचार्यपुरुषा स्वाभिप्रेतार्थं [गी]तात एव निष्कासयितुं प्रयतंते । गीतानुगृहीतत्वमेव हि सर्वशास्त्रमतविचाराणां [illegible]पवादप्रामाण्यबीजम् । यदा यदा मानवीयं मनः किंकर्तव्यताविमूढं भवति [ध]र्मसंकटे च पतति तदा तदा मार्गदर्शनाय गीतां प्रत्येव अभिवल्गते । साच '[illegible]कुरुते दीप इवार्थदर्शनम्' । यतो हि इयं हि गीता यदा अर्जुनः [ध]र्मसंकटे पतितः यदा च तस्य कार्याकार्यविवेकः विलुप्तः अभवत् यदा

च सामाजिकराजकीयविप्लवः समुपस्थितः यदा च आत्मसंमोहः पार्थस्य समजायत यदा च विभिन्नविचारद्वंद्वविदीर्णस्य विमूढस्य च मनसः क्षोभः समुत्पन्नः तदा एव एतद्गीतावतारः संबभूव । असंख्या एव हि टीकाः टिप्पण्यः भाष्याणि च गीताया उपरि भूतकाले व्यलिख्यंत नैकैः मत-स्थापकाचार्यैः । वर्तमानकालेऽपि अयं क्रमः अनूचान एव प्रचलति । अद्यापि नैकविधा एव लेखाः टीकाः विचाराः विमर्शाः समालोचनाश्च गीता-ग्रंथस्य अव्याहतरीत्या प्रतिदिनं प्रादुष्क्रियमाणा दरीदृश्यंते । अस्य विंशति शतमानस्य नवमन्वंतरस्य ज्ञानयोगिनः कर्मयोगिनः श्री लोकमान्य टिळक, महात्मा गांधी, श्री अरविंदघोषप्रभृति राजकीयनेतारोऽपि नवीनव्याख्यानानि अपूर्वसमालोचनानि च विरच्य स्वाभिप्रेतं गीतार्थं आविश्चक्रुः । महात्मा गांधी महोदयः गीताया आधारेण एव स्वस्य अहिंसातत्त्वं प्रतिपादितवान् । अन्येऽपि गीताया एव आधारेण हिंसां युद्धं च अवश्यकर्तव्यं परमधर्मं च मानयंति । विपक्षे च महापापमुदाहरंति । " अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि " इति ।

इदं गीताख्यं गीतं कुरुक्षेत्रे रणांगणे समरसंमुखे युद्धप्रारंभक्षण एव कृष्णार्जुनसंवादरूपेण प्रारब्धं भवति । समरांगणस्य भीकरदृश्यं दृष्ट्वा अर्जुनस्य मनः उद्विग्नं चिंतामग्नं च भवति । युद्धेन भाविनीम् अनर्थपरंपरां सामूहिकहत्यां हिंसाकांडं च दृष्ट्वा तस्य आत्मा संत्रस्तः प्रक्षुब्धश्च भवति । किंवा फलं को वा परिणामः अस्य महायुद्धस्य । एतांश्च बंधुबांधवान् संबंधिनः स्नेहितांश्च हत्वा को वा परमपुरुषार्थः संपादनीयः । को वा कीदृशो वा महान् लाभः । अमु हत्याकांडं ईदृशं रक्तपातं एतादृशीं च भीकरहिंसां सत्यापयितुं न्याय-संमतां कर्तुं क्षम्यां विधातुं को वा समर्थो भवेत् ? केन वा कीदृग्विधेन वा परमफलेन ईदृशनरमेधजनितपापपरंपराणां प्रक्षालनं शक्यसंभवं भवेत् ? अत्र हि

अर्जुनः युगयुगांतरेभ्यः विचारभारभुग्नस्य धर्मसंमूढचेतसः मानवीय आत्मनः प्रतीक इव तिष्ठति । बहोः कालादेव परस्परं विसंवदतां मिथो विरुधानानां धर्म-कर्म, प्रेम-कर्तव्य, युद्ध-अहिंसा, व्यष्टिधर्म-समष्टिधर्म, राजधर्म-राष्ट्रधर्मादीनां विचारभारेण आक्रांतं मानवीयमनः अर्जुनं पुरस्कृत्य श्रीकृष्णं शरणं गच्छति । अत्र हि निमित्तमात्रं भवति सव्यसाची' । अस्मिंश्च गीताप्रबंधे अनया एव मिथः संवादभंग्या वैयक्तिककर्तव्यानां सामाजिकस्वरूपं निस्वार्थसेवा सामाजिक-रीतिनीतयः धर्मकर्ममीमांसा नीतितत्वानां जीवने प्रयोगप्रकारः धर्मव्यवहाराणां परस्परसमन्वयं कृत्वा जीवने तदुपयोगपद्धतिः सर्वकार्यकरणेषु आध्यात्मिक-दृष्टेः अत्यंतावश्यकता च इत्यादि विषयाः सम्यगेव अवबोधिताः । अत्र ज्ञानयोग-कर्मयोगभक्तियोग-नाम्नां त्रयाणामपि मार्गाणां सम्यगेव साधुसमन्वयः संसाधितः श्रीकृष्णेन । आध्यात्मिकदृष्ट्या मानवीयजीवनस्य सत्तां महत्तां च सम्यग्विमृश्य प्रापंचिकेनापि परमार्थसाधनं कथं कर्तव्यं इति निर्दिश्य जीवन-समस्यापरिहारप्रकारान् निरूपयति भगवती गीता । विश्वोद्धारदृष्ट्या राष्ट्रिय-दृष्ट्या च जीवजंतूनां इतिकर्तव्यानि निर्दिशति श्रीकृष्णः अत्र । अत्र हि गीतायां तत्र तत्र बहुत्र नैष्कर्म्यस्य बहुधा खंडनं कृतं दृश्यते । सर्वैरपि मानवैः स्वोचित—कालोचितकर्मानुष्ठानं अवश्यमेव कर्तव्यमिति आग्रहेण प्रतिपादयति गीताचार्यः । तत्तत्कालेषु भिन्नभिन्नोऽपि तत्तद्युगधर्मः अवश्यमेव परिपालनीयः इत्यभिप्रैति भगवान् ।

नैष्कर्म्यस्य निष्क्रियशांतेश्च दुरंतपरिणामं अनुभवतः नवभारतस्य अद्य एतत् क्रियानिमंत्रणं कर्मयोगोपन्यासः कार्यप्रवर्तकप्रेरणा च विशेषतः फल-कारिणः इति मे मतिः । अयं च कर्मशब्दः आधुनिकदृष्ट्या समाजसेवा सामाजिककल्याणकारिणी कृतिः राष्ट्रकार्यं लोकहितार्थव्यापारः इत्याद्यर्थेऽपि उपयोक्तुं शक्यते । तथाविधमेव हि कर्म गीताभिप्रेतं कर्म । परंतु एतत्सर्वमपि

कर्म आत्मार्पणबुद्ध्या कृतं भवेत् इत्येव गीतातात्पर्यम् । कर्तव्यमित्येव हि सर्वमपि कर्म कार्यम् । फलाशा तु सर्वथा त्याज्या । "कर्मण्येवाधिकारस्ते मा फलेषु कदाचन" । तावता तत्कर्म निष्फलं भवतीति नार्थः । सत्कर्मणः सत्फलं तत्क्षण एव अदृश्यमानमपि—अस्त्येव । 'नहि कल्याणकृत्कश्चित् दुर्गतिं तात गच्छति' ।

श्रीभगवद्गीतासंदेशः न एकपक्षीयः न एकजातीयः न वा एकधर्मीयः । न खलु श्रीकृष्णः विशिष्टजातिमतपक्षीयव्यक्तिं निमित्तीकृत्य गीताम् उपदिदेश । अत्र अर्जुनः निमित्तमात्रमिति 'निमित्तमात्रं भव सव्यसाचिन्' इत्यादिना भगवानेव कंठरवेण आह । विश्वघटकयावद्व्यक्तिविशेषानप्यन्वेति गीतातत्वोपदेशः । 'स्त्रियो वैश्यास्तथा शूद्राः तेपि यान्ति परां गतिम्' । एतच्च विश्वजनीनत्वं जगदुद्धारपथप्रदर्शकत्वमेव हि अस्य गीताग्रंथस्य सर्वजातीय सर्वमतीय सर्वविधजनसमुदायादरणीयतायां मुख्यबीजम् । अस्यां च गीतायां मम कोपि विशेषः प्रतीयते येन सहस्राधिकवर्षेभ्यः प्राक् विनिर्मितोपि अयं ग्रंथः क्षणे क्षणे नवनवतामुपेयिवान् , स्वरसरमणीयतां व्यनक्ति येन च अत्र प्रतिपादितानि तत्वानि गतार्थानि पर्युषितानि अकालिकानि वा कदाचिदपि न संभवन्ति । अत्र परिदृश्यमाना सुसूक्ष्मा संशोधनप्रणाली समालोचनाप्रकारः कर्मचोदना वैचारिकविप्लवेऽपि भावनासंघर्षेऽपि सौम्य साम्यदृष्ट्या विधीयमाना तत्त्वपरीक्षणा इत्येवमादिकं अभूतपूर्वमेव वर्तते । अस्याः विरचनानंतरं सार्धद्विसहस्रसंवत्सरेषु सर्वदा विपरिवर्तमानः भारतवर्षः नैकवारं नैकधातिं नैकशः प्रगतिं परागतिं पुरोगतिं अधोगतिं क्वचिदुन्नतिं कदाचित् उत्कर्षं च समाप्नोत् । नवनवीनाः अनुभवाः नवनवा विचाराश्च एकैकश आगताः । ते च सर्वे गीतात एव ।

---

# "श्रीभगवद्गीता"

ले०—पं. श्रीघनश्यामचन्द्रशास्त्री 'विद्यामार्तण्डः'
प्रिन्सिपल् श्रीऋषिकुल सं. कॉलेज, लक्ष्मणगढ.

समुत्थाय कल्ये मनोरोधपूर्वं प्रणम्यांघ्रिपद्मं मुरारेरपूर्वम् ।
सुशास्त्रश्रुतिव्राततः संगृहीता सदा गीयतां पीयताञ्चेशगीता ॥ १ ॥

सदा कर्मभक्तिप्रकाशस्वरूपा मुनीन्द्रैर्विचेयाऽनिशं वीतरागैः ।
भवव्यालदष्टैः सुधात्वेन पीता सदा गीयतां पीयताञ्चेशगीता ॥ २ ॥

महाभारते दिव्यभासंयुतेयं शिरोरत्नभूता चकास्ति प्रसिद्धा ।
जगद्बन्धहर्त्री परित्रातभीता सदा गीयतां पीयताञ्चेशगीता ॥ ३ ॥

हरिस्वान्तपद्माटवीसंविहारा निरस्तासुरीभावदैवीयसंपत् ।
सुधास्राविणी त्यागशिक्षापरीता सदा गीयतां पीयताञ्चेशगीता ॥ ४ ॥

सुखं त्यागसाध्यं न तर्कादिगम्यं परं ब्रह्म सच्चिद्घनानन्दरूपम् ।
गुरूपास्तिनिष्कामभावोपवीता सदा गीयतां पीयताञ्चेशगीता ॥ ५ ॥

जगद्गुर्विदं भारतं यत्प्रसादात् वितीर्यात्मतत्वं त्रिदेशेऽपि तुङ्गम् ।
महाभ्याससद्धर्म्मतत्त्वोपनीता सदा गीयतां पीयताञ्चेशगीता ॥ ६ ॥

हरन्ती कदम्बं मनःकामनादेर्नयन्ती पदं वेदवेदान्तगम्यम् ।
प्रपन्नार्तिशान्त्यै भवे पूतसीता सदा गीयतां पीयताञ्चेशगीता ॥ ७ ॥

पवित्रे सहस्यप्रगण्ये सुमासे तिथौ वैश्वदेव्यां वलक्षेऽवतीर्णा ।
सुधीभिर्जनैर्निर्विरोधं निपीता सदा गीयतां पीयताञ्चेशगीता ॥ ८ ॥

## विद्यार्थिनामुद्यानम्

# "अतिलोभो न कर्तव्यः"

(ले०—विद्यार्थी **देसाई विनायकः श्रीशङ्कराचार्यमठ** कोल्हापूर)

यत् नाम वदन्ति शास्त्राणि 'जेतव्याः षड्रिपवः इति । तेषु लोभोऽपि प्रतिवसति । लोभाधीना मनुजाः कथं नश्यन्ति इत्यस्मिन्विषये अस्ति एका आख्यायिका । कस्मिंश्चिद् ग्रामे विष्णुदासशर्मा ब्राह्मणः प्रतिवसति स्म । सः भगवद्भक्त्या स्वनामसार्थं कुर्वन्नपि माधुकर्या वृत्त्या उपजीविकां करोति स्म । भैक्ष्ययाचनाय गच्छति विष्णुदासे मार्गे कोऽपि तेजसा गभस्तिमालीव वर्णेन नारायण इव व्याघ्रचर्मपरिधानात् कैलासपतिर्यथा जटाधारी आविर्बभूव । दीप्तिमन्तं तं दृष्ट्वा अयं कोऽपि महापुरुषो भवेत् इति बुध्या तेन प्रणामः अकारि । वन्दनसंतुष्टः जटाधारी 'वरं प्रार्थय, इत्यवदत् । लोभाधीनेन विष्णुदासेन प्रार्थितम् मद्दारिद्र्यमशेषतो नश्यतु इति । महापुरुषेणापि 'सुवर्णनाणकान्दास्यामि भिक्षावस्त्रं प्रसारय, इति कथितम् । ततश्च तस्मिन्वस्त्रे नाणकप्रक्षेप आरब्धः । कतिपयनाणकदानानन्तरं अभाषि जटाधारिणा एतावदेव 'अलमिति, । किमिति चेत्, तव जर्जरीभूताद् वस्त्रात् नाणकानि भूमौ पतेयुः भूमौ पतिष्यन्ति तर्हि मृत्तिकासाद् भविष्यन्ति इति । किन्तु लोभरिपुजितचेतसा तेन अभाणि । 'मुष्टिप्रमाणानि नाणकानि प्रक्षेप्तुम् अर्हति अत्र भवन्तः । ततः जटाधारिणा प्रक्षिप्तेषु नाणकेषु तद् वस्त्रं सहस्रधा भूतम् । तस्मात् सर्वाणि नाणकानि अवनौ पतितानि मृद्भूतानि च । अनन्तरं साधुपुरुषेणापि तिरोबभूवे । ततः स्वभागधेयं दूषयन् गृहमागतो विष्णुदासः जायया ऽवोचि 'अतिलोभो न कर्तव्यः, इति प्रत्यहं भणामि । किन्तु भवद्भिः एतन्न श्रूयते तस्येदं फलम् इति ।

---

# किञ्चित्परिचयः

## नन्दनन्दनकारुण्यान्नन्दनो नन्दनो भवेत् ॥

इन्दिरारमणस्य करुणारसनिष्यन्दान्नूतनोऽयं यथार्थनामा नन्दनसंवत्सरो चेतरमानन्दं कन्दलयतु नन्दिनीमधुरवाणीमुखेन वाचकवृन्दस्य । चैत्रोऽयं मासोऽपि चित्रां चमत्कृतिं संचारयतु चेतसि विचक्षणानां वाचकानाम् । वाण्या एतदङ्कगताः विख्यातलेखकानां सरसाः समुद्बोधका गवेषणात्मकाश्च-लेखा अपि नूनं मनीषिणां मनांसि विनोदयेयुरिति मन्यामहे । अत्राङ्के प्रथमं प्रान्ताधिपानां श्रीमाधवराव अणे महाभागानां नन्दनसंवत्सरस्वागतं नूनमा-स्वागतमेव सुरवाणीप्रणयिनां हृदयग्राहिणाऽऽशंसनेन शासक-शास्यजनोपदेश-नेन । संपादकस्य संपादकालोकः— चेतयति चेतः संस्कृतसाहित्यसुधारणे तुषां नवदृष्टिविधानेन । श्रीराजकवीनामस्मत्प्रियसुहृदां श्रीकृष्णमूर्तिशास्त्रिणां हारोपहारोऽपि नवप्रकाशं जनयति संस्कृतोदासकानां चेतति गाढमन्धकारं स्य । शिक्षकमहाविद्यालये (बी. टी. कालेज) प्राध्यापकानां लेखः दृशप्राध्यापकापूर्वग्रन्थपरिचयमिषेण संस्कृतोन्नतिपथं प्रदर्शति । पुनस्तादृश-प्रदानेन संस्कृतप्रचारावश्यकतां बोधयेयुरमी महाभागाः । एम्. ए. वीधराणां वे. गोपालाचार्याणां मेघसंदेशसारास्वादनी बाढं स्वादुतमैव । भूषणश्रीभुजबलिशास्त्रिणा वादीभसिंहकविविषयकः संशोधनात्मको लेखोऽपि सङ्गम एव । पं. श्रीवासुदेवचार्याणां क्षत्रियाणी मृणालिनी भारतरमणीषु भावमाविर्भावयति । बी. ए. श्रीरावळेमहाभागा अपि स्त्रीणां कर्मचारिपदनिषेधनानर्थकरत्वं प्रतिपाद्य सुधारकाणां पटलदूषितनयने लिम्पन्त्यञ्जनम् । भारतमन्त्रिणां पं. जवाहिरलालनेहरूमहाभागानामनूदितो लेखो महतीमेव बोधयति श्रीभगवद्गीतायाः । विद्यामार्तण्डानां श्रीघनश्यामशास्त्रिणां भगवद्गीतावर्णनपराः कविता अपि गीतारसपाने जनयन्त्यभिरुचिम् । विद्यार्थिनामुद्यानमपि हृद्यमेव । अस्मिन्नुद्याने विद्यार्थिनो विहरणे प्रवर्तेरन्निति आशास्महे । एवं चास्मिन्नङ्के भारतप्रधानमन्त्रिणः प्रान्ताधिपाः प्राध्यापकाः महामहोपाध्याया राजकवयः महाविद्यालयाध्यक्षा विद्यामार्तण्डाः पण्डिता विद्यार्थिनश्च विलसन्तीति महद्भाग्यमेव मधुरवाण्याः ।

---

॥ श्रीशः शरणम् ॥

# मधुरवाणी

## संस्कृतमासपत्रिका



संचालकः

पं. गलगलीरामाचार्यः

संस्कृतसाहित्यरत्नम्

सम्पादकः

पं. गलगलीपण्ढरीनाथाचार्यः

---

१८७४ शकस्य

वार्षिकं मूल्यम् रूपकपञ्चकम्

बा ग ल को ट

# अनुक्रमणिका

॥ श्रीशः शरणम् ॥




सुधानिष्यन्दिन्या मधुरमधुरालापकलया खलावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

१७ वर्षे ] मार्गशीर्षाङ्कः [ ९ संचिका

★ ★ ★

## अवश्यमाद्रियमाणा सूचना

मधुरवाण्याः त्रयोऽङ्का अवशिष्टा अस्मिन्सप्तदशे वर्षे । समये लभ्येरन्नेव ते ग्राहकमहाभागैः । लब्धमेव षोडशवत्सरेऽङ्कत्रयम् । आगामिमाघमासीयाङ्कः अदत्तमूल्येभ्यः व्ही. पी. द्वारा प्रेषयिष्यते । अवश्यं मोचनीया सा ग्राहकैः । पोषणीया मधुरवाणी सुरवाणी सुरवाणीसेवापरायणा । व्ही. पी. परावर्तनेन विपद्गर्ते न निपातनीया प्रथममेव सङ्कटग्रस्ता वाणी । अधिकव्यर्थव्ययानपेक्षिभिर्वाचकैः सत्वरमेव धनादेशद्वारा मूल्यप्रेषणं वरमुभयोः ।

व्यवस्थापकः

★ ★ ★

देवाः प्रार्थनया प्रसन्नमनसोऽभीष्टप्रदानोन्मुखाः ॥
धिक्कुर्वन्ति तृषाऽतुरानपि जनान् वार्भिः समृद्धाब्धयः ।
वार्तापत्रकवाचका नु गुरवः शिष्या अमीषां किमु ॥ १ ॥

॥ श्रीशः शरणम् ॥




सुधानिष्यन्दिन्या मधुरमधुरालापकलया खलावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

१७ वर्षे ] मार्गशीर्षाङ्कः [ ९ संचिका

## मङ्गलम् ।

श्रीगीताप्रसवालयो गुरुकुलं जिज्ञासुगाण्डीविनः ।
क्लैब्याद्यामयहारिभेषजगृहं नृत्याङ्गणं मारुतेः ॥
चित्रो विश्वनियन्तृयन्तृमहसा धाराधरश्रीधरो ।
जैत्रः कोऽपि रथो मनोरथपथे भायात्सदा संचरन् ॥

## मासावतरणिका ।

मार्गस्थान् स्मरमार्गणैर्वितनुते यः स्वर्गमार्गानुगान् ।
त्यक्त्वा मार्गाति मानिनीश्च यमिनां वर्गोऽपवर्गादिकम् ॥
यस्मिन्नेवमपि प्रशस्तिमयते यो मोक्षशास्त्रेऽप्यहो ।
" मासानां ननु मार्गशीर्ष " इति तन्मासोऽयमुज्जृम्भते ॥

## सुभाषितम् ।

यच्छन्त्येव समृद्धवारि जलदा नप्रार्थनापेक्षिणः ।
देवाः प्रार्थनया प्रसन्नमनसोऽभीष्टप्रदानोन्मुखाः ॥
धिक्कुर्वन्ति तृषाऽतुरानपि जनान् वार्भिः समृद्धाब्धयः ।
वार्तापत्रकवाचका नु गुरवः शिष्या अमीषां किमु ॥ १ ॥

# संपादकालोकः

## NOW OR NEVER

## श्रीराजेन्द्रप्रसादस्य संस्कृतनिष्ठा

अस्माभिः गताङ्के भारतभाग्यविधातुः श्रीपण्डितजवाहरलालनेहरू-महोदयस्य संस्कृतभाषाविषयको ज्वलदभिमानः निरतिशयादरश्च तदीया एव ग्रन्थगताः काश्चित्पङ्क्तीः उद्धृत्य प्रदर्शितः । तथाऽधुना राष्ट्रपतेः श्रीबाबूराजेन्द्र-प्रसादस्यापि संस्कृतनिष्ठां सातिशयश्रद्धां गौरवबुद्धिमादराभिमानादिकं च प्रदर्शनीयमास्ते । अचिरादेव काशीनगरनिर्वर्तितायाः संस्कृतविश्वपरिषदोऽध्यक्षीय व्यासपीठमारूढेन राष्ट्रपतिना श्रीराजेन्द्रप्रसादेन कृतं भाषणं वृत्तपत्रेषु अनुवाचितवतां समेषामपि सचेतसां प्रायः तदीयं संस्कृतप्रेम-पक्षपात-विश्वासादिकं सुपरिचितमेव आस्ते । न एतावदेव न इदानीमेव । किन्तु महीयस एव अनेहसः किम्बहुना बाल्यादारभ्यैव संस्कृतप्रणयी सुरभारतीचरणपरिचरणपरायणश्चायं श्रीराजेन्द्रप्रसादमहोदयः । तेन च बहोः कालात् प्रागेव 'कथं स्यात् संस्कृतोन्नतिः' नामकः कश्चन ग्रन्थोऽपि निर्मित आस्ते । संस्कृतसाहित्योत्कर्षतर्षाकुलेन अनेन राजेन्द्रप्रसादमहोदयेन तदा वृत्तपत्रेषु सुरसरस्वतीसमुन्नतिप्रयोजकाः तदुत्कर्षा-वहोपायपरिचिन्तनपरा नैक एव स्फुटलेखाः लिखिता एव । यथावकाशं मधुर-वाण्यां तान् प्रकटीचिकीर्षामः। गतमासे काश्यां तेन सभक्तिभावं विहितं पण्डित-मण्डलस्य पूजापादप्रक्षालनादिकमपि तदीयां संस्कृतनिष्ठां श्रद्धां बुद्धिं च सम्य-गभिद्योतयति । विश्वसंस्कृतपरिषदः अध्यक्षीये भाषणेऽपि संस्कृतस्य सार्वत्रिक-प्रसारण-विश्वविस्तारण-सर्वाङ्गीणाभिवर्धनादिविषये महती एव हि चिन्ता आतुरता उत्कण्ठा च प्रकटीकृता । तदवलोकनेन साधु प्रतीयेत तदीयः संस्कृतविश्वासः । तस्मिन् भाषणे तेन प्रकटीकृता संस्कृतस्य उन्निनीषा उद्दिधीर्षा वा यदि कृतिप्रपञ्चे अवतरति हन्त तर्हि मण्डितः खलु संसारः। जितं खलु वाग्देव्या । उल्लसितम् आर्यविद्यया । उल्हसितं च सनातनसंस्कृत्या।

एतादृशसंस्कृतप्रिय-संस्कृतज्ञ-संस्कृतप्राणायमानेऽपि महात्मनि राष्ट्रपतिपदवीमलं-कुर्वाणेऽपि यदि संस्कृतस्य अनवस्थातादवस्थ्यम् तदा हा हन्त जितं कलिकालेन, मृतं सुरभारत्या। उल्लसितमधर्मेण। यदि नेदानीमपि संस्कृतोन्नतिः तदा न कदाचिदपि संस्कृतोन्नतिः। यदि नेदानीमपि पण्डितमार्तण्डानामादरोपचाराः तदा आप्रलयमपि तेषां नैवादरः नवोपचारः। यदि नेदानीमार्यविद्याया गौरवं तदा यावच्चन्द्रदिवाकरौ न तद्गौरवप्रत्याशा नाम। आकल्पमियमेव एवमेव इतोऽप्यधिकैव वा, दुर्दशा संस्कृतस्य संभवेत्। न पुनः प्रत्युत्थानस्य संभा-वनापि। सर्वत्र धिक्कारः सार्वजनिकः न्यक्कारः सर्वतोमुखश्च तिरस्कारः भवेत् खलु सुरभारत्याः। संस्कृतपण्डितानां च "मरणमथवा दूरगमनम्" एव। यतो हि तदानीन्तनी तेषां दुरवस्था 'मरणादतिरिच्येत'। अत इदानीमेव श्रीराजेन्द्रप्रसादस्य सर्वाधिकारित्व एव राष्ट्रपतित्व एव विश्वपरिषदाध्यक्ष एव संस्कृतकार्यं संसाधनीयम्। सुरभारत्याः सार्वत्रिकी प्राणप्रतिष्ठा सत्वरं निर्व-र्तनीया। नाद्य चेत् नहि जातुचित्।

भारतीयानां विशेषतश्च संस्कृतविदुषां सुदैवतः सुरभारत्याश्च शुभादृष्टेन भारतराज्यस्य केन्द्रवरिष्ठाधिकारिषु श्रीमान् राजेन्द्रप्रसाद एक एव न संस्कृतपक्षपाती किन्तु बहव एव किंबहुना, प्रायः सर्वे एव सचिवोत्तमाः संसदध्यक्षीपाध्यक्षाः प्रादे-शिकराज्यपालाः प्रान्तिकमन्त्रिणः लोकसभासभासदश्चापि संस्कृतप्रणयिनः संस्कृतो-त्कर्षैकप्रवणमानसाः सुपरिचितसंस्कृतमहामहिमान एव हि विद्यन्ते विद्योतन्ते च। अत एव अद्य संस्कृतोद्धारप्रयत्नानां ससंभ्रमस्वागतं पुष्टिः पृष्ठबलं सहानुभूतिः सहकारश्च लप्स्येरन्नित्यत्र नास्त्येव तिलतुलोऽपि सन्देहः। देहलीदीपेषु निक्षिप्यतां तावच्चक्षुः। कियन्तो वा तत्र हन्त विलसन्ति सन्तो महान्तः संस्कृतज्ञानवन्तः संस्कृतानुरागवन्तः कीर्तिमन्तः धीमन्तः श्रीमन्तः केन्द्रमणयः नायकोत्तमाः।

## अद्वितीयसंस्कृतपण्डितः श्रीराधाकृष्णन् महाभागः

अद्य भारतस्य उपाध्यक्षपदे विराजमानेन श्रीसर्वपल्लीराधाकृष्णन् महो-दयेन सदृशः महापण्डितः शुद्धसंस्कृतपण्डितसमाजेऽपि अन्विष्यऽपि किमुपलब्धुं शक्यते ? तदीया शास्त्रार्थविमर्शनचातुरी पुराणपरीक्षणपाण्डिती वेदवेदाङ्गविवे-

चनवैदुषी वेदान्तसिद्धान्तसमीक्षणवैशारद्यं षड्दर्शननैपुणी च विश्वविश्रुता आश्चर्यकारका विद्वदानन्दसन्दायकाश्च विद्यन्ते। तेन राजाजीराजेन्द्रादिवत् एल्एल्.बी. त्यादिपरीक्षासु विधिशास्त्रं नैवाधीतम्। श्रीजवाहरवत् इतिहासभूगोलराज्यशास्त्राद्यध्ययनमपि पृथक् न कृतम्। जयप्रकाशनारायणादिवत् समाजवादसाम्यवादाभ्यासोऽपि न पार्थक्येन कृतः। किन्तु तेन हि द्रविडदेशालङ्कारेण क्रकचकर्कशोऽपि हि तर्कः उदर्कभूतिमिच्छता आमूलमधीतः। अतिविस्तृतेऽपि शब्दाब्धौ लब्धमेव वैदग्ध्यमनेन प्रगल्भप्रतिभेन। अयं खलु मीमांसितपूर्वोत्तरमीमांसामांसलमतिः सकलवेदान्तविद्वान् श्रीराधाकृष्णन्महोदयः प्रबुद्धबुद्धिः बौद्धागमे, सविशेषशेमुषीकः वैशेषिकनये, असदृशः सङ्ख्यावान् साङ्ख्ये, सकलमर्मज्ञः धर्मशास्त्रे, निरुपमप्रतिभः निरुक्ते नितरां राराजते निखिलेऽपि भूतले निस्सपत्नपाण्डित्येन। अयं हि राधाकृष्णन्महोदयः संपूर्णतया संस्कृतपुरुष एव। सुरभारतीप्रसादबलेनैव संस्कृतपाण्डित्यप्रभावेणैव आंग्लभाषायां संस्कृतस्वारस्यसौन्दर्यसौष्ठवादिगुणगणगाम्भीर्यप्रकाशनप्रवचनादिभिरेव हि अनेन इयती ईदृशी अन्यादृशी एव हि कीर्तिः, अलघिष्ठैव हि प्रतिष्ठा च जगति समासादिता। विशालेऽस्मिन् धरातले क्वचित् क्षोणीकोणकुलायनिलीनोऽयं दाक्षिणात्यपण्डितः यदद्य जगद्वन्द्यमहामहाविभूतिपुरुषाणां राजकीयसूत्रधारिणां प्रमुखराज्यधुरन्धराणां च मणिमालिकायां गणनामानं समाप्नोति यदद्य भारतराष्ट्रोपाध्यक्षपदे विराजते तदेतत्सर्वमपि सुपर्वसरस्वतीसमाराधनफलमेव।

## "अन्ये केचित् संस्कृतनिष्ठा नेतारः"

भारतीयसंसदध्यक्षाः श्री जी. व्ही. माणवणकरमहोदयाः संस्कृतप्राणरक्षार्थं बहुविधप्रयत्नान् अकुर्वन् चिकीर्षन्ति चाद्यापि। तथा भारतसर्वकारस्य अर्थमन्त्रिणः श्री सी. डी. देशमुखमहोदयास्तु यत्र यत्र संस्कृतोद्धारप्रयत्नाः प्रचलन्ति, तत्र तत्र स्वकीयां सहानुभूतिपरां दृष्टिं विकिरन्ति, सहायं च कुर्वन्ति, सहानुभूतिं च प्रदर्शयन्ति। भारतस्य गृहमन्त्रिणः श्रीकैलासनाथकाटजूमहोदया अपि "संस्कृतमेव राष्ट्रभाषा भारतस्य भवेदिति" सधैर्यं

प्रतिपादयन्ति । तत्र च स्वसहकारिणां नेहरूप्रभृतीनां विरोधमपि नैव गणयन्ति । श्रीकैलासनाथस्य दृढनिश्चयः बहुष्वेव संस्कृतपण्डितेष्वपि नैवाऽस्ति । गृहोपमन्त्रिपदे च विराजमानाः श्रीबळवन्तरावदातारमहोदयास्तु न केवलं संस्कृताभिमानिनः किन्तु संस्कृतपण्डिता अपि विद्यन्ते । एम्. ए. परीक्षायां तु तैः वेदांतविषये झालावेदान्तपारितोषिकं लब्धम् । संस्कृतोत्कर्षाय मधुरवाणीसमुन्नतये च तैर्महानेव प्रयत्नः विहितः विधीयते च । वाणिज्यमन्त्रिणः श्री डी. पी. करमरकरमहोदया अपि बाल्यादारभ्यैव संस्कृताभ्यासिनः संस्कृतविषयमेव गृहीत्वा सर्वपरीक्षास्वपि प्रथमश्रेण्यामेव उदतीतरन् । मधुरवाण्याः बागलकोटनगरे प्रकाशनसमारम्भः तैरेव निर्वर्तितः । भारतस्य भूतपूर्वमन्त्रिष्वपि श्रीकाकासाहेब-गाडगीळप्रभृतयः बहव एव संस्कृतभक्ता महनीया आसन् । अद्यापि केन्द्र-संसत्सदस्येषु शताधिका एव जनाः संस्कृताभिज्ञाः संस्कृतस्य महत्वं जानाना वर्तन्त एव । भारतस्य प्रायः सर्वे अपि राज्यपाला संस्कृताभिमानिन एव । विहारस्य भूतपूर्वराज्यपाला श्रीलोकनायकअणेमहोदयाः स्वतः संस्कृतज्ञा संस्कृत-गद्यपद्यरचनापटीयांसो विद्वांस आसन् । विहारस्य अद्यतनराज्यपालाः श्रीमन्तो धीमन्तः श्री आर. आर. दिवाकर महोदया अपि महावेदान्तिन एव । एभिः स्वमातृभाषायां प्रायः सर्वेऽपि उपनिषद्ग्रन्था अनूदिताः । तदुपरि विचारात्मकप्रबन्धा अपि प्रकटीकृताः । संस्कृतपुनरुत्थानार्थं तैरपि महान् प्रयत्नश्चिकीर्ष्यते ।

उत्तरप्रदेशराज्यपालानां श्री के. एम्. मुन्शीमहोदयानां तु संस्कृत-समुत्कर्षैकबद्धदीक्षता तु विश्वविश्रुतैव वरीवर्ति । मुम्बापट्टणे समुद्रतीरे गगनचुम्बिना सुवर्णशृङ्गेण विराजमानं भारतीयविद्याभवनसंस्थाया दिव्यभव्यं महामन्दिरमेव तदीयात्युत्कटसंस्कृतप्रेम्णः नित्यसाक्षिभवति । मद्रासप्रान्तराज्यपालाः श्रीप्रकाशमहोदयास्तु आनुवंशिकपण्डिता एव । तत्पितृचरणानां श्रीबाबुभगवान-दासमहोदयानां संस्कृतपण्डित्यं धर्माभिमानः आर्यसंस्कृत्यादरश्च सुविदिता एव समेषामपि भारतीयानां विशेषतश्चोत्तरेयाणाम् । तदनुगुणपुत्रा एते श्रीप्रकाश

महोदया अपि संस्कृतपाण्डित्यभाजः संस्कृतोत्कर्षसाधकप्रयत्नोन्मुखा एव विद्यन्ते। मध्यप्रान्तराज्यपालानां श्रीपट्टाभिसीतारामय्यामहोदयानामपि संस्कृतविषये महीयानेव आदरः गरीयानेव विश्वासः वरीयानेव च पक्षपातः। एवं प्रतिप्रान्तं शतशः संस्कृतज्ञाः संस्कृतप्रसारकामुका उच्चाधिकारस्थानेषु विराजन्ते। महदिदं सन्तोषास्पदं यदियत्यां सङ्ख्यायां ईदृशाः महामहामान्यव्यक्तयः संस्कृतपुरस्कर्तार एव सर्वोच्चाधिकारस्थानेषु सन्ति विलसन्ति च। न कदाचिदपि प्राक् पुरस्ताद् वा एतावन्तः संस्कृतप्रणयिनः अधिकारस्थानमानादिकमलभन्त लप्स्यन्ते वा। भोजविक्रमादिकालेष्वपि इयन्तः संस्कृतपण्डिता राजकीयकार्यक्षेत्रेषु पात्रमगृण्हन्नवेति सन्देग्धि न श्वेतः। अनया दृष्ट्या विचार्यमाणे अयं हि सुवर्णयुग एव सुरसरस्वत्याः। उच्छ्रायकालः आर्यविद्यायाः। अपूर्वयोगः वैदिकवाङ्मयस्य। महान् सुसन्धिश्च प्राचीनप्रणालीमनुसृत्य समधीतसकलश्रुतिशास्त्राणां विपश्चिताम् **"कालाय चास्मै नमः"**।

## किमलभ्यं भगवति प्रसन्ने नेतृसद्गणे।

एते सर्वेऽपि संस्कृतस्य समुन्नतिं मनसा कामयमाना अत्युच्च-उच्चतर-उच्चतमस्थानेषु सुरसरस्वत्या अनुग्रहबलादेव अद्य विराजमानाः संस्कृतपुरुषाः श्रीराजेन्द्रप्रसाद-राजगोपालाचार्य-सी. डी. देशमुख-माळवणकर-कैलासनाथकाटजू-डी. पी. करमरकर-बी. एन्. दातार-आर्. आर्. दिवाकर-के. एम्. मुन्शी-श्रीप्रकाश-पट्टाभिसीतारामय्या-बी. जी. खेर-एन्. व्ही. गाडगीळ-अनन्तशयन अय्यंगार-बाबूसंपूर्णानन्द-बेनगल्नरसिंगराव-न्यायमूर्तिपतञ्जलिशास्त्रि-महीशूर-राजप्रमुख-त्रिवेन्द्रं नरेन्द्र-आचार्यनरेन्द्रदेव-डॉ. अमरनाथझा-श्रीराधाकृष्णन् प्रभृतयः संस्कृतप्राणाः महामहाव्यक्तयः अन्ये च तत्तत्प्रान्तप्रसिद्धा मन्त्रिणः विश्वविद्यालयकुलोपकुलगुरवः राजमहाराजा उच्चावचाधिकारिणः देशभक्ताः तेजस्विनः वर्चस्विनः प्रभावशालिन आचार्यपुरुषाश्च संभूय एककण्ठेन ऐकमत्येन एककालावच्छेदेन एकमुखं प्रयत्नम् एकदाऽपि वा यदि आकलयन्ति तदा इयं नाकसरस्वती एकक्षण एव भारतस्य एकमात्रराजभाषा राष्ट्रभाषा लोकभाषा च संभवेत्। इयतां महतां जनानां मनसि संस्कृतस्योत्कर्षः अवश्यं

वेदेव, अस्माभिश्च तस्यां दिशि अवश्यं प्रयतनीयमेव इति यदि एकः विचारोपि सकृदपि परिस्फुरेत् हन्त तदा किमिव हि असाध्यं नाम। किं वा लभ्यमप्राप्यं च भवेत्। यद्येते सर्वेऽपि अधिकारस्थानाधिरूढा महनीयाः नः कुर्युः एकछोटिकावादनावधौ एव अक्षिपक्ष्मस्पन्दनावकाश एव च पुनरुद्धूयेत देवभाषाविजयध्वजः देशे सर्वत्रापि। पुनरपि संश्रूयेत गृहे गृहे वृन्दारकवाणीविजयदुन्दुभिमन्द्रनादः।

## संस्कृतपण्डितानां कर्तव्यम्।

मान्याः पण्डितपुरन्दराः सत्यमयं सुवर्णसन्धिरेव सुरभाषासमुन्नतिसिषाधयिषूणाम्। यद्यपि भवादृशा एव संस्कृतज्ञा अद्य 'उच्चस्थानेषु पूज्यन्ते' तेषामपि मनासि सुरभारतीसमुत्कर्षे अवश्यं भवेदेवेति अत्युत्कटा इच्छापि विवर्ति। परन्तु कार्यबाहुल्यात् इतो विचारं कर्तुं स्वतः प्रयत्नं समास्थातुं अवकाशः नास्ति। परन्तु यदि कोऽपि तथाविधं प्रयत्नं करोति तदा तत्सकाशात् सर्वविधोपि सम्पूर्णः सहकारः सहानुभूतिः साहाय्यादिकं सबहुमानमवश्यं प्रदीयेत। अत्र अचिरात् काश्यां प्रवृत्ता विश्वसंस्कृतसाहित्यपरिषदेव ज्वलत्साक्षीभावमावहति। तत्परिषदाध्यक्ष्यं स्वतः राष्ट्राध्यक्षेणैव समूढम्। "पुनन्तु मां ब्राह्मणपादपांसवः" इति धिया प्रक्षालितानि आनन्दबाष्पधाराभिः भक्तिस्रोतसा च सह महामहापण्डितमार्तण्डानां चतुःशतपादपुण्डरीकाणि। मान्याः पण्डितवरेण्याः सत्यं कथयन्तु धर्मराजानन्तरं केन वा राज्ञा राजप्रमुखेन वा अद्ययावत् "**कदा वा प्राज्ञानां पदकमलमक्षालि सलिलैः**"।

## सुधीपद्धूलीभिर्नृपवरकिरीटोऽधिरुरुहे?

परमेतावता संस्कृतपण्डितैः "यदा समग्रराष्ट्रस्य एकमात्रप्रतिनिधिः अस्मत्पादपीठप्रणतो भवति तदा समग्रराष्ट्रमेव अस्मत्पादाक्रान्तमभूदिति न हर्षोन्मादमत्तचित्तैः स्वस्थं निश्चिन्तं चोपवेष्टव्यम्। अस्य च पूजाप्रकारस्य अयमेव तावानेव च अर्थः भवितुमर्हति यद् "अद्यतनसर्वकारः न सर्वथा संस्कृतविरोधी मातृविद्रोही वा वर्तते। अद्य यदि संस्कृतोद्धाराय येन केनापि वा पुरुषोत्तमेण यया कया च विधया संस्थया वा प्रयत्नः क्रियेत, अथवा वर्चस्वि-

पुरुषद्वारा संस्कृतप्रसारप्रचाराद्यर्थे सर्वकारः आगृह्येत तदा सर्वकारात् पर्याप्तं साहाय्यं प्राप्तुं शक्येत। इदानीं सर्वकारीयभद्रस्थानेषु संस्कृतप्रिया एव भूयांसो वर्तन्ते। संस्कृतार्थे साहाय्यं कर्तुमिच्छापि तेषु नित्यं जागर्ति। किं तु "योजकस्तत्र दुर्लभः"। अत इदानीं पण्डितैः स्वकीयं चिरन्तनमौदासीन्यं नैष्कर्म्यं वाचंयमत्वं च सुदूरं परित्यज्य चक्षुरुन्मीलनीयम्, पाणिपादं प्रसारणीयम्, सत्वरमुत्थातव्यम्, संस्कृतस्य सर्वतोमुखप्रसाराय महानेव प्रयत्न आस्थेयः। प्रभावशालिपुरुषद्वारा संस्कृतकार्यार्थे सर्वकारीयकोषतः पर्याप्तधनाधिगमाय प्रयतनीयम्। ग्रामे ग्रामे पुनः प्रतिष्ठापनीयाः संस्कृतपाठशालाः। आङ्ग्लशाला कलाशालादिष्वपि अनिवार्यतया संस्कृताध्यापनार्थं 'स्कूलकालेजा'दि शैक्षणिकविभागेषु तथा इतरराजकीयकार्यालयेष्वपि संस्कृतपण्डितानां नियोजनाय महापण्डितानां जीवनपर्याप्तमासिकवार्षिकादिवेतनव्यवस्थादिकृते च महदेव हि आन्दोलनं कार्यम्। संस्कृतग्रन्थप्रकाशनप्रकाशितोत्तमग्रन्थपुरस्करण—संस्कृतमासिक-साप्ताहिक-दैनिकादिपत्रप्रचालन संस्कृतभाण्डागारपरिशोधन उत्तमोत्तमसंस्कृतग्रन्थानुवाद—संस्कृतपरीक्षाप्रचालन—पारितोषिक—प्रमाणप्रत्रप्रदान—संस्कृतसाहित्यसंमेलन-सभापरिषदाद्यायोजनादीनि शताधिकानि संस्कृतोन्नतिप्रयोजककर्माणि सर्वकारीयसहकारेण सामाजिकानां सहानुभूत्या च क्रमशः प्रारम्भणीयानि। इदानीं राजकीय-सामाजिकवातावरणस्य आनुकुल्येन सर्वेऽपि च शुद्धान्तःकरणेन विधीयमानाः प्रयत्नाः फलेग्रहितामवाप्नुवन्त्येव। यदि इदानीमपि संस्कृतविद्वांसः "कालाय तस्मै नमः" "बलीयसी केवलमीश्वरेच्छा" 'भवितव्यं भवत्ये'वेति पुराणवाक्यान्येव कापुरुषचर्वितानि उच्चरन्तः तूष्णीमासते, ततः ईदृशः समयः "नच पुनरावर्तते न च पुनरावर्तते"। अयं च सुवर्णसमयः न व्यर्थतां नेयः। महान्तं प्रयत्नं कृत्वा आकाशपातालौ एकीकृत्य भगीरथसाहसं कृत्वा विश्वप्रयत्नाननुष्ठायापि साधनीयं सुरवाक्कार्यं यथेयं सुरभाषा सकलनरभाषा रजकभाषा पल्लीभाषा भवेत् यथाच "सर्वं सु-संस्कृतं विश्वम्" भवेत् तथा प्राणपणेनापि पण्डितपरिषदाऽद्य प्रयतनीयम्। उत्तिष्ठत जाग्रत।

---

# अशोक सम्राट् ।



ले०—**महोपाध्याय पं. वासुदेवाचार्य बागेवाडीकरशास्त्री**
साहित्याचार्य, काव्य-तर्क-वेद-तीर्थ, **सोलापूर.**

आसीत् कस्मिंश्चिदधिष्ठाने मगधेषु कोऽपि ब्राह्मणः । तस्य नयनमनोहरा लावण्यवती कन्यका बभूव । तस्यां जातायां दैवज्ञैः कथितम्—"इयं द्वौ पुत्रौ प्रसुवीत । तयोरेकः सम्राड् भविष्यति" इति । यदा सा यौवनदशामनुप्रविष्टा तदा तां पिता राजधानीं निनाय । तत्र च मगधाधिपस्य बिन्दुसारस्य राज्ञीमुपस्थातुं राजगृहं प्रास्थापयत् । यदा स सिद्धादेशो राज्याः श्रवणसरणिं प्राप्तस्तदा सा असूयं तां कन्यकां हीनसेवयाऽवमानमगमयत् । परं सा बाला स्वमनोरथं न शिथिलीचकार न वा विसस्मार स्वभविष्यद्वादम् ।

अथैकदा प्रयतमानायास्तस्या राज्ञा बिन्दुसारेण सह सम्भाषणप्रसङ्गः समजायत । तस्मै चात्मवृत्तान्तं न्यवेदयत् । नितान्तं कमनीयतया सुशालीनतया च सपद्येव समाहितादरः सम्राट् तस्यां मनो बबन्ध । तां च परिजग्राह । एवं मौहूर्तिकवचनमवितथं सञ्जातम् । अनन्तरं सा पुत्रद्वयं प्रासूत । एकः प्रथमस्तरुणे वयसि वैराग्यं प्राप्तः । द्वितीयस्तु विख्यातः सम्राडशोकः ।

अतिक्रान्तमर्यादैरशोकस्याचरणैः पिता तस्योपरि संक्रुद्धः । अत्रान्तरे तक्षशिलायां प्रजासूपजापः समुत्पन्नः । तस्य चोपशमने राजपुत्रोऽशोकः शोकहीनो नियुक्तः । तस्य स्वच्छन्दाचरणनिरवधानो राजा सेनादियुद्धसाधनहीनं केवलं तं राजकुमारं प्रेषयामास । सोऽपि पितुराज्ञां शिरसि कृत्वा सपद्येव तक्षशिलां प्रति प्रतस्थे । स न रथिकबलं न वा पदातिसाधनमपेक्षाञ्चक्रे । एवं साधनहीनं तक्षशिलां प्रविष्टमात्रमेव निर्भीकं तं राजसुतं प्रजा उपशान्त-

वैरभावाः सर्वथा प्रपेदिरे । इत्थं राजपुत्रोऽशोकः कृतार्थस्तक्षशिलानिवासिभिः सप्रेम सादरं सत्कृतः पाटलिपुत्रं प्रति निवृत्तः ।

अथ केनचित् कालेन सम्राड् बिन्दुसारः कालवशं गतः । तदनु वीरपुङ्गवो भूपसुतोऽशोकः साम्राज्यपदमलभत । पितुः परुषतराभिर्वृत्तिभिः स प्रथमवोग्रकर्मा संजातः । तेन हि यस्मिंस्तस्याप्रसादोऽभवत् तं निष्पीडयितुमेवोचितममन्यत । सिंहासनाधिष्ठितः स केनचित् कालेन कलिङ्गानभिययौ । तत्र घोरतरं जन्यमजायत । तेन समरप्रसङ्गेन जातो विध्वंसस्तस्य चेतो बलवद् दुनोति स्म । तत्र गतभर्तृकाणां ललनानां हतपुत्राणां मातॄणां च परिदेवनैः सैनिकैर्दग्धानां वस्तूनां धूमिकाभिश्च स भृशमनुतप्तः । ततः स युद्धात् सर्वथा विरतो बभूव । स स्वपितामहश्चन्द्रगुप्त इव न्यायप्रियो नयेन महीं शशास । प्रकृतीश्च रञ्जयामास । निखिलेषु सदयो जातः । तस्य राज्ये प्राणिवधो न विहितः । तदनुरोधान्मृगयाऽपि सर्वथा प्रतिषिद्धा । तेन च न केवलं मानवानां पशूनामप्यारोग्यचिकित्सागाराणि तत्र तत्र स्थापितानि ।

स प्रजानां भूतये सर्वत्र राज्ये समचरत् । ताश्च धर्मतत्त्वान्युपादिशत् । स्थाने स्थाने सत्यमहिंसा भूतदया स्वकर्तव्यं चेत्यादीनि पालनीयानि शासनानि शिलास्तम्भेषूल्लिखितानि । स ऐच्छद् वन्या हिंस्रा अपि पशवः स्वाभाविकमात्मनो वैरभावमपहाय परस्परं स्निह्यन्त्विति । कथं मे प्रजाः सदा सन्तुष्टाः सुखिन्यश्च भवेयुरिति स सदैव चिन्तापरोऽभवत् । कोऽपि कमप्युपदेष्टुं प्रभवेन्न तु बलाद् व्यवहारयितुमिति तस्य दृढा मतिरासीत् । युद्धाभावात् प्रजाः सुसन्तुष्टा अभ्युत्थानदर्शिन्यश्च । द्रव्यसंचयाः कुशूलाश्च परिपूर्णाः । पन्थानश्च शिवा आसन् । पथिका अपि निर्भयाः समचरन् । जनाः सदैवाहुः—“एतादृशो भूमिपालो न भूतो न वा भविष्यति” इति ।

---

# कामिनीकौशलम् ।



## मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते ।

पुरा किल एकः राजाऽसीत् । स अतीव श्रीमान् इति विश्रुत आसीत् । तस्य गृहे प्रभूतान्येव उज्ज्वलतमानि रत्नानि असङ्ख्यानि च माणिक्यानि महानेव मुक्ताफलराशिः विद्रुमपुञ्जः सुवर्णनिधिः रजतशेवधिः वज्रवैभवम् अपारं चैश्वर्यं वरीवर्ति इति सर्वत्रापि कीर्तिः ख्यातिश्च दिक्षु विदिक्षु प्रससार । एतां तदीयस्य ऐश्वर्यस्य कीर्तिं श्रुत्वा केचन चोराः तस्य गृहोल्लुण्ठनार्थमागता एकस्याम् अमावास्यायां रात्रौ । तदा राजद्वारे केचन जरठाः प्रहरिणः कफ-विकारेण घुर्घुरायमाणकण्ठा उन्निद्रा इव आसन् । तदवलोक्य चोराः "पुनरेक-घण्टासमनन्तरमेव समायास्यामः । तावदवधौ निद्रावशा भवेयुः एते गृध्राः" इति विचार्य तस्यैव पट्टणस्य बहिः स्थितस्य एकस्य दरिद्रकुटीरस्य पृष्ठभागे उपाविशन् । तत्र च स्थित्वा ते कथं वा राजभाण्डागारं लुण्ठनीयम् इति परस्परं विचारविनिमयम् उपायपरिचिन्तनं चाकुर्वन् । तदैतेषां चोराणां तद्गुप्त-सम्भाषणं तत्कुटीरवासिनौ दरिद्रदम्पती सम्पूर्णमेव श्रुतवन्तौ । कुटीराधिपतिः दरिद्रनारायणस्तु भयभ्रान्तः किं कर्तव्यताविमूढः च अतिष्ठत् ।

तदा तस्य प्रत्युत्पन्नमतिः दरिद्रदयिता धैर्यमवलम्ब्य पत्युः कर्णे किमपि अकथयत् । सोऽपि कान्ताया आदेशेन धैर्यमास्थाय ओमित्युक्त्वा पृथगेकस्मिन् प्रकोष्ठे गत्वा सुष्वाप ।

ततः पञ्चषनिमेषानन्तरं दरिद्रदयिता उच्चैरवदत् "नाथ तदनर्घ्यं रत्नं तवैव समीपे तत्रैव अस्तु" इति । तदा सः दरिद्रनारायणः "अयि प्रिये तथैव भवतु । अमूल्यं मदिष्टतमं च तद् रत्नं मत्सन्निधौ एव अस्तु । तद्विषये कापि चिन्तैव मास्तु इति ।

ततः पञ्चदशनिमेषानन्तरं पुनस्सा दरिद्रदयिता पतिं प्रति "आर्यपुत्र! मुक्ताफलं तु महानसे एव अस्ति। रात्रिसमयः गाढश्चायम् अन्धकारः। अत इमं दीपमादाय तद् मुक्ताफलम् उद्धृत्य अत्र मम समीपमानय। अहमेव तां मुक्तां मत्समीपे निक्षिपामि" इति। तत् श्रुत्वा पतिराजः ओमित्युक्त्वा उत्थाय यथावदनुष्ठाय पुनः स्वस्थानं गतः। ततः पुनः अर्धहोरात्मके अतिक्रान्ते समये पुनश्च सा दरिद्रदयिता पतिं प्रति "कान्त! कनकलता माणिक्यमञ्जरी च गर्भगृहे वर्तेते ते पुनरेकवारं दृष्ट्वाऽगच्छ। अद्य अमावास्या। भीकरः गाढश्चायमन्धकारः इति। तदा दरिद्रनारायणोऽपि 'तथैव भवतु' इत्युक्त्वा तथैवाकरोत्। ततः अर्धघण्टानन्तरं पुनरपि सा पतिं "आर्य, हा हतास्मि दुर्भागा। स्मरणशक्तिरेव मम संपूर्णतया विनष्टा। यदि एवमेव प्रचलेत् अस्माकं गृहसर्वस्वमेव विनश्येत्। मया च मूढतया मुक्ताफलापूरितं मृद्भाण्डं सुवर्णशरावश्च गृहाङ्गणे एव विस्मृतौ। तौ तत्रैव वर्तेते वा नवा पश्यतु भवान्। यदि तौ गतौ सर्वस्वमेव हि गतं नः। निराधारा निराहाराश्च संपत्स्यामहे। अतः कृपया त्वर्यतां गम्यताम् आलोक्यतां मुक्तामणिमयं भाण्डं सुवर्णशरावश्च विद्येते वा न वा। अमावास्यानिशीथिनी। एतत्पट्टणमहाराजस्य ऐश्वर्यख्यातिं श्रुत्वा बहव एव चोराः तद्गृहचौर्याय प्रयतन्त इति श्रुणुमः। हन्त मूर्खाः खलु चोराः। किं वर्तते तस्य गृहे। वृथा ख्यातिः। अस्मद् गृहे एव विपुलैश्वर्यं वरीवर्ति। अहो त्वर्यताम्। सत्वरं गत्वा अस्मज्जीवनाधारभूतं तन्मुक्तामणिमयं भाण्डमन्विष्य सुवर्णशरावञ्चामृग्य आयान्तु भवन्त इह। अत्रैकस्य अत्यनर्घस्य मुक्ताफलस्य मत्सविधं सत्वेन नाहमेतत् परित्यज्य गन्तुं शक्नोमि। भवद्भिरेव गम्यताम्। न जाने का वा तस्य गतिः। किं यः कोऽपि गृहीत्वा पलायितः?। देव वेङ्कटपते यदि मदीयः सा सुवर्णशरावः मुक्तामणिपूरितं पात्रं च तत्रैव अङ्गणे तव कृपया वर्तेते, तदा श्वः शतं नमस्कारान् सहस्रं प्रदक्षिणाः लक्षनामस्मरणं च विधास्ये। स्वामिन् रक्ष रक्ष मम शरावं भाण्डञ्च' इति। ततः तत्पतिराजः दरिद्रनारायणः तत्र गत्वा तौ

तत्रैव सुरक्षितं स्थितं तद्भाण्डं तच्छरावं च गृहीत्वा कान्तायाः समीपमुपगत्य 'सुदैवमावयोः । अस्मत्कुटुम्बस्यैव सौभाग्यं यदिमे भाण्डे देवतानुग्रहेण न केनचिदपहृते चोरेण । गृहाण इदम् । इतः परमपि वा तौ गुप्तस्थाने स्थापय इति ।

चोराश्च तत्रैव स्थिता तयोर्दरिद्रदम्पत्योः तत्सर्वमपि सम्भाषणं सावधानतया श्रुत्वा एवं मिथो विचारयामासुः । अहो ! राजापेक्षया अयमेव कुटीराधिपतिः श्रीमानिवालक्ष्यते । तदेतद्विपुलतममैश्वर्यं लोकदृष्ट्या गोप्तुमेव बुद्धिपूर्वकमेवायं कुबेरकुमारः कुटीरक एव वास्तव्यमातनोति । 'खेरगोचरं यत्तु तत्रापि चोरगोचरम् । अद्य अस्यैव गृहं विलुण्ठामः । तेन प्रभूतमेवैश्वर्यं प्राप्स्यते इति निश्चित्य तयोर्निद्रासमयं प्रतीक्षमाणा अतिष्ठन् । परन्तु अरुणोदयपर्यन्तमपि ताभ्यां दम्पतिभ्याम् उपर्युक्तप्रकारेण स्वकीयैश्वर्यव्यवस्थापनव्यग्राभ्यां जागरूकाभ्यामेव अवस्थितम् । आसन्नप्राये तु अरुणोदयसमये शब्दायमानेषु च ताम्रचूडेषु तौ दम्पती सुखं सुषुपतुः ।

ततः ते चतुराः चत्वारोऽपि चोराः तत्कुटीरस्य द्वारं विदार्य कपाटं विपाट्य अन्तरागत्य सर्वत्रापि विचिक्युः । परंतु मुक्ता वा रत्नं वा कनकलता वा माणिक्यमञ्जरी वा मुक्तामणिमयभाण्डं वा सुवर्णशरावो वा न दृष्टिगोचराः समजायन्त । सर्वतोपि सुसूक्ष्मेक्षिकयाऽवलोक्यापि मृण्मयपात्राणि विना धातुपात्राण्यपि नैव समासादितानि किं पुनः मुक्तारत्नमणिमाणिक्यादिकम् । तदा अन्विष्याऽन्विष्य संश्रान्ताः संक्रुद्धाश्च ते तौ दम्पती एव उत्थापयामासुः ।

ततः तयोर्दम्पत्योः 'उरसि शिरसि पृष्ठे कक्षयोः कुक्षिदेशे खरकरनखराग्रैः ताडनोत्पीडनानि । मुहुरपि च कपोलयोराशु दत्वा चपेटीः कनकमणिसुमुक्ताः कुत्र चेत्यन्वयुञ्जन्' । तत्र च एकः चोरनायकः पुरस्सृत्य चञ्चच्छुरिकामेकां प्रदर्श्य जगाद—'युवयोः रत्नं मुक्ताफलं कनकलतां

माणिक्यमञ्जरीं सुवर्णशरावं मुक्तामणिमयं च भाण्डं यदि सत्वरं समर्पयथः तदा जीवन्तौ एव युवां मुञ्चामः, नो चेत् अनयैव हि च्छुरिकया हानिष्यामः' इति । तत् श्रुत्वा तां च मृत्युजिह्वाग्रमिव तीक्ष्णतमां छुरिकां दृष्ट्वा पतिर्दरिद्रनारायणः भयकम्पमानसर्वाङ्गः जड इव स्तब्ध इव शिलामय इव स्थाणुरिव तूष्णीमेवातिष्ठत् । तदा च अशिक्षितपटुः सा दरिद्रदयिता मन्दं हसन्ती अन्तर्गत्वा स्वस्य चत्वारि अपत्यानि आदाय आगता । मन्दं हसन्ती च अवादीत् 'अयि भावमिश्राः । अयं मे ज्येष्टपुत्र एव मम रत्नम् । अत एव हि जगति पुत्ररत्नमिति व्यवहारः । सत्यं पुत्रा एव हि अमूल्यरत्नानि । 'मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते' अन्यं च कनिष्ठपुत्रं प्रदर्श्य अयमेव मे मुक्ताफलम् । कनीयानिति अयं ममैव समीपे स्तनपानार्थं शायितः। कुत्र सा ते कनकलता माणिक्यमञ्जरी वा इत्यनुयुक्ता सा स्वकीये द्वे अपि पुत्रिके प्रदर्श्य इमे एव आवयोः कनकलता माणिक्यमञ्जरीति कन्यके अदर्शयत् । ततः कुत्र सः सुवर्णशरावः मुक्तामणिमयं भाण्डमिति चोरास्तामपृच्छन् । तदा सा रोटिकाकरणार्थमत्यावश्यकपिष्टपेषणावहननादिकृते नित्यमुपयुज्यमानं पित्तलमयं विस्तृतशरावमानीय अयमेव नः सुवर्णशरावः इत्यवादीत् । ततः किमपि मृण्मयं भाजनं तेषां पुरस्तादुपस्थाप्य इदमेव च नः मुक्तामणिभाण्डम् । अत्रत्याः यावनालधान्यकणाः मुक्ताफलस्थूला एव हि मद्विवक्षिताः मुक्तामणयः । यैर्हि जीवननिर्वाहो भवेत् तान्येव रत्नानि मुक्ताफलानि च । किमुपलशकलरूपैरत्नमुक्तामणिभिः उदरशान्तिः क्षुधानिवृत्तिः जीवनयात्रा वा भवति । एभिरेव हि यावनालैर्मादृशां जीवनम् एतत्परिपूरितमेव पात्रम् अस्मज्जीवनसर्वस्वम् । तस्या एवद्वचनं श्रुत्वा विस्मिता लज्जिता जिताः पलायिताश्च चोराः । परेद्युः राजा च तत्कामिनीकौशलम् एव श्रुत्वा तां बहुमानितवान् । तद्गृहं प्रति मुक्तामणिमाणिक्यराशिमेव प्रेषितवान् । किन्तु सा सविनयमेव 'मूढैः पाषणखण्डेषु रत्नसंज्ञा विधीयते' इत्युक्त्वा निराचक्रे ।

---

# नागपुरजिल्हाकार्यालये समानीतहतव्याघ्रविलोकनतः ।
# 'अहह काननराजहतोऽसि हा!'

( कविः—शा. गो. रावळे, नागपुरम् )

तव मदोग्रलसत्स्फुटमंञ्चितम् । गिरिगुहोद्गतभीषणगर्जितम् ॥
प्रखरशौर्यकृतोज्ज्वलजीवितम् । कथमभूत् सहसा सुरलोकगम् ॥ १ ॥
विद्राविताखर्वजनोग्रगर्वः । ऊर्जस्वलोदग्रतरप्रभावः ॥
देहस्तवायं धरणीं प्रपन्नः । दीप्तिः पुनः सा दिवि किंनु लीना ॥ २ ॥
विदारिदंष्ट्रं विकरालकायः । विशालपुच्छं च विशोभिवर्णम् ॥
मृतस्य तेऽद्यापि तथैव धत्ते । जीवादपेतो न विभाति हा धिक् ॥ ३ ॥
वन्योपचारार्जितसत्ववृत्तिः । वार्तापरोऽभूर्निजबन्धुवर्गैः ॥
दावं गिरेस्त्वं विचरन् सहेलम् । छायास्वखेलस्तरुशीतलासु ॥ ४ ॥
वासस्तवाभूद्विपिने गुहायाम् । प्रादात् सलीलं सलिलं सरित्सा ॥
भव्याटवी ते वनराजराज्यम् । सेवानुबद्धा बत वन्यजीवाः ॥ ५ ॥
भीतो मरुत् त्वां विनयेन भेजे । सर्वं सुखायैव समागमत् ते ॥
अन्यूनराज्यं तव नाथहीनम् । वनायते हा परलोकयानात् ॥ ६ ॥
प्रियं तवाखेटकमद्रिशृङ्गे । हन्ताऽद्य हान्यै प्रणतं चिराय ॥
कश्चिद् भवन्तं निधनं प्रलोभ्य । निनाय दूरं विपिने विपद्दम् ॥ ७ ॥
सहायहीनोऽपि मृगानुयातः । भवान् वृथा संशयमारुरोह ॥
प्रभुः प्रगल्भोऽपि भवेदजस्त्रम् । विनाशकाले विपरीतबुद्धिः ॥ ८ ॥
हन्ता क जीर्णः स कुरूपवर्णः । कुचेलयुक्तोत्तमकायदीनः ॥
प्रकम्पमानाधरनेत्रगात्रः । खरास्त्रसंक्षिप्तकरः कुकर्मा ॥ ९ ॥
भवान् क शौर्योल्लसदङ्गकान्तिः । वनाधिपश्चाप्रतिबन्धवृत्तिः ॥
नखाग्रविद्रावितदन्तिगण्डः । करालदंष्ट्रापरिभूतभूतः ॥ १० ॥

जीवोऽन्यजीवस्य हि जीवनं स्यात् । परं न शस्तोऽनपराधिदण्डः ॥
हा हन्त नाऽयं निजदुर्नयेन । जीवन्परांस्तापयतीह नित्यम् ॥ ११ ॥

व्यधायि किंवा विमतं त्वयाऽस्य । हृता प्रिया धेनुरमुष्य कच्चित् ॥
यतःक्रुधा त्वां विपरीतकारी । समाजघानेति न निश्चिनोमि ॥ १२ ॥

दृप्तारिवर्गस्य भृशं निहन्ता । हतो हठात्सोऽपि नराधमेन ॥
क्षुद्रोप्यलं हा महतो विनष्टुम् । किमत्र चित्रं कलिचेष्टितेषु ॥ १३ ॥

स्थितिः सुखिन्ना मृगराज तेऽद्य । नासा स्रवच्छोणितबिन्दुरेषा ॥
व्रणाङ्कितं चाप्युदरं समन्ताद् । दंशानुविद्धं बत विस्रगन्धि ॥ १४ ॥

दीनां दशां ते प्रसभं समीक्ष्य । दन्दूयते हा विकलं मनो मे ॥
याता क्व धन्या प्रभुताऽधुना ते । तेजः कुतो वा निहतस्य भूयात् ॥१५॥

पुरा विलोक्यापि भयार्दिता ये । आरादभूवन्निह चाङ्गकैस्ते ॥
मृते त्वयि प्रोज्झितभीतयोऽद्य । खेलन्ति बाला इव पुत्तलीभिः ॥ १६ ॥

उन्नेतुकामास्तव शेपमेके । नखानुसंख्यानपरास्तथाऽन्ये ॥
स्पृशन्ति मोदाद्विकरालदन्तान् । उत्पाट्य केशानपरे यथेष्टम् ॥ १७ ॥

कर्णे च कूर्चे कुरुते करं सः । दशं स्वहस्ताङ्गुलिना मिमीते ॥
पिनद्धुकामाय न नेत्रमेतद् । भवत्यहोऽलं तव जीर्णदेहे ॥ १८ ॥

चिराय निद्राकुशलार्पणाय । निरीहतायास्त्वयि धारणाय ॥
विधिः परासोरमृतत्वमिच्छन् । इमां दशां त्वा स निनाय कच्चित् ॥१९ ॥

निधने गतिरीदृशी दशा । यदि भूयादिह हन्त जन्मिनाम् ॥
अपि लालनकर्मणाऽस्य किम् ! मृतजन्तोः किमिहावशिष्यते ॥ २० ॥

सुजीर्णवस्त्रप्रतिमं शरीरम् । परेतजीवस्य यदा सुसिद्धम् ॥
वृथैव शोकः किल जन्मिनोऽस्य । ध्रुवो हि मृत्युः प्रसवो ध्रुवश्च ॥२१॥

---

# भारतस्य राज्यसर्वकाराः स्वकोषेभ्यः संस्कृताध्ययनप्रचाराय पर्याप्तं धनं दातुम् आरभन्ताम् ।



## सभ्यता-संरक्षणार्थं मानवजातेः अस्तित्वार्थं च संस्कृताध्ययनसमं प्रभावि साधनान्तरं नास्ति ।

### संस्कृत विश्वपरिषदः वाराणसीये अधिवेशने भारतराष्ट्रपतेः अध्यक्षीय–भाषणम् ।

संस्कृताध्ययनमहत्त्वम् अधिकृत्य अद्यावधि पर्याप्तचर्चा सञ्जातास्ति । अहमपि एतद्विषये अनेकावसरेषु इतः पूर्वं स्वविचारान् प्रकटीकृतवानस्मि । अतोऽहं नेदमावश्यकं मन्ये यद् अद्य इह मया एतद्विषये किमपि वक्तव्यम् । वस्तुतः इदमतीव खेदस्य लज्जायाश्च स्थलं यदस्मिन्विषये अस्मदीये देशे ईदृशः सन्देहस्य शङ्कायाः वा लेशोपि उत्पद्येत किं संस्कृतस्य अध्ययनमावश्यकमपि इति ? यावता वैदेशिकाः विद्वांसः शासकाश्चापि सांस्कृतिक्या दृष्ट्या संस्कृताध्ययनस्य महत्त्वे कदाचिदपि कामपि विचिकित्सां न चक्रिरे । यथा अद्यत्वे अनेकदेशानां विद्यार्थिनः शिक्षणलाभाय यूरोपम् अमेरिकां वा यान्ति, प्रायेण तथैव सहस्राब्दीर्यावद् देशान्तरेभ्यो विद्याजिज्ञासवः संस्कृतं तदीयवाङ्मयं च अध्येतुम् अस्मद्देशमायान्ति स्म । एतेषु चीनाः यवनाः पारसीकाः आरब्याः स्वर्णद्वीपमालानिवासिनश्च अभूवन् । तेषु युगेषु संस्कृतं सभ्यतारहस्यानाम् अधिगमस्य कुञ्चिकात्वेन अभिमतमासीत् । एतदर्थं च भारतीयाः विद्वांसो विदेशेषु आमन्त्र्यन्ते स्म । इमे तत्तद्देशीयान् तत्तदीयभाषयैव संस्कृते सञ्चितस्य ज्ञानराशेः अभिज्ञान् कारयेयुः इति । यदा आस्माकीनो राजनीतिकपराभवोऽजायत, यदा

चास्माकं विद्यापीठानि बर्बरैराक्रमणकारिभिर्व्यनाश्यन्त अथवार्थिकसाधनाभावाद् विनष्टानि, तेषु हतदिवसेष्वपि विदेशेषु संस्कृतमहत्त्वं तनुतां न गतम् । इदानीमपि यूरोपे जापानेऽमेरीकायाञ्च संस्कृतस्याध्ययनाय विशेषप्रबन्धो विद्यते तच्छिक्षणे च पर्याप्तधनव्ययः क्रियते । एतत्सर्वं तु एतदर्थमेव यत्संस्कृतस्य अध्ययनेन मानवजातेः अतीतस्याध्वनोऽतिधूमितपृष्ठानां यथावद् अवगमने गुरुसाहाय्यम् आसाद्यते तदीयसाहित्यदर्शनाभ्यां च मानवो गभीरम् आनन्दं सूक्ष्मविचारशक्तिं च लभते । परन्तु वैदेशिकापेक्षया अत्यधिकम् अस्माभिरेतदावश्यकमनुभाव्यम् । अस्माकं संस्कृतिः साहित्यं प्रादेशिकभाषाः कला मत-प्रभेदाः इतिहासश्च इत्येवं सम्पूर्णजीवनं संस्कृतज्ञानेन विना अस्मदर्थे अबुद्धाज्ञातप्रहेलिकेव स्थास्यति । अनेनैतदुक्तं भवति यद् यावदस्मदीयाः विद्वांसो विचारकाश्च अथ जन-नायकाः शिक्षाशास्त्रिणश्च संस्कृतगिरा सर्वथाऽपरिचिताः वर्तन्ते तावद्वयं स्वस्वरूपं प्रत्यभिज्ञातुमेव न शक्नुमः। तावच्च वयं स्वराष्ट्रीयस्य अथवा स्वजातीयस्य व्यक्तित्वस्य रहस्यानि ज्ञातुमेव न पारयामः ।

भारतवर्षस्यातीतोऽध्वा मत्प्रीतिविषयः। अहञ्च तदीयैतिहासिकज्ञाननिधिं तदीयजातीयानुभूतिञ्च मृल्लोष्टवद् वा गृहमलवद्वा न प्रतिक्षेप्तुमिच्छामीति । केवलमेतद्भावप्रयुक्तः एव न ममायं विचारः । नापि एवम् उक्ते क्षणमपि मन्मनसि एष विचारस्तिष्ठति आधुनिकभारते सामाजिक्यः आर्थिक्यो वा अतीत परिस्थितयः पुनर्यथापूर्वमानीयन्तामिति । अतीतं प्रति मम अवश्यमादरभावः किन्तु नैवाहं तेन निगडितः । यद्येष ममाग्रहो यत्संस्कृताध्ययनं देशे विस्तीर्य जनप्रियं च भवेत् तर्हि अनेनैव निमित्तेन यदहमिच्छामि वयं जनतायाः हृदयमवबुद्ध्य स्वकार्यक्रमं स्थिरीकुर्याम इति, जातीयचेतनानवबोधहेतोर्यत्किंचन आगामि कार्यं साफल्येन सम्पादयितुम् अस्माभिर्जनताया हार्दिकसहकारित्वसमर्थने न प्राप्येयाताम् इतीदृशीमवस्थां जनितुं न अवकाशं दद्याम चेति ।

मम एतन्मतम्—कोऽपि विचारशीलो जनः एतन्निषेधं न करिष्यतीति विश्वसिमि—यत्कापि जातिः किमपि राष्ट्रं वा न तावत्सफलतया अग्रे गन्तुं पारयति यावत् स्वैतिहासिकचेतनां स्वचेत्तप्रवृतिं स्वशक्तिं तदुपलब्धिसाधनानि च यथावन्न जानीयाद् यतः ईदृश्याः जातेर्व्यक्तिषु कमपि कार्यक्रममधिकृत्य तादृक् मतैक्यमुत्साहश्च न सम्भवितुं शक्नोति यादृक् तदा भवति यदा जातीयचेतनाभिज्ञो लोक-नायको जनशक्तिं प्रगत्यं प्रयोगमानेतुं तथैव असमर्थो भविता यथा नलशास्त्रेण सर्वथैवापरिचितः कोऽपि जनो नदीप्रवाहमवारुध्य रचनात्मककार्यार्थं प्रयोक्तुमसमर्थो भवति । राष्ट्रपिता महात्मा इदं तथ्यं निपुणमभिज्ञातवांस्तेन च भारतवर्षे राजनीतिक्याः सामाजिक्याः आर्तिक्याश्च क्रान्त्याः यः कार्यक्रमो विदधे सोऽस्माकम् ऐतिहासिक्याः जातीयचेतनायाः यथावदभिज्ञाने एव अवलम्बितोऽभूत् । अनेनैव च हेतुना स कार्यक्रमोऽनायासेनैव अत्रत्य साधारणजनताया उत्साहप्रदं समर्थनं सहकारित्वं च लेभे । अतो ममायमाग्रहो भारतवर्षस्य भव्यभविष्यादार्थिक-सांस्कृतिक-प्रगतिभ्यां चेदं नितान्तमावश्यकं यदस्माभिः स्वजातीयचेतनाम् अभिज्ञातुं यथोचितप्रबन्धो विधीयतामिति । अस्य प्रबन्धस्यैकं प्रधानम् अङ्गं संस्कृताध्ययनार्थप्रबन्धकरणं यतो बाहुल्येन संस्कृतान्तर्गता एव वर्तते सा सामग्री यामवलम्ब्य वयं स्वजातीयस्वरूपं यथावद् अभिज्ञातुं बोद्धुं च शक्नुमः ।

एषः मम खेदविषयो यदेतस्यां दिशि यादृश्या व्यवस्थया भाव्यं यावांश्च धन-समय-शक्त्युपयोगो विधेयस्तादृशी नैवास्ति व्यवस्था नापि च तावन्तं धन-समय-शक्तीनाम् उपयोगं कुर्महे । आसीत्सोऽपि समयो यदा राज्यं समाजश्च इति उभाभ्यामेव संस्कृताध्यननस्य पोषणमक्रियत । राजसभायां संस्कृतस्य विद्वांसः कवयश्च बहुसम्मानभाजोऽभूवन् । एवञ्च राजानः सामन्ताश्च तेभ्यः प्रोत्साहनप्रदानाय पर्याप्तधेनु-धन-धान्यवितरणं चक्रुः । समाजस्य कार्येण संस्कृतस्य एतावान् दृढसम्बन्धः आसीत् यदसौ तत्साहाय्येन विना किमपि महत्त्वपूर्णपदम् आधातुं नोत्सेहे ।

अतो दाननदी समाजस्रोतसो बहिर्भूय सर्वदैव संस्कृतपण्डितानाम् आचार्याणां चार्थिकं जीवनमुर्वरयति स्म । तस्मिन् युगे संस्कृतस्य विद्वांसः प्रत्येकं क्षेत्रेषु उल्लेखनीयं कार्यं कृतवन्तः । कलाविज्ञानसाहित्यानां समेषामेव भाण्डागारं ते स्वकीयेन परिश्रमेण स्वप्रज्ञया च भृतवन्तः । अननुचितम् एवेदं कथनं यदमी विद्वांसः एतादृशीं ज्ञानशीलसम्पदं भारतवर्षाय प्रत्तवन्तः या अद्यापि निखिलानपि जागतिकान् जनान् आश्चर्यचकितान् करोति । कालक्रमेण युगपरिवर्तनमभूद् राज्यसमाश्रयश्च संस्कृतविपश्चितां विच्छिन्नो बभूव । समुपस्थितायाम् एतादृश्याम् अपि अवस्थायां संस्कृतस्य अध्ययनमप्रतिहतमासीत् । संस्कृतस्य पण्डिताश्च भारतीयं कलादर्शनसाहित्यकोषं परमसमृद्धमक्षुण्णञ्च स्थापितवन्तः—तत्र इदमेव प्रधानं कारणं यत् समाजादुद्गता दाननिर्झरिणी तदापि नितराम् आयता गम्भीरा चासीत् । तस्या दाननीरेण अमीषां पण्डितानां जीवनं सुसिक्तम् आसीत् ।

हन्त ! प्रायेण शताब्दीद्वयपूर्वतो अद्य यावत् समाजनिर्गतेयं दानसरिदपि आश्याना इव लक्ष्यते । आङ्ग्लानां शासनकाले विचित्ररूपा खलु शिक्षणव्यवस्था प्रचलिता, यथा इयं भावनाऽस्माकं देशे पदं निहितवती यदस्माकं स्वकीयाः ऐतिहासिकपरम्पराः संस्काराः सम्प्रदायाश्च सर्वेऽपि निरर्थकाः हानिकराश्च सन्ति अतस्ते हेयाः । अस्माकं कल्याणकरी वैदेशिकी सभ्यता च उपादेया । अतः क्रमशः संस्कृतस्य विदुषाम् आचार्याणां चार्थिकसाधनानि स्वल्पीभूतानि तेन च दारिद्र्यह्रदे ते विद्वांसोऽपि निमग्नाः । यदा तैः संरक्षितं प्रचारितञ्च ज्ञाननिधिं प्रत्येव लोकानां मनसि समुत्पन्ना उपेक्षा तदा कथमिदं सम्भाव्यमासीद् यज्जनानां चेतसि तन्निधिसंरक्षकान् विदुषः आचार्यांश्च प्रति तिष्ठेद् आदरभावना । अतो ये पण्डिताः समाजस्य शिखामणित्वेन सम्मताः भृशं पूज्याश्चासन् ते एव उपेक्षणीयतमाः परिहासभाजनानि च बभूवुः । समाजे तेषाम् आचार्याणां स्थानम् आङ्ग्लभाषाया आङ्ग्लसंस्कृतेश्च पण्डितैर्गृहीतम्, आङ्ग्लदेशश्च भारतस्य कृते प्रकाशस्तम्भो ज्योतिर्निधिः सूर्यश्च समजायत ।

परिवर्तनस्यास्य देदीप्यमानं निदर्शनमिदमेव यदास्मिन् युगे भारतीयानां नेत्राणि वाराणसीं विहाय कलकत्तानगर्यां संलग्नानि किन्तु उपेक्षोपहासयोः अप्यस्मिन् युगे संस्कृतं संस्कृतोपासकाश्च कदापि लक्ष्मीविलासानां दास्यं न नमुः अत एव इदं दुष्करं कार्यं सम्भाव्यमभूत् ।

आसहस्राब्दीभ्यः तेषां पण्डितानां गुरुवर्यैः प्रचारिताऽआसीदियं गौरवमयी परम्परा यद् भागवत्याः सरस्वत्याः उपासकेन धनधान्यराजसम्मानादीनां मोहः कदापि न विधेयः । अयमेव असीत्तेषाम् अभिनिवेशः

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु<br>
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।<br>
अद्यैव वा मरणमस्तु युगान्तरे वा<br>
न्याय्यात् पथः प्रविचलन्ति पदं न धीराः ॥ इति ॥

अतो विविधाम् उपेक्षामार्थिकविपत्तिश्च सहित्वाऽपि अस्माकं पूज्याः पण्डिततल्लजाः संस्कृतं सजीवं परिरक्ष्य तदीयभाण्डागारं निरन्तरं रक्षितवन्तः, किन्तु स्वधर्मनिर्वहणेन समं तेषां मनासि आसीदयं विश्वासोऽपि यद् युग-परिवर्तनमवश्यम्भावि पुनश्च भारतवर्षस्य लोकानां पण्डितानामाचार्याणाञ्च भागधेयानि जागरिष्यन्ति । स्वतन्त्रेऽस्मिन् भारते ते स्वकीयस्य अस्य विश्वासस्य अस्य स्वप्नस्य आसाम् आशानाञ्च पूर्तिरिमिमपि दृष्टवन्तो न वेति वक्तुं न शक्यते । काले काले इदं भयं मन्मानसम् आविशति यत् स्वतन्त्रेऽस्माकं भारते संस्कृताध्ययनस्य इयं प्राचीना प्रणाली कदाचिल्लुप्ता भवेदिति ।

अद्य संस्कृतस्य विदुषां या दशा वर्तते सा वस्तुतः शोचनीया । अद्य यावद् राज्येनापि संस्कृताध्ययनाय समाश्रयदानस्य भारो नाङ्गीकृतः । विद्यालयेषु संस्कृताध्ययनार्थमस्ति कश्चित् प्रबन्धः इति सत्यं किन्तु सोऽपि नगण्यः एव । याः उच्चावचाः संस्कृतपाठशालाः अद्य अवशिष्टाः तदवस्थाऽपि

सम्प्रति शोचनीयतां गच्छति अतस्तदीयस्नातकानाम् अस्माकमाधुनिकजीवने नगण्यकल्पं पदमस्ति । परिणामतः संस्कृतस्य आचार्याः वृत्तिस्वीकारायोद्यताः अपि वृत्तिं न लभन्ते ।

प्राचीनकाले पाठशालासु संस्कृतस्य शिक्षकाः आमान्नं सदावर्तञ्चाश्रिताः। पूर्णिमैकादशीप्रभृतिषु पर्वसु प्रत्येकं गृहस्थैः दत्तं द्विदलतण्डुलपिष्टात्मकम् आमान्नम् आचार्याः लभन्ते स्म, इत्थमेव तेषां कृते नवीनवस्त्राणामपि व्यवस्थाऽऽसीत् । वाराणसीप्रभृतिषु स्थानेषु छात्रा धनिकैः स्थापितेषु सत्रेषु भोजनं प्राप्नुवन् किन्तु नवीनचाकचिक्याभिभूतान् जनान् इदं सर्वं पाषण्डविजृम्भणमिव प्रतिभाति ।

एतदतिरिक्तं देशे अन्नवस्त्रादेर्नियन्त्रणादिदं सौलभ्यमपि नावशिष्टं यत् पाठशालीयाः पण्डिताः छात्राश्च गृहस्थेभ्य ईदृशं साहाय्यं लभन्तामिति। पुनश्च तन्मूल्यवृद्ध्या गृहस्थानामपि साम्प्रतं नेदृशी दशा वर्तते यत्ते ईदृशं दानं कर्तुम् समर्थाः । यानि महान्ति देशीयराज्यानि भूस्वामित्वानि च कार्येऽस्मिन् सुबहु व्ययं कुर्वन्ति स्म, तान्यपि नावशिष्टानि अद्य येन तदपि साधनं समवसितं तत्स्थाने च अद्यावधि न कापि नवीना व्यवस्था सम्भाविता। फलतः संस्कृतस्य शिक्षकाणां छात्राणाञ्च उभयेषामपि दयनीया दशा सञ्जाता । अनेन एतदुक्तं भवति यत् समाजोद्गता दानसरित् शुष्कप्रायाऽस्ति । अतः एतासु परिस्थितिषु संस्कृताध्ययनस्य परम्परा समवसिता चेत् तर्हि एतत् स्वतन्त्रभारतस्य लज्जाहवमवश्यमेव स्याद् यदि पुनः नाश्चर्यकरमपि । विदेशेषु संस्कृताध्ययनं वर्धेत अथ भारते एव सामाप्तं भवेदिति इदमकल्पनीयम् यद्यपि वयं तन्निकटस्थाः एव भवामः इति मां प्रतिभाति । यत् काशीसदृक्षविद्यापीठेऽपि कियन्तः एव आर्यवंशजा अद्य पितृपितामहप्राप्तां संस्कृतविद्यां परित्यज्य आधुनिकीं शिक्षां गृहीत्वा बहुलवेतना भृतीः स्वीकुर्वन्ति इत्यतःपरं संस्कृतविद्या

ध्ययनपाठनप्रणालीञ्च प्रति अस्मदीयोदासीनतायां, तज्जनितासु आर्थिक-काठिनतासु, अद्यावधि कष्टसहस्राणि सहित्वाऽपि अस्मदीयैः प्राचीनैः उदात्तादर्शैः प्रभावितेषु सत्सु संस्कृताध्ययनाध्यापनकर्मणि परम्परया निरतेषु अपि तत्प्रति सञ्जातायामश्रद्धायाञ्च किमधिकं प्रमाणं भवितुम-र्हति । अतो यत्र एकतो अस्माभिः संस्कृतविद्या जीविकोपयोगिनी विधेया, तत्र एवान्यतः इदमपि न विस्मर्तव्यमस्माभिर्यदेनां ते एव आर्यपुरुषाः अद्यावधि जीवनरूपेण रक्षितवन्तो ये एनामर्थोपार्जनमात्रस्य साधनं नामन्यन्त । समाजोऽपि स्वीयां स्थितिमीदृशीम् आपादयेद्यत्र मानप्रतिष्ठासम्मानादि सर्वमपि लक्ष्म्याः एव अनुगामि न भूत्वा सरस्वत्यर्थं सुरक्षितं स्यात् लक्ष्म्यर्थञ्च धनजनितं चाकचिक्यं लाभकार्यञ्चैववशो-षितं भवेत् ।

अतो महता धैर्येण सर्वैरेव अस्माभिर्विचारणीयमेतद्यत् कैरुपायैर्वयं देशे संस्कृताध्ययनस्य ह्रासस्थाने प्रसाराधिक्यं कर्तुं समर्थाः भवेमेति । सर्वप्रथमं तु अस्मत्समक्षमयं प्रश्न उपस्थितो यदागामिकाले संस्कृतपाठशालानां विद्या-ल्यानाञ्च कृते केन उपायेन वित्तप्रबन्धो भवेदिति । एतत्कालपर्यन्तं तु एताः पाठशालाः दानशीलेभ्यो राज्येभ्यो भूस्वामिभ्यः श्रेष्ठिभ्यश्च आवश्यकं वैत्तिकसाहाय्यं लभन्ते स्म । कतिपयास्तु तदर्थदत्तभूमिप्राप्तधनेन चलन्ति स्म । किन्तु भूस्वामित्वव्यवस्थोन्मूलनस्य निर्णयः कृतोऽस्माभिः इदानीम् । अतः एतासां पाठशालानां तद्वैत्तिकस्रोतस्तु शीघ्रमेव शुष्कं भविष्यति । श्रेष्ठिभ्यः आगच्छतः साहाय्यस्य अपि चिराय न काऽपि आशा । एकं तावदद्य धनिकवर्गीयेषु नवयुवकेषु दानशीलतायाः स्थाने मद्यशीलतायाः रुचिर्वर्ध-मानाऽस्ति, अपरं पुनस्तेषां संख्यापि न्यूना जायमानाऽस्ति, धनस्य सङ्के-न्द्रणञ्चापि कतिपयेषु नगरेषु भवदस्ति । मध्यमवर्गीयेभ्यः कृषीवलेभ्यः श्रमि-केभ्यश्च यत् सक्त्वाद्यन्नस्य साहाय्यं मिलति स्म, सा तु अद्य समाप्तप्राया एव जेषा । अतः प्रत्यक्षमिदं यदद्यतन-समाजादियमपि अपेक्षा कर्तुं न शक्यते

यदसौ वर्तमानानामपि पाठशालानां भारं ग्रहीतुं न शक्नोति, का कथा नवीनानां पाठशालानाम् उद्घाटनस्य परिचालनस्य च? वस्तुस्थितिस्तात्त्विय-मेव यदद्य राज्येन इयत्याम् अधिकमात्रायां सामाजिकसूत्राणि गृहीतानि यद्यदि तेन संस्कृताध्ययनस्य वित्तभारः स्वयं न गृहीतो भवेत्तर्हि स आयत्यां न निर्वोढुं शक्यते। राज्यसर्वकाराः एतद्विषये सर्वप्रथमकार्यं कर्तुं शक्नुवन्ति इत्यहमवगच्छामि। समयोऽसौ आगतोऽद्य यदा संस्कृताध्ययनस्य कृते आवश्य-कस्य वित्तस्य व्यवस्थां कुर्युः। यदा ते समाजस्य सर्वाण्येव सम्पत्तिसाधनानि आत्मसात् कुर्वन्तः सन्ति, तदा तेषां समाजस्य उत्तरदायित्वभारस्य अनिर्वहणे न किमपि कारणं दृश्यते। भारतीयसमाजस्य मूलस्वरूपं विशिष्टप्रकारायां सहकारितायाम् अवलम्बितमासीत्। विदुषो भारो गृहस्थे गृहस्थस्य च मार्ग-दर्शनभारो विदुषि आसीत्। भारतीयसमाजस्य प्रत्येकं क्षेत्रेषु एतद्विधैव परम्परागता सहकारिता आसीत्। यदा वयं तस्याः परम्परागतसहकारितायाः अपसृत्य जीवनस्य नियन्त्रणमधिकाधिकं राज्याधीनं कर्तुमुद्यताः स्मः तदा सर्वकारस्य कर्तव्यमिदं यत् स एतानि उत्तरदायित्वान्यपि अङ्गीकरोतु। विचारोऽयमस्मदीयो यद् भारतस्य राज्यसर्वकाराणां कर्तव्यमिदं यत्ते स्वकोषेभ्य-संस्कृताध्ययनाय पर्याप्तं साहाय्यं दातुम् आरभन्तामिति।

अपि च, अत्रत्याः उद्योगपतयः अपि इदं स्वकर्त्तव्यं मन्येरन् यत्ते स्वदेयदानस्य कियच्चिदंशं विश्वविद्यालयेषु संस्कृताध्ययनाय विशिष्टपीठिका-स्थापनाय ददतु। आङ्ग्लदेशे अमेरीकायाञ्च स्वभाषासम्बद्धप्रसिद्ध-कलाधर-साहित्यकार-कृतिजीवनाध्ययनार्थं धनिभिः विश्वविद्यालयेषु विशिष्टपीठस्थापनाय पर्याप्तदानमदायि। अस्मद्देशीयधनिकवर्गेणापि एवमेव करणीयमिति मे मतम्।

अन्यच्च-संस्कृतविदे अस्माभिः आर्थिकक्षेत्रेऽपि स्थान-निर्माणप्रबन्धः करणीयः। मन्ये अद्यत्वे संस्कृताध्ययनस्य प्रचलितपरम्परायाः वर्तमान-व्यवस्थायाश्च हेतोरपि संस्कृताध्येतारः आर्थिकक्षेत्रे किमपि स्थानं न लभन्ते इति संस्कृतविद्यालयेषु संस्कृताभ्यासेन सहैव आर्थिकदृष्ट्या उपयोगिनामाधुनिक-जगत्परिचयापादकानां विषयाणामपि अध्ययनमनिवार्यं विधीयेत इत्यावश्यकम्।

कस्यापि हेतोरिदानीं संस्कृताध्ययनसम्बधः केवलं हिन्दुमतेन सहावशिष्यते । नाहं मन्ये अतीतकाले संस्कृतं केवलं मतविशेषस्य दास्ये बद्धम् आसीदिति । अवश्यमेव धार्मिकसंस्कारभाषापदारूढमपि तद् विज्ञान-कला-साहित्यादि-भाषा-रूपेणापि व्यवाह्रियत । किन्तु अद्य संस्कृतं न त्वेव राजकार्यस्य नापि च कलायाः विज्ञानस्य च न वा वाणिज्यस्योद्योगस्य च भाषाभूतमुपलभ्यते । साम्प्रतं तु एतत्स्थानमाङ्ग्लवाचा अधिष्ठितम् । किन्तु आङ्ग्लीयवाचोऽपसरणे एषु क्षेत्रेषु तदासने संस्कृतं न सम्भवतः आसीनं भविष्यति । अतो भविष्ये संस्कृतभाषया प्रात्यहिकार्थिक-राजनीतिक-वाणिजिक-जीवनेन नाममात्रः एव सम्बन्धः स्थास्यति । किन्तु ममास्य कथनस्य नेदं तात्पर्यं यत्संस्कृताध्ययनं व्यर्थम् । तन्मूल्यं तु अस्त्येव सर्वदा च स्थास्यति । सभ्यतासंरक्षणाय, किमन्यद्, मानवजातेरस्तित्वार्थम् इदमावश्यकं यदध्यात्मशीले शिक्षापद्धतौ समन्विते स्याताम् । एतत्समन्वयस्य संस्कृताध्ययनसमं प्रभावि साधनान्तरं न सम्भवतीति तावन्मम मतम् ।

इदमहम् एतदर्थं ब्रवीमि यन्मम विचारणायाम् आसहस्राब्दीभ्यः संस्कृतस्याधारतलं पृष्ठभूमिश्चासौ अध्यात्मवादोऽस्ति यो भारतस्य मानवतायै प्रसादीकृतः उपहारः । सहस्राब्द्यो व्यतीताः यदा भारते प्रथमतोऽयं विश्वासः उदपादि जगतोऽस्य सर्वविध-विपत्ति-बाधा-न्यूनताकाठिन्येभ्यो मानवस्तावन्मुक्तिं लब्धुं न प्रभवति यावदस्य जीवने सत्यस्य उपासनं, सेवायाः अचलव्रतं न्यायस्य अविचलनिष्ठा च न सञ्जायते इति ।

अस्मत्पूर्वजाः अस्यादर्शस्य 'कृष्णार्पणम्' इति नाम विदधिरे । अस्य अयमर्थो व्यक्तिर्यत्किञ्चिदपि कुर्यात्तदनया श्रद्धया अनयेच्छया च कुर्याद्यदहमिदं समस्तविश्वस्य ततोऽपि परतो विश्वात्मनः प्रसन्नतायै करोमि न तु स्वेन्द्रिय-सन्तोषाय इति । अस्य एषोऽर्थः कदापि नासीद् यद् व्यक्तिः स्वसांसारिक-कर्तव्यानि परित्यज्य किमपि वनं गत्वा तदेव आश्रयेत् । अस्य केवलमयमेवार्थः आसीद्यदसौ किमपि सांसारिकं स्वकृत्यं स्वार्थबुध्या न कुर्यात् प्रत्युत इदमेव

विश्वात्मेच्छानुकूलमिति मत्वा कुर्यात् । तथैव च कृत्वासौ स्वीयाहङ्कारबन्धनान्मुक्तिं प्राप्य स्वकीयं वास्तविकं विश्वस्वरूपमभिज्ञातुं पारयति । इममेव आदर्शमस्मदीयकवयः स्वकाव्येषु कवयन्ति अस्मदीयसाहित्यकाराश्च स्वकृतिषु प्रदर्शितवन्तः । पुराणानि अस्यैव गुणान् गायन्ति दर्शनानि चानेनैव भावेन प्रभावितानि । वस्तुतो नेयम् अनुचितोक्तिः भविता यदयमादर्शो अस्मज्जातीयानुभूतेः तन्तुषु ओतप्रोतोऽस्ति । सम्पूर्णसंस्कृतवाङ्मयस्य प्राणाः प्रेरणा चास्मिन्नेवादर्शे निधीयन्ते ।

संस्कृत–नाटकाख्यान–कथा–महाकाव्य–शास्त्र–विज्ञानेषु सर्वत्रैव अस्य साम्राज्यम् । अतः स्पष्टमेतत् संस्कृतवाङ्मयविद्यार्थी एतदादर्शप्रभावेण विना न स्थातुं शक्नोति ।

ममेयं विचरणा यद्वयं जगते यं महाप्रसादं दातुं प्रभवामः सः अयमेवादर्शः । एनं च वयं तदैव दातुं शक्ष्यामो यदा न केवलमस्मदीया भूमिरस्मदौद्योगिकयन्त्राणि च विशालधनधान्यसरितः एव स्रोतांसि सम्पत्स्यन्ते यावता तत्र कार्यं कुर्वाणाः श्रमजीविनः कृषीवलाश्चापि अनेनैवादर्शेन प्रेरिता भविष्यन्ति तस्य स्वर्णमययुगस्य स्थापनायाम् अस्माभिः– अश्रान्तपरिश्रमः कार्यः अनेकविधानि आयोजनानि च विधेयानि । किन्त्वेषां सर्वेषां प्रयासानाम् आयोजनानां च मूलेऽयमेव नियमस्वीकारो यच्छैल्पिकाध्यात्मिक-शिक्षयोर्मध्यवर्ती गर्तः प्रपूर्येत । संस्कृतमेव स सेतुर्यः एतद्गर्तं पूरयति । अनयैव च दृष्ट्या भवद्भिराधुनिकजगति तच्छिक्षादीक्षयोः प्रबन्धः करणीयः ।

हर्षस्थानमेतद् यदस्यां दिशि प्रथमपदं कृष्णलीलाभूमौ सुराष्ट्रे न्यधीयत, अग्रिमपदं च पावन्याम् ऐतिहासिक्यां च भगवतः शिवस्य नगर्यां निधास्यते । एतन्महाविभूतियुगलस्य ऐतिहासिकच्छायायामारभ्यमाणमिदं कार्यं फलितं पुष्पितं च भविष्यतीति मम विश्वासः ।

---

# वसन्त-हेमन्तौ

कवयिताः—**पण्ढरीनाथः**

सार्वभौमस्य कामस्य मित्रं मन्त्री वसन्तकः ।
सामन्तः खलु हेमन्तः कामं तत्प्रियकारकः ॥ १ ॥

स्मरचक्रेशसामन्ते हेमन्ते चर्तुनायके ।
कामं कामप्रिये किं किं वसन्ते स्यात्प्रत्रच्मि तत् ॥ २ ॥

"काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः ।
वसन्तसमये प्राप्ते काकः काकः पिकः पिकः" ॥ ३ ॥

हेमन्तसमये प्राप्ते पिकः पुनरपस्वरः ।
काकः पिकः पिकः काकः को भेदः पिककाकयोः ॥ ४ ॥

वसन्तसमये प्राप्ते चण्डोद्दण्डकरः खरः ।
तृप्तायःपिण्ड एवासौ मार्तण्डो ज्वलति क्षितिम् ॥ ५ ॥

हेमन्तसमये प्राप्ते सौम्यः शान्तकरो रविः ।
आतपेनापनोद्यासौ शैत्यं सुखयति क्षितिम् ॥ ६ ॥

चन्द्रः सौम्यो रविः सौम्यः को भेदः चन्द्रसूर्ययोः ।
उभावपि सुखस्पर्शौ हेमन्ते सुहितातपौ ॥ ७ ॥

वसन्तसमये प्राप्ते चन्द्रश्चन्द्रो रवी रविः ।
हेमन्तसमये प्राप्ते चन्द्रस्सूर्योऽप्यसावयम् ॥ ८ ॥

अमृतं विषमेव स्याद विषमप्यमृतं क्वचित् ।
इति यत् कालिदासेन कथितं सत्यमेव हि ॥ ९ ॥

वसन्तसमये प्राप्ते सलिलं त्वमृतं भवेत् ।
हेमन्तसमये प्राप्ते तदेव हि विषं भवेत् ॥ १० ॥

वसन्तसमये प्राप्ते तीव्रं तपति चाण्डगोः ।
नाग्निस्तृप्यति काष्ठानां न पुंसां वामलोचनाः ॥ ११ ॥

कण्ठस्तृप्यति नैत्रापां स्नानानां न कलेवरम् ।
नाङ्गं तृप्यति गन्धानां न शीतमरुतां जगत् ॥ १२ ॥

हेमन्तसमये प्राप्ते हिमे व्याप्ते समन्ततः ।
न पुमांस्तृप्यति स्त्रीणां न पुसां वामलोचना ॥ १३ ॥
वसन्तसमये प्राप्ते ह्यनलं प्राहुरप्यलम् ॥
हेमन्तसमये प्राप्ते नालमित्यनलं विदुः ॥ १४ ॥
हेमन्ते कामसामन्त आतपश्चन्द्रिकायते ।
तपनस्सुखदः सौम्यः दाहकस्स्यान्न पावकः ॥ १५ ॥
वनोपवनसंचारी पवनः पावनो मधौ ।
जगत्त्राणो जगत्प्राणः पञ्चप्राणायते नृणाम् ॥ १६ ॥
सर्वाङ्गं व्रणयं श्वेताश्छिन्दन् भिन्दन् वियोगिनाम् ।
जगत्प्राणोऽपि हेमन्ते प्रणयिप्राणसङ्गमः ॥ १७ ॥
वसन्तसमये प्राप्ते त्वग्बलं हि बलं नृणाम् ।
धिग्बलं त्वग्बलं चात्र हेमन्ते कम्बलं बलम् ॥ १८ ॥
श्रीमन्तं वरगृहवन्तं पावकवन्तं दरिद्रमत्यन्तम् ।
अबलावन्तं बलिनं कम्बलवन्तं न बाधते शीतम् ॥ १९ ॥
पावकोपासनाः शश्वत् विमुक्ताहारभूषणाः ।
कान्तारागरसाः सर्वे जना अद्य तपस्विनः ॥ २० ॥
क्षताङ्गाः बहुसीत्काराः रोमाञ्चैः कञ्चुकाञ्चिताः ।
योगिनो भोगिनोऽद्य स्युर्व्रणितोत्खण्डिताधराः ॥ २१ ॥
भामिनी मानिनी वापि पुंश्चली वा पतिव्रता ।
बाला वा स्थविरा वा स्त्री सर्वाः कामिन्य एव हि ॥ २२ ॥
कामः कामं प्रवृद्धोऽभूत् क्रोधस्तु क्वापि लीयते ।
मदः स्त्रीणां विनष्टोऽभूद् मोहः शतगुणोऽभवत् ॥ २३ ॥
कामकार्मुकनिर्भिन्नसंयमग्रन्थियोगिनाम् ।
नीविमोक्षो हि मोक्षोऽद्य मृगाक्षीणामिह क्षितौ ॥ २४ ॥
आकीटकैटभार्यद्य प्रपञ्चः पाञ्चसायकैः ।
चञ्चलो वञ्चितो बाणैरहो कामस्य वीरता ॥ २५ ॥

---

# मौनिमुनिषु विज्ञापना ।



मधुरवाणी बहोः कालात् सुरवाणीसेवां कुर्वाणा एव हि आस्ते । समग्रदक्षिणभारते किम्बहुना अखण्डभरतखण्डे एव अव्याहतं दिव्यभारतीभव्यार्थं निरन्तरं प्रयतमाना एकमात्रसंस्कृतमासपत्रिका नाम मधुरवाणी एवेति न परोक्षमिदं प्रेक्षावताम् । श्रेयांसि बहुविघ्नानीत्यभियुक्तोक्तिमनुसृत्य मध्ये मध्ये विघ्नैः पुनः पुनरपि प्रतिहन्यमानाऽपि कदाचिच्च "क्वचित् प्रकाशां क्वचिद-स्फुटार्णसं सरस्वतीं जेतुमनाः सरस्वतीम्" इति नैषधीयवचनलक्ष्यतामुपयात-वत्यपि वाणी इदानीं सर्वसङ्कटसागरानुत्तीर्य निखिलविघ्नाद्रीनुल्लङ्घ्य निजवयोऽ-नुरूपरूप-राग-रुचि-रस-रङ्ग-राजमाना स्वयंवरसन्नद्धेव कुमारिका वाचकवराणां पुरस्तात् सज्जैवातिष्ठते । अस्याश्च सहृदयहृदयसमुल्लेखैः लेखैः निखिलरसिकलो-कापृणैर्नैकैः श्लोकैः विविधभावभङ्गीमनोहरया च सरसवचोवैखर्या हृतहृदया इहैव एव सदयाः सहृदयाः शताधिकरूप्यैकैरन्वगृण्हन्निमाम् । अन्ये च मान्याः स्वनामधन्याः वदान्या महानुभावाः पोषकत्वम् अनुग्राहकत्वं चाङ्गीकृत्य नितान्तमदयन्तास्माकम् । एभ्यो महनीयेभ्य उदारचरितेभ्यो विशालचेतस्केभ्यः पुनःपुनः सहस्रकृत्वः अभिनन्द्य सानन्दमाबध्यते "कार्तज्ञ्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलि" ।

परन्तु हन्त ! सर्वे एव वाचका नाद्यापि वाण्यां करुणोन्मुखा जायन्त इति विषीदामस्तमाम् । गताङ्के अस्माकं प्रार्थनां श्रुत्वा शताधिका एव हि कृतज्ञा अभिज्ञा ग्राहका वार्षिकधनं प्रेषयित्वा समुपादर्शयन् संस्कृतप्रेमाणम् । तेषामुदारतां दृष्ट्वा नितरामुत्साहिता आनन्दिताश्च वयम् । परन्तु अन्ये तु केचन महनीया न कर्णे कुर्वन्त्यस्मदीयां याचनां सूचनां प्रार्थनामालापं विलापं प्रलापं वेति सत्यं चित्रीयते चोखिद्यते च नश्चेतः । अहो बधिरता श्रुतिमताम् । अहो आन्ध्यम् चक्षुष्मताम् । वस्तुतस्तु

" अहो वाण्या नूनं करुणकरुणैरार्तवचनैः ।
अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥ "

परमस्माकं दैवदुर्विपाकेन सुविनीततमान्यपि नवनीतसमान्यपि वाचकहृदयानि "वज्रादपि कठोराणि कठिणान्यपि लोहतः" कथं संजातानि इत्येव नैव विजानीमो वयं विशेषतो विमृशन्तोऽपि चिरादेव । अथवा लोकोत्तराणां चेतांसि को नु विज्ञातुमर्हति ? । द्वित्रवर्षेभ्यः विना मूल्यं मधुरवाण्याः यावदङ्कान् ग्राहं ग्राहं तत्र च परिस्फुरन्तीं नवरसधारां पायं पायं मधुरवाण्याश्च नवसुधामधुमाधुरीं स्वादं स्वादं सन्तृप्ताः आनन्दजडाः प्रमोदपरवशाः विस्मयमूकाः मदमोदमेदुरा अश्चर्यचकिताः रसानुभवमन्थराः अस्मद्वाचका किं तूष्णीमासते । यदयं सदयः कृतज्ञः गुणपक्षपाती च वाचकवर्गः चिरं तूष्णीं स्थित्वा मधुरवाण्याः सेवा-सपर्यादिकं प्रत्यग्रहीत् किमेतदेव पुरःफलं प्रासादचिन्हम्? आम् सत्यम् । कविकुलतिलकोपि कालिदासः एवमेवाह रघौ—"वत्सोत्सुकापि स्तिमिता सपर्यां प्रत्यग्रहीत्सेति ननन्दतुस्तौ" इति । तद्वदत्रापि अधुनाऽपि एतौ उभावपि सम्पादकौ अयं च नः रसिकः वाचकवर्गः

" रसोत्सुकोऽसौ स्तिमितः सपर्यां प्रत्यग्रहीदित्यभिनन्दतस्तौ ।
भक्त्योपपन्नेषु हि तद्विधानां प्रसादचिन्हानि पुरःफलानि ॥ "

नूनमेते उदारा वाचंयमाः महानुभावाः युगपदेव दश-पञ्चविंशति-पञ्चाशत्-शतसंख्यायां धनं सम्प्रेष्य आत्मनः चिरमौनं सार्थकीकुर्युरिति विश्वासिमः । असकृदनुभूतचरश्चायं वाचकानां शुभोदर्को मौनस्वभावः । अर्थमन्त्रिणः **श्री सी. डी. देशमुख**महोदयाः पञ्चषवर्षान् यावत् मधुरवाणीं तूष्णीं स्वीकृत्य ततः एकस्मिन् सुदिवसे अकस्मादेव अवितर्कितमेव शतं रूप्यकान् सम्प्रेष्य आनन्दस्तिमितान् अकुर्वन्नः । तथा **श्रीमदुत्तरादिमठाधीशश्रीश्रीस्वामिपादा** अपि दश-द्वादशवर्षान् वाण्याः सेवासपर्यादिकं तूष्णीं स्वीकृत्य एकस्मिन् मङ्गलप्रसङ्गे सार्धशतं रूप्यकान् सहसा वितीर्य 'मूकं करोति वाचाल'मिति

महिता अपि वाचलमपि मां मूकमेवाकुर्वन् महौदार्येण । तथा नवमन्वन्तर धन्वन्तरयः **श्रीपद्मनाभराव**महोदया अपि स्वयं गृहानुपेत्य प्रतिसांवत्सरिक-शतरूप्यकदानाश्वासनेन आनन्दयन् आनर्तयन् आमोदयन्नाश्वासयंश्च नः । एवं बहुधा विज्ञातमौनमाहात्म्या वयं वर्षोन्मुखगर्जनविरहितनीरदानामिव बहूनामेव वाचकानां प्रदीर्घमौनं दृष्ट्वा नितान्तं हन्त सन्तुष्यामः । इयतां महतां वाचकानां महदिदमीदृशमुदारमतिदीर्घं मौनं न कदाचिदपि व्यर्थतामियादिति समाश्वसिति विश्वसिति सन्तोषेण समुत्श्वसिति च सप्रत्याशं नश्चेतः । अतिलाभकरम् अत्यर्थ-मर्थप्रदं च महतां मौनं नाम । अत एव उक्तं सुभाषितकृता "पण्डिता मौनं भजेयुः" इति । वृथैव हि प्रलपितं जगन्नाथेन—"विद्वांसो वसुधातले........ वाचंयमाः" इति । नैव जानात्ययं पेरुभट्टशिशुः सर्वज्ञम्मन्यमानोऽपि परमार्थतः महीयसां मौनमहिमानम् । साधूक्तं कविनैकेन "मौनं सर्वार्थसाधनम्" इति अनुभवपूर्णं वचनम् । अतो वयमद्य आशास्महे यद् इयदवधि महामौनव्रत-मङ्गीकृत्य मधुरवाणीं गृहीतवन्तः तद्रसमास्वादितवन्तः सर्वेऽपि रसिकरसनाः **मौनिमुनयः श्रीदेशमुख श्रीपद्मनाभराव**प्रभृतीनां मार्गमनुसृत्य प्रसाद-चिन्हानि प्रदर्शयेयुः । शतं वा पञ्चाशतद् वा पञ्चविंशतिं वा रूप्यकान् त्वरितमनुप्रेषयेयुः । सुरभारतीप्रणयमसाधरणमात्मीयमाविष्कुर्युरिति । बलवच्च विश्वसिमो वयं यदेते कर्तव्यपालनदक्षाः वाचकवरेण्याः प्रत्यर्पितपितृदेवर्णाः वाणीऋणे न कदचिदपि पतेयुरिति । अतः पुनरेकवारं चिरकालं "जोषं जोषं जोषमेवावतस्थुषः विदुषः सत्वरमेवौदार्यप्रदर्शनाय अन्ततः मूल्यमपि वा सम्प्रेष्य अनुग्रहीतुं साञ्जलिबन्धं प्रार्थयामः ।

"येश्च न प्रेष्यते मूल्यं न निषेधो विधीयते । तान् व्ही. पीं. प्रेषयिष्यामः 'मौनं सम्मतिलक्षणम्' व्ही. पी. एषा मोचनीयैव न परावर्त्यतां बुधैः शुल्कं वा प्रेष्यतां नो चेत् पत्रद्वारा निषिध्यताम् इति—

**व्यवस्थापकः 'मधुरवाणी'**

# धन्यो वदान्योऽपरः ।



"शतेषु जायते शूरः सहस्रेषु च पण्डितः । वक्ता दशसहस्रेषु दाता-भवति वा न वा" इति सुभाषितकारः दशसहस्रेषु लक्षकोटिषु वा दाता भवति वा नवा इति महान्तमेव संशयमभिव्यनक्ति । परं मधुरवाणी तु अस्य प्रश्नस्य सधैर्य-मुत्तरति यत् दाता भवति इति । अस्याः सुदैवेन भूयांस एव दातार अहमहमिकया वाण्यै साहाय्यमाचरितुमुपसर्पन्ति । केनापि चान्येन सुभाषितकृता 'एकं मित्रं भूप-तिर्वा यतिर्वा' इति उक्तम् । परं वाणी तु 'भूपतिर्वा यतिर्वा' इत्यत्रत्यं वाकारं विलोप्य चकारं पुरस्कृत्य भूपतिं यतिं च मित्रं करोति । **श्री श्री सत्यप्रमोद तीर्थयतीन्द्र**सदृशाः जगद्गुरवः श्री सी. डी. देशमुखसदृशा मन्त्रीश्वराश्च अस्यामन्यादृशीमेव सौहार्दभावनामाविभ्रतीति अहो सौभाग्यं वाण्याः ।

## तयोस्तृतीयः ।

"श्रिया धियोदारतया द्वयोस्तयोः **श्रीपद्मनाभः** सदृशः तृतीयः" यतिपार्थिवलिङ्गधारिणोरनयोरेव महामनसोरुदारस्वभावयोः महात्मनोः पुण्यपङ्क्तिं भूषयति श्रीआत्मकूरग्रामस्थोः गुणग्रामाभिरामः वैद्यविद्यालब्धवैशरद्यः नैकहृद्य-पद्यानवद्यगद्यादिप्रणयनपटीयान् **पद्मनाभराव**महोदयः । अनन्यसामान्या खलु मान्यवरस्य स्वनामधन्यस्य वदान्यता । अयं च महोदारमनस्को महानुभावः मधुरवाण्या आर्थिकसङ्कटं तन्मूलकविपत्परम्पराम् तन्मूलकं नियतवेला-ऽप्रकाशनादिकं परिमितपुटपरिसीमितसङ्कुचिताकारतानवं च दर्शं दर्शं तत्सम्पादकानां च आर्थिकभारभुग्नानां चिन्तोदधिमग्नानां करुणकरुणैरार्त-प्रलापैर्विविधरोदनैश्च विद्रुतान्तःकरणः स्वयं बागलकोटमभ्यधावत् । तत्र च मधुरवाण्या आर्थिकदुरवस्थादीर्णद्रुतमृदुमनाः स्वयं प्रेरणया "अहं मधुरवाण्यै प्रतिवर्षं शतं रूप्यकान् प्रदास्यामि सोत्साहम् सानन्दं च"

इति प्रत्यश्रृणोत् । तदीयामिमामतर्कितोपनतां महोदारप्रतिज्ञां श्रुत्वा अमृतायमानं वादसीयमहादानवचनं च समाकर्ण्य स्वस्यैव श्रवणयोर्न व्यश्वसन् सम्पादकाः । किमेषः "स्वप्नो नु माया नु मतिभ्रमो नु" इत्येव हि प्रथमतः समशेत तदीयं संशयालु हृदयम् । विविधभावभङ्गीमनोहरैश्चित्रविचित्रैः प्रार्थनाशतैः प्रसादनविधिभिः सविनयानुनयातिशयैः याचनासहस्रैः सूचनाशोचनाद्युपाय-शतैरपि पञ्चरूप्यकात्मकमपि वार्षिकधनम् अयच्छन्तः शताधिकाः वाचकाः क्व ? । अप्रार्थितोऽपि स्वयमेव कार्यालयमभ्युपेत्य स्वसन्तोषेणैव प्रतिवर्षं प्रदानप्रतिश्रवेण रूप्यकशतेन आश्वासयन् श्रीपद्मनाभरावमहोदयः कुत्र ! एवमेतादृशवार्षिकदानप्रदातारः दश द्वादश महोदाराः पुर आगच्छेयु-स्तदा का चिन्ता मधुरवाण्याः ? ।

अयं च खलु पद्मनाभरावमहोदयः उपरिनिर्दिष्टसुभाषितानुसारेण

"शतेषु जायते श्रीमान् सहस्रेषु च पण्डितः ।
वक्ता दशसहस्रेषु दाताऽपि भवतीह सः ॥"

एवं गुणविशेषणविशिष्टस्यास्य महनीयस्य उदारताम् उपकारं च कैर्वा शब्दैः पारयामो वर्णयितुम् । सर्वथा श्लाघनीयमभिनन्दनीयमनुकरणीयमनुसरणीयं चास्य प्रशस्यतरं दानम् । अस्मदभिन्नमित्रस्य अस्य महानुभावस्य अधिकतरा वर्णना आत्मवर्णनैव हि भवेद् । अतः पुनरेकवारं वैद्यविद्यावाचस्पतिं भारती-निष्ठं गुणगरिष्ठं ज्ञानवरिष्ठं दानिश्रेष्ठं सहस्रशोऽभिनन्द्य कोटिशोऽभिवाद्य विरमामो विस्तरात् । प्रार्थयामश्च देवदेवं धन्वन्तरिं चिरोपभोग्यमारोग्यं समृद्धं सौभाग्यं सुखसंपदायुष्यादिकं च यथेच्छमेव प्रदातुम् । सप्रत्याशं च उदार-चेतस्कान् श्रीमतः धीमतश्च रसिकसहृदयवाचकान् अनुनाथामहे **श्रीदेशमुख-उत्तरादिमठाधीशश्रीपद्मनाभराव**ादीनामेव मार्गमनुसर्तुम् । अयमेव हि साधीयान् पन्थाः "एषः पन्था अयनाय विद्यते ।

---

## किं कर्तव्यम् ।

( ले०—द. अ. आम्बिये एम. ए. )

अद्यतनीयास्माकमार्थिकी व्यवस्थाऽत्यन्तपीडाकरैव वर्तते । समाजस्थित्यवलोकनादेवास्याः प्रतीतिः सुसाध्या । एकस्मिन्काले भारतवर्षोऽस्माकं सुवर्णभूमिरिति ज्ञातः । किन्त्वद्य सैव सुवर्णभूमिरतीव निकृष्टामवस्थां गतेत्यप्रशंसनीयं सत्यमस्माकं नयनसंमुखे प्रामुख्येन तिष्ठति ।

बहुहेत्वधिष्ठिता दुरवस्थेयम् । 'राजा कालस्य कारणम्' । इत्युक्तिरप्यत्रावश्यं विचारणीया । पुरा राजानः प्रजाः स्वप्रजा इवापालयन् । किन्त्वद्य किं दृश्यते । अद्यतनीया मन्त्रिणः स्वाधिकाराद्गर्विता भूत्वैव प्रजाहिते न जाग्रति । लोकेषणैव तेषामभिमता । प्रजाया दीनत्वं लवमपि तेषामन्तःकरणं न दुनोति तत्त्वतः ।

लोकसत्ताडिण्डिमः श्रूयतेऽत्र भारते । किन्त्वियं लोकसत्ता मन्त्रिसत्तैव संज्ञातुमर्हति । सैव यथार्था लोकसत्ता, यस्यां लोकाधिकाराणां प्रतिबिम्बं दृश्यते । भारतवासिनोऽज्ञानान्धकारे सञ्चरन्ति । राज्यचक्रं कथं सञ्चाल्यते, मन्त्रिणः प्रति प्रजानां किं कर्तव्यमस्ति, यदि मन्त्रिणः स्वेच्छानुवर्तिनो भवन्ति तर्हि किं कर्तव्यमित्यनेकसमस्यायुक्तमस्माकं राजकीयं जीवनम् ।

अथाहं । प्रजादोषमपि विवृणोमि । प्रजाः स्वकर्तव्येऽपि विमुखा दृश्यन्ते । राज्ययन्त्रणां बलान्वितामकृत्वैव केवलं दोषाविष्करणे बद्धपरिकरा भारतीयाः प्रजाः । त्यागबुद्धिहीनत्वमङ्गीभूतमिवास्माकम् । स्वातन्त्र्यप्राप्तेः पश्चाद्यदि वयं स्वार्थपूर्णं जीवनं नयामस्तर्हि स्वातन्त्र्यमल्पावकाशादेव नाशं गमिष्यति । सामान्या जना अस्मिन्ननर्थोपेतायामवस्थायामतीव दुर्मनसो भवन्ति । अनेके जना अनेकविधानुपायान्सूचयन्त्येनां समस्यामाधिरोढुम् । एके कथयन्ति राजकीया क्रान्तिरेव यशःप्रदा भवेत् । अन्ये कथयन्ति नूतनामार्थिकीं व्यवस्थां विना सामान्यजनजीवनहितं न भवेदिति । केचनादिशन्ति धर्मस्य पुनरुज्जीवनेनैव समाजस्य सुस्थितिः साध्या ।

किं कर्तव्यमस्मिन्ननर्थपरम्परायाम् । एक एवोपायो दृष्टो मया । त्यागपूर्णं स्वार्थरहितं जीवनं नेतव्यमस्माभिः । स्वदेशहितव्रतमङ्गीकर्तव्यं सर्वदा । स्वदेशहितविरुद्धं न किमपि कर्तव्यं कदापि । राष्ट्रजीवनावलम्बी हि प्रजाजीवनमस्ति । प्रतिदिनव्यवहारेऽप्येतद् स्मर्तव्यम् यत् प्रथमं देशहितमनन्तरं स्वहितमिति । आङ्ग्लजना आदर्शभूता अस्मिन्विषये । ते राष्ट्रघातकं कृत्यं कदापि न कुर्वन्ति । यद्येतत्स्वीकृत्य सर्वे वर्तेरन् तर्ह्यस्माकं भाग्योदयकालः समीपमागत इति दृढम् ।

---

॥ श्रीदिग्विजयरामो विजयते ॥

# मानपत्रसमर्पणम् ।

सच्छास्त्रस्य निरन्तरप्रवचनात्सत्यं गुरुत्वार्हणाः ।
वैराग्येण दृढव्रतैकनिरतेः सत्यं व्रतीशा नुताः ॥
सर्वांशैः प्रवरोत्तरादिमठपा लोकोत्तरैः सद्गुणैः ।
लोकेऽस्मिन्नितरां जयन्ति गुरवः सत्यप्रमोदाभिधाः ॥

**श्रीमत्परमहंसेत्यादियथार्थाष्टोत्तरसहस्रबिरुदावली-**
**सुरभिसुममालालङ्कृतेषु श्रीमदुत्तरादिमठाधीश्वरेषु**
**श्री श्रीसत्यप्रमोदतीर्थगुरुसार्वभौमचरणाविन्देषु-**

परमपूज्यतमाः हृदयतमोनिरसनक्षमाः क्षमासुर-सुरद्रुमाः क्षमादिगुण-मणिस्तोमाः श्रीश्रीगुरुसार्वभौमाः ! मासत्रयात्पूर्वं सर्वकामनापूरकेण श्रीराम-वेदव्याससंदर्शनेन, सकलदुरितराशिदूरीकरणसमर्थेन तीर्थप्रसादादिना, भवबन्धन-मोचनपूर्वकशाश्वतानन्दसंदायकेन श्रीमदानन्दतीर्थदिव्यतत्त्वोपदेशामृतप्राशनेन च अस्मान्पावयितुम् अत्र समागतानां तत्रभवतां भवताम् आगमनेन वेणुग्राम-निवासिनाम् अस्माकं यावान् निरतिशयः वर्णनापथातिगः मोक्षसदृक्षः परमानन्दः समजायत, हन्त ! अद्य अखण्डदिव्यज्ञानोपदेशेन अस्मान् पावितवतां श्रीश्री-चरणानां प्रवासवार्तयैव तावानेव विषादः संजायते पितृप्रवाससमये बालानामिव । वस्तुतः "अन्नदाता भयत्राता यश्च विद्यां ददाति च" इति वचनानुसारेण पावनतमतीर्थप्रसाददानेन, संसारभयत्राणेन, सच्छास्त्रोपदेशेन च श्रीश्रीचरणा एवास्माकं पितृस्थानीयाः ।

मान्यतमाः महानुभावाः महास्वामिनः !

श्रीगङ्गानदीमङ्गलतरङ्गसङ्घट्टिततीरे श्रीहरिमन्दिरनिर्माणतोऽप्यधिकपुण्यप्रदैकैकाक्षरलेखनस्य श्रीमुकुन्दप्रसादद्वारा शाश्वतानन्दप्रदस्य च श्रीमदानन्दतीर्थभाष्यस्य पाठेन अस्मातु तत्त्वज्ञानरुचिमुत्पादितवतां, श्रीभगवद्गीताया विचित्रानेकार्थविवेचनपूर्वकं प्रवचनेन भगवदुन्मुखमनःप्रवृत्तिजनकानां सदाचारस्मृति सदुपदेशेन सदाचारपथं दर्शितवतां किं बहुना? सर्वथा जन्मोद्धारकाणाम् अल्पीयस्याऽपि शिष्यसेवया बहुप्रसन्नानां सदा सहजवात्सल्यरसप्लावितचेतस्कानां श्रीगुरुवरचरणानां जन्मसहस्रेणापि अनुत्तरणीयं महोपकारभरं सकलकोशगतेन शब्दराशिनापि वयं वर्णयितुं न क्षमामहे, प्रत्युपकर्तुं च नेस्महे । स्वकृतेनैव स्वयं सन्तुष्येयुः इति सुलभामपि बहुफलदां सभक्तिविनयादरां नमउक्तिं विदध्महे ।

महनीयाः महाप्रभुचरणाः !

गुरुशिष्यारणिभ्यां प्रवचनमथनसम्भूतं महाप्रसादलब्धम् अन्तरान्धकारनिरासकं दिव्यं ज्ञानजोतिः अस्माकं हृदयवेदिकायां श्यजन-समिधादिभिः सदा प्रज्वलदेव यथा वर्तेत, शिष्यचित्तशुद्धभूमौ स्वयमुत्पादितज्ञानाङ्कुरः सलिलसेचनादिना यथा वर्धेत, यथा च महावृक्षतां भजेत्, तथा महोदारमानसा गुरुवरेण्या अनुगृण्हन्तु, यत्रकुत्रापि विद्यमाना अपि कृताल्पसेवामपि बहुभक्तिसम्पन्नां वेणुग्रामनिवासिनीं माध्वशिष्यजनतां न कदापि विस्मरन्तु, पुनः पुनः प्रतिपक्ष्ववर्षम् इह समागत्य पवनशास्त्रोपदेशेन अस्माकं जीवनं पावनं विधाय सफलयन्तु इति भक्तिभरोद्रिक्तचेतसा साञ्जलिबन्धं प्रार्थयामहे ।

श्रीश्रीगुरुचरणानां प्रतिवर्षमेकैकक्रमेण अष्टोत्तरसुधामङ्गलव्याख्यानेन जगन्मङ्गलं विधातुं सम्पूर्णमायुरारोग्यैश्वर्यादिकं विदधातु भगवान् श्रीसीतापतिः श्रीरामचन्द्र इति अनन्यभावेन तमेव सम्प्रार्थयामः । इति सदैव

श्रीगुरुचरणानुग्रहाकाङ्क्षि वेणुग्रामनिवासि

**माध्वशिष्यमण्डलम्**

शके १८७४ बेळगांव

# नियमावलिः

(१) मधुरवाणीनाम्नीयं संस्कृतपत्रिका प्रतिमासं पौर्णिमायां प्रकाशते.

(२) अस्यां प्रायः प्रत्यङ्कमेका लघुकथा, सनातनधर्मविषयकाः प्रबन्धाः प्राचीनसाहित्यं चान्ये प्रचलितविषयका विवेचनात्मका लेखाः प्रकटीक्रियेरन् । सनातनधर्मद्रोहिणो लेखा नावकाशं विन्देरन् । ग्राहकेतरेषां लेखाः पद्यानि वा न प्रकाश्येरन् ।

(३) पत्रिकाया अस्याः अग्रिमदेयं मूल्यं मार्गव्ययसहितं रूपकपञ्चकम् । अङ्कस्यैकस्याणकाष्टकं मूल्यम् । द्वीपान्तरवासिनां तु वार्षिकं मूल्यं सप्त-रूप्यात्मकम् । विना मूल्यमादर्शसञ्चिका न प्रदीयेत । तदिच्छुभिश्च आणकाष्टकमूल्यानि शुल्कपत्राणि प्रहीयन्ताम् ।

(४) मधुरवाण्याः श्रेयोभिवृद्धये दशरूपकाणां दातारः सहायकाः, पञ्चविंशतिरूपकप्रदाः पोषकाः, पञ्चाशद् रूप्यकदायिनोऽनुग्राहकाः शताधिक-प्रदाः संरक्षका इति व्यपदिश्येरन् ।

(५) मधुरवाण्यां नीरसा असुवाच्याक्षरा एकपार्श्वे एवालिखिता लेखा नावसरमासादयेयुः । लेखपरिवर्तनादिषु निरनुयोज्याधिकाराः खलु संपादकाः । अप्रकाशिता लेखा विना प्रापणव्ययं न प्रतिप्रहीयेरन् ।

(६) लेखा, विज्ञापनानि, समलोचनापेक्षिणो ग्रन्थाः, पत्रिकाश्चेत्यादिसकलं **मधुरवाणी कार्यालय बागलकोट** इति संकेतेन प्रेष्यम् ।

पत्रं मूल्यधनं वा प्रेषयद्भिः निजसंकेतादिकं देवनागरीलिप्यैव सुस्पष्टं विलेखनीयम् । भूतपूर्वैर्ग्राहकैः पत्रस्य धनस्य वा प्रेषणसमये ग्राहकसंख्यालेखनं नैव विस्मरणीयम् । उत्तरप्रेप्सुभिरवश्यं प्रेषणीयः प्रापणव्ययः ।

संपादक मधुरवाणी

**मधुरवाणी कार्यालय, पो. मु. बागलकोट,**

**जि. विजापुर ( कर्नाटक )**

॥ श्रीशः शरणम् ॥

# मधुरवाणी

## संस्कृतमासपत्रिका





संचालकः

पं. गलगलीरामाचार्यः

संस्कृतसाहित्यरत्नम्

सम्पादकः

पं. गलगलीपण्ढरीनाथाचार्यः

१८७४ शकस्य

वार्षिकं मूल्यम् रूपकपञ्चकम्

बागलकोट

# अनुक्रमणिका

॥ श्रीशः शरणम् ॥



# मधुरवाणी

सुधानिष्यन्दिन्या मधुरमधुरालापकलया खलावज्ञामूर्च्छाभरमपहरन्ती सुरगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

१७ वर्षे ] पौषाङ्कः [ १० संचिका

## मङ्गलाचरणम् ।

स्वानां दुर्लभमातनोषि जननीक्षीरं, तदन्यायतः ।
स्तन्यं प्राग्विषदूषितं त्वमपिबः, दुग्धं च दुग्धोदधेः ॥
जामातुः सुलभं न, तेन पयसः पाटच्चरोऽभून्न किं ? ।
ब्रूमः कश्मलकर्म लोकपुरतो लोकेश नो पासि चेत् ॥

राज्यं येन समर्पितं स च बलिर्बद्धोऽपराधाद्विना ।
तेनान्यायबलेन सांप्रतमलं मात्रासि सन्दानितः ॥
मां चेन्मोचयसीह संसृतिमहापाशादहं मोचये ।
त्वामेवं निजभक्तवाक्स्मितमुखो गोपः स गोपायतु ॥

मद्वासः क नु कृष्ण, सुन्दरि जले, पृच्छामि वस्त्रं, जडं ।
मुग्धे किं प्रतिवक्ति, देहि वसनं, नाहं कुविन्दोऽम्बरम् ॥
मुष्टं देहि, किमङ्गनावसनतः पुंसां फलं भामिनी ।
त्युक्त्वा कण्ठनिमग्ननग्नमहिलाः कृष्णो मुदे मूकयन् ॥

मा मा कृष्ण सखे व्रजं व्रज वधूर्बध्नाति चोलूखले ।
मा वृन्दावनमाविशाम्बुजदृशो जारेति निन्दन्ति यत् ॥
मा गा हास्तिनपत्तनं पुनरयं दौत्ये स्वसौत्येऽर्जुनः ।
युङ्क्तेऽतो वस, नो हृदीति भगवान् भक्तैर्नियुक्तोऽवतु ॥

## मासावतरणिका ।

सस्यैर्धान्यसमृद्धिशालिसुफलैर्विश्वम्भरायाश्श्रियं
कामं पुष्यसि पुष्यमास! जनताहर्षेण साकं सखे! ।
सर्वत्राप्यनियन्त्रितप्रभुजनच्छन्दोद्भवा यन्त्रणा
नानाक्लेशविवर्धनेन भवतः सार्था विधत्तेऽभिधाम् ॥

## सुभाषितानि ।

वासन्तः समयः प्रफुल्लकुसुमामोदप्रमोदावहं ।
नो संचारयते यदीह मरुतं चैतन्यनावीन्यदम् ॥
नाहारं यदि कल्पयेद्रसवतीश्चूतो नवा मञ्जरीः ।
शुष्कास्यः समुदञ्चयेत्कथमहो खिन्नः पिकः पञ्चमम् ॥ १ ॥

क्षेमायैव जनस्य वारिधिजलं गृण्हन्नहं भूरिशो ।
वृष्ट्या सस्यसमृद्धिकृन्नभसि चारूढो महोच्चं पदम् ॥
गर्जन्नेवमलं पयोद कतिचिद्बन्धूनये चातकान् ।
अल्पैर्बिन्दुभिरेव नन्दयसि चेद् दूरान्नमस्ते प्रभो ॥ २ ॥

वर्णेन व्रजसि व्रजेशसमतां भूयस्समृद्धिं परां ।
यातस्त्वं वसुभिः पयोद लभसे मन्द्रस्वरैः प्रौढताम् ॥
द्रष्टुं चारुतरं तवेदमखिलं दुःखाकरोत्यान्तरं ।
शुष्यत्सस्य-तृषार्तचातकचयं वृष्ट्या न पुष्णासि यत् ॥ ३ ॥

संपन्नोऽपि समृद्धवारिविसरैर्मेघो न वर्षत्ययं ।
व्यर्थं गर्जति केवलं, जलधयः क्षारोदकाः सर्वतः ॥
एवं कृच्छ्रदशां गतस्य परितः सस्यस्य संशुष्यतः ।
कुल्याद्भिर्बहुतृप्तिकारिसरितं त्यक्त्वा कुतोऽन्या गतिः ॥ ४ ॥

संपन्ना अपि भूरिवारिविसरैर्मेघा न वर्षन्त्यमी ।
गर्जन्तीह वृथैव हन्त परितः क्षारोदकाः सागराः ॥
तीव्रादातपतापतोऽपि पततः सस्यस्य संशुष्यतः ।
कुल्याद्भिर्बहुतृप्तिकारितटिनीं त्यक्त्वा कुतोऽन्यां गतिः ॥५॥

## संपादकालोकः



# सर्वं सुन्दरम्, परम्-

★

कन्या सर्वसुलक्षणसंपन्ना रतिरिवापरा रूपवती, नवयौवनोद्भासिलावण्य-रसस्यन्दोन्मुखपुष्टसर्वावयवा तप्तसुवर्णसवर्णकान्तिः विनयादिगुणगरिम्णा कुल-कीर्तिप्रकाशिनी विद्यावत्यपि गृहकृत्यदक्षा चेति नितान्तं रोचतेऽस्माकम् । परं नवसुधारणानुसारं न वेष-भूषादिभिराकर्षति चेतः परेषाम् । न विकच्छा चरति रथ्यासु । न वा रचयति वक्रसीमन्तं शिरसि । नापि निर्व्रीडं खेलति स्वच्छन्दं परपुरुषैः । न वा द्विचक्रयानमारुह्य सौद्धत्यं घण्टानादेन युवजन-मनांस्यामन्त्रयते निजरूपप्रेक्षणाय । ईदृशी व्रीडाविनयवती विंशतितमे शतके कथं वा व्यवहारक्षमा भवेदित्येव शङ्कासातङ्कं करोति नश्चेतः ।

गौरियं घटोघ्नी मिताहारा बहुक्षीरप्रदा साध्वी शान्तस्वभावा गृहारोग्य-विवर्धनी भूलोकामृतायमानेन क्षीरेणायुरारोग्यबुद्धिबलपोषणी मल-मूत्राभ्यामपि नैकरोगपरिहारिणी पञ्चामृतैः देवं स्नापयन्ती, पञ्चगव्येन शरीर-मनोदोष-प्रमोषणेन पावित्र्यमापादयन्ती मातेव सर्वतो हितकारिणी कृषिकर्मसमर्थवृषभ-प्रसविनी मनोहरा बहूपयुक्ता चेत्यवश्यं पालनीयैवेति सत्यम् । परं बहुभारोद्वहन-समर्थान् मस्तिष्कशून्यान् न सूते महिषान् भेरीमुखवाद्योपानदाद्युपयुक्तचर्मणः । हैन्दवी नीतिप्रधाना संस्कृतिः परमोच्चभावना विश्वशान्तिसंरक्षणैकहेतुः समुज्ज्वल-तपोनिधिपरमर्षिपरम्पराप्राप्ता अनादिकालीना परमादरणीयैव, परं मानवसमाज-सहजस्वेच्छाचारविरोधिनी । एवमाभाप्रामाणानां प्राज्ञम्मन्यानां सरणिमपहसनीया-मनुसरन्तः केचन महाशयाः संस्कृतभाषा राष्ट्रभाषात्वोचितसकलगुणसम्पन्ना अपारशब्दराशिनिधिः कालोचितनवनवशब्दप्रसवसामर्थ्यसौभाग्यमनन्यसामान्य-मन्यादृशमावहन्ती, विश्वगतविश्वभाषामातृस्थानीया विश्वविद्वन्मान्या वेदपुराण-साहित्यसकलकलाकलापशास्त्रसमृद्धा सर्वभाषोन्नता सरसा सरला मनोहरा

महोच्चसंस्कृतिप्रणेत्री दिव्यज्ञानज्योतिःप्रकाशिनी अध्यात्मज्ञानजन्मभूमिश्च परममाननीयैव, परं सद्यः आपामरं व्यवहारक्षमतां न धत्ते इति कथमवलम्बनीयेति आशेरते, उदासते च । आशयोऽयममीषां निर्दिष्टदृष्टान्तानुसारेण कथमपहसनीयेति जानीयुरेव जनाः सर्वे ।

## आस्तामितरेषां वार्ता ।

राजकीयाधिकारिषु संस्कृतभाषाविषये दृश्यमानमौदास्यं निरीक्ष्य चित्रीयते चेखिद्यते च चेतः ।

राजकीयतन्त्रे रक्षापुरुषमारभ्य प्रधानसचिवपर्यन्तं सर्वे उच्चावचाधिकारिणः संस्कृतप्रणयिनः । सर्वे सभासु संस्कृतमहतीं गायन्ति मुक्तकण्ठम् । स्तुवन्ति च संस्कृतविद्वज्जनम् । मनोयोगे सद्यः संस्कृतं विश्वभाषां कर्तुमपि प्रभवन्ति । परं कुतो वा हेतोर्मनसि निरूढः समुदासभावोऽमीषां विलयमभ्येतीषदपि । इतरसाहित्यविषयेऽमीभिर्महानुभावैः प्रदर्श्यमानायाः सक्रियसहानुभूतेः शतांशः सहस्रांशोऽपि नाविष्क्रियते इत्यहो दौर्भाग्यं देवविनुताया वाग्देव्याः ।

राजकीयाधिकारिणो भारतवर्षे सर्वप्रान्तीयभाषाप्रोत्साहनार्थं सबहुमानं पुरस्कुर्वन्ति साहित्यविशारदान् । ग्रन्थानपि सम्मानयन्ति समुचितद्रव्यदानेन । सविशेषं विदधति साहाय्यं साहित्यपरिषदाम् । परं संस्कृतस्य सर्वभाषोपकर्तृतां सर्वोच्चतां जानाना अपि, संस्कृतह्रासे विश्वहानिं मन्वाना अपि मनसा अनितरसाधारणं प्रणयं दधाना अपि मुक्तकण्ठं महतीं गायन्तोऽपि समुन्नयने प्रभवन्तोऽपि महाशया एते नाद्रियन्ते संस्कृतविपश्चितः । न वा प्रोत्साहयन्ति ग्रन्थकर्तॄन् । नापि समुत्तेजयन्ति साहित्यपरिषदः । न वाऽऽकलयन्ति पत्रिकाकर्तृकष्टपरम्पराम् । इतरपत्रिकाभ्यो बहुधनव्ययं दीयमानानां प्रकटनानां प्रेषणेनानुगृह्णन्ति न संस्कृतपत्रिकाः । किमेतत्प्रभुतायाः समुचितम् । आहोस्वित् संस्कृतप्रणयस्य कच्चित्सदृशम् । शान्तेन चेतसा विचारणीयमिदं सर्वैरधिकारिभिर्विशेषतः संस्कृतप्रणयाभिमानिना प्रान्तीय-केन्द्रसचिवमण्डलेन, आत्मीया समुदासीनता किंपदलाञ्छनास्पदमिति । अधुनाऽपि वा प्रभवः स्वीयकर्तव्यच्युतिं विज्ञाय तत्परिमार्जनाय सद्यो बध्नन्तु परिकरं संस्कृतसमुत्कर्षविधाने ।

## प्रभुभिः सद्योऽवश्यं कर्तव्यकार्यक्रमसूचना

१ अतीतवयसः स्वार्थनिरपेक्षमविच्छिन्नं सुरभाषासौभाग्यरक्षका विपश्चितः प्रतिवत्सरं सहस्ररूप्यकान्यूनदानेन सम्माननीयाः । नियोजनीयाश्च न्यायास्थानेषु धर्मसमस्यायां समालोचनार्थम् ।

२ तरुणाश्च विबुधास्तत्तद्योग्यतानुसारं माध्यमिक-महाविद्यालयादिषु अध्यापक-प्राध्यापकपदेषु नियोज्याः पाश्चात्यविद्यापदवीधरसमानकक्षतया ।

३ प्रतिनगरं प्रवर्तनीयायाः प्रोत्साहनीयाश्च पाठशालाः पर्याप्तधनदानेन ।

४ माध्यमिकमहाविद्यालयेषु संस्कृताध्ययनमनिवार्यं विधेयम् ।

५ संभावनीयाः संस्कृतग्रन्थाः ।

६ समुत्तेजनीयाः संस्कृतसाहित्यपरिषदः स्वयमुपस्थित्या साहाय्यदानेन च ।

७ समुज्जीवनीयाः संस्कृतपत्रिकाः सक्रियसहानुभूत्या सर्वशालास्ववश्यादरणीयताऽऽदेशेन प्रकटनाप्रदानादिना च ।

८ संस्कृतविद्यारक्षणायैव पूर्वैः संपादितविपुलस्थावर-जङ्गमसंपदां पीठाधीशानां प्रभूतधने भागत्रयस्य संस्कृतविद्यापोषणे निर्वञ्चनं विनियोगार्थं ते महानुभावाः विरक्तशिखामणयः प्रार्थनीयाः । तथाऽकरणे विलम्बे वा साधिकारवाण्या समादेष्टव्याः । इत्यादयः ।

निर्दिष्टसूचनाः सद्य एव कार्यरङ्गेऽवतारणीया इति प्रार्थ्यन्ते प्रभवः सविनयम् । सन्दिशामश्च कालिदासवाण्याः प्रभुमण्डलाय—

अस्मान्साधु विचिन्त्य संयमधनानुच्चैः पदं चात्मनोऽ-<br>
मुष्यां ते कथमप्यबान्धवकृतां स्नेहप्रवृत्तिं च ताम् ॥<br>
सामान्य—सा माऽन्य—सा मान्यप्रतिपत्तिपूर्वकमियं भाषासु दृश्या त्वया<br>
भाग्यायत्तमतः परं न खलु तद्वाच्यं गिरां सेवकैः ॥

---

## अवश्यमवधेया सूचना

**अनिर्वचनीयानेकान्तरायैः समयलङ्घनदोषलज्जिता तपस्विनी मधुरवाणी क्षन्तव्या सदयान्तःकरणैर्वाचकमहोदयैः । माघ–फाल्गुनविशिष्टाङ्कः व्ही. पी. करणेन समधिगतार्थी अष्टादशवर्षे सोत्साहं समये प्रकाशयेदात्मानं मधुरवाणीति बाढं समाश्वासयामः सधैर्यमिति ।**

# उडिपीक्षेत्रं प्रति श्रीम्हैसूरमहाराजानां शुभागमनावसरे संस्कृतकालेजविद्यार्थिभिः अभिनीतं संभाषणम् ।

राजन् राजप्रमुखसुमुखाम्भोजभोजाभतेजः ।
राजच्छ्रीमद्यदुनृपकुलोद्दीपभास्वत्प्रताप ॥
श्रीचामुण्डासततकरुणावर्मगुप्तप्रतीकं ।
पश्यन्तस्त्वां लसितसुगुणं स्वागतं प्रब्रुवामः ॥

राजस्वराजञ्जयचामराज भजस्व गोपं यदुवंशदीपम् ।
निजेष्टपुत्रादि लभस्व भासा भ्राजस्व कीर्त्या च निरामयात्मा ॥

सखे! नूत्नतया पृच्छामि । अद्य अत्र शालायां को विशेषः? यतोऽत्र महान्तः सम्मिलिता राराज्यन्ते ।

अत्र खलु माननीयगुणगरिमाणः श्रीजयचामराजेन्द्रमहाराजवराः राजप्रमुखा इति जेगीयमाननामानः संस्कृतमहापाठशालामिमां सन्दर्शनदानेन समलङ्कुर्वन्ति । अतो महनीयाः सर्वे समभ्यागताः सभातलमलङ्कुर्वन्ति ।

किमेतदुद्देशादेव नगरीमिमामलङ्कर्वन्तः अस्मानानन्दयन्ति महाराजाः? अथ कारणान्तरादागताः?

श्रीपर्यायपट्टाधिरूढैरितरमठाधिपतीनां सहानुभूत्या अत्र नगरे प्रवर्त्यमानस्य श्रीमाध्वतत्त्वज्ञानसम्मेलनस्य समुद्घाटनार्थं समाहूताः श्रीमदष्टमठाधीश्वरैः प्रतिष्ठापितां महापाठशालामपि द्रष्टुं समुत्कण्ठिता इति सुकृतमेतदस्माकम् ।

एते महानुभावाः स्वजन्मना कतमं वंशमलङ्कुर्वन्ति? कुत्र पुनः विद्यामधिगतवन्तः?

किमुच्यते । एते महान्तः श्रीकृष्णावतारेण पवित्रीकृतं लोकप्रख्यातं यदुवंशमेव स्वजन्मना विभूषयन्ति । एते कौमारदशायां राजकुमारत्वगौरवमवि-

णय्य श्रीमहीशूरराजधानीविश्वविद्यानिलय एव इतरैर्नागरिककुमारैः साकं विद्यामभ्यस्यन्तः स्वप्रतिभाबलात् बि. ए. पदवीमलभन्तेति श्रूयते ।

बाल्यादेव श्रीमतां सामान्यजनसहवासप्रणयः । इत्याश्चर्यमाश्चर्यम् । किं च यदुवंशजातत्वादेव श्रीकृष्णदर्शनादौ तत्र भवतां आदरातिशयः इत्यनुमातुं शक्यते । अस्तु । श्रीमताम् इदं प्राथमिकं कृष्णावेक्षणम् ?

नहि नहि । इतः प्राक् एकोनविंशतिवयस्का एव एते राजकुमारत्वम् दशायाम् एतन्नगरमलङ्कृतवन्तः श्रीकृष्णदर्शनात् सन्तुष्टाः पर्यायपट्टाधिरूढैः श्रीफलिमारुमठाधीशैः श्रीश्रीमद्रघुमान्यतीर्थयतिवरैरनुगृहीता अभूवन्निति श्रुतम् । सम्प्रति पुनः श्रीकृष्णानुग्रहाद् महाराजपदवीमधिरूढाः श्रीकृष्णप्रेरणयैव पर्यायस्वामिभिः समाहूताः नगरमिदमागमनेन तोषयन्ति ।

कार्यबाहुल्ये सत्यपि संस्कृतशालामिमां दिदृक्षन्त इत्यतः संस्कृतविद्यायां श्रीमतां प्रीत्यतिशयमभिव्यनक्ति ।

एतेषां राजधानी खलु संस्कृतविद्याप्रोत्साहने अत्यन्तं प्रख्याता । यतस्तत्र अनेकशास्त्रेषु विद्वत्परीक्षा स्थापिता सती विद्यार्थिसार्थं विद्वत्प्रवरं कर्तुं प्रभवति । तत्रत्यसंस्कृतमहापाठशाला च प्रथितचरा विद्यार्थिनां सर्वसौकर्यं साधयति । किं च संस्कृतविद्यातत्त्ववेदिन एते संस्कृतानभिज्ञानामपि तादृशतत्त्वार्थज्ञानाय स्वद्रव्यव्ययेन वेदपुराणादीनि कर्णाटभाषया भाषान्तरीकृत्य प्रकटयन्तः सर्वजनोपकारं कुर्वन्ति ।

एते श्रीमन्तः अभ्यस्ताङ्ग्लविद्याः किल । श्रीमतां संस्कृते कथं स्नेह उदित ? । इति कौतुकं मे ।

एते बाल्ये प्रतिभातिशयेन संस्कृतविद्यादिबहुविद्यासारं ज्ञातवन्तः । अतोऽत्र किं कौतुकं ?

अत्र श्रीमतां द्वितीयागमनं क्षेत्रतीर्थयात्रायां तत्र भवताम् आदरं महान्तं प्रकटयति ननु ।

सत्यमेव श्रीमतां पवित्रक्षेत्रयात्रासु अत्यादरोऽस्ति । अत एव तत्र तत्र विद्यमानक्षेत्रयात्रां एते कृतवन्तः कुर्वन्तश्च तत्रत्यजनानुरागस्य पात्रीभवन्ति ।

अत्र श्रीमतामभिनन्दनपत्रं वितरन्तीति श्रुतम् । तत् किमर्थम् ?

अभ्यागतानां सर्वत्र सम्मानना कर्तव्या खलु । सा च लेखमुखेन क्रियेत चेत् नित्यं चिरकालं सुस्थिरा भवति । केवलं वाचा क्रियेत, सा क्षणिकेत्यतः अभिनन्दनपत्रिकार्पणं सत्सम्प्रदायप्रसिद्धम् ।

एतेषां मुखारविन्ददर्शनादेव महात्मान एते काले कालेऽपि धर्मश्रद्धालवः विद्यापक्षपातिनः गुरुजनादरणशीलाः करुणाशालिन इति मम मानसं वितर्कयति ।

युक्तमभ्यूहितं वयस्येन । एवमेव पदेपदे श्रीमताम् एतस्यां शालाय किम्बहुना पुनरस्यां श्रीकृष्णालङ्कृतनगर्यां स्वीयत्वसौहार्दं चिरकालं लालसीतु । इति प्रार्थयन्तौ सभाकार्यं पश्यावः ॥

शा. शके १८७ तमे नन्दनाब्दीयपौषासितचतुर्थ्यां भानुवासरे श्रीश्रीमन्महोशूरराजप्रमुखानां रूप्यपीठपुरस्थद्वैतशिरोमणिसंस्कृतमहापाठशालासन्दर्शनसमये विद्यार्थिभ्यां सम्भाषितमिदम् ।

विद्यार्थिभ्यां विलिख्य सम्भाषयिता:—**बि. श्रीविवासभट्ट,**
साहित्यशिरोमणिः

विद्यार्थी पृच्छकः—**बि. गुरुराजाचार्यः**

विद्यार्थी प्रतिवक्ता:—**पि. विष्णुमूर्तिभट्टः**

**श्री. व्या. सि. प्रशालायां साहित्याध्यापकः**

**उडुपी, ४-१-१९५३ ।**

---

# श्रद्धया देयं श्रिया देयं ह्रिया देयं भिया देयं संविदा देयम्

ले०—बी. एन्. देशपांडे, एम्. ए., एल एल. बी.
निवृत्तन्यायाधीश्वरः बाम्बे गिरगांव ४

सम्पादकैः गताङ्के कृतां प्रार्थनां श्रुत्वा बहव एव उदारा वाचका वार्षिकधनं प्रेषयित्वा अन्वगृण्हन् । परं बहव एव ग्राहकाः तत्प्रार्थनां न कर्णे कृतवन्त इति प्रतीयते सम्पादकीयशोकाक्षरैः । अस्माभिश्च वाचकैर्वस्तुस्थितिः विचारणीया । अतोऽत्र मदीयान् विचारान् प्रकटीचिकीर्षामि ।

अनेन अङ्केन त्रयोदशाङ्काः समर्पिता इव आहत्य भवन्ति । इतः पुष्पाङ्कः । तदनन्तरं बृहदाकारः विशिष्टाङ्कोपि वाचकसेवार्थमस्मिन्नेव वर्षे समेष्यति । ईदृशीम् इयतीं सेवां कृतवत्याः कुर्वाणायाः करिष्यन्त्याश्च वाण्याः कृते किं पञ्चरूप्यकाणि अधिकानि ? । अस्मिन् वर्षे नियतमाविष्कृताः अङ्काः । यदा कदाचित् कालव्यत्यासे जातेऽपि मध्ये न कोप्यङ्कः लोपितः । न वा कदाचिदपि द्वित्राङ्का एकदैव संयुक्तसञ्चिकात्मना आविष्कृताः । विलम्ब्यापि वा वाचकानां यथावदाराधना विहितैव वाण्या । सर्वेऽपि वाचका यदि अनुपदमेव देयधनं दद्युः तदा मासि मासि सकाले प्रादुर्भूय विलम्बदोषमपि परिमार्जयेत् आत्मनः इयं वराकी हन्त वाणी । यद्यस्याः पत्रप्रपञ्चे वरीयस्याः इयं संस्कृतवरिवस्या प्रशस्या अभिमता वा यदि गीर्वाणभाषायां आदरबुद्धिः साधीयसी श्रद्धा वा भवेत् तदा सहायधनम् **श्रद्धया देयम्** अस्माभिः सर्वैरपि सत्वरमेव ।

## श्रिया देयम् ।

अस्माकं मध्ये च ये श्रीमन्तः धीमन्तः सुरगिरि आदराभिमानवन्तः कालिदासोक्तिमनुसृत्य "निसर्गभिन्नास्पदमेकसंस्थं येषु द्वयं श्रीश्च सरस्वती च"

तथाविधैर्महानुभावैः **श्रिया देयम्** । श्रीश्रीसत्यप्रमोदयतीन्द्र श्री सी. डी. देशमुख, पद्मनाभरावमहोदयादीनाम् उदारपथमाश्रित्य वाणीसंरक्षकत्वमङ्गीकार्यम् शताधिकरूप्यकाणि प्रदेयानि । अथवा पञ्चाशद्रूप्यकाणि वितीर्य अनुग्राहकत्वं वा स्वीकार्यम् । अथवा पञ्चविंशति रूप्यकाणि समर्प्य पोषकत्वं वा अङ्गीकर्तव्यम् । अथवा दशरूप्यकान् प्रदाय सहायकत्वं वा स्वीकार्यम् । अन्ततो गत्वा ग्राहकधनं पञ्चरूप्यकात्मकं वा सम्प्रेष्य अनुग्राह्येयं मधुरवाणी । उपकार्या च सुरवाणी ।

## ह्रिया देयम् ।

कालेयमलकलुषितः करालः किल कुटिलः खलश्चायं कालः । संस्कृतविमुखः समाजः । संस्कृतज्ञानशून्यः सर्वकारः । संस्कृतविरोधि च सर्वत्र वातावरणम् । दुर्लभानि कर्गदानि । दुर्मिळाः संस्कृताक्षरयोजकाः । दुराराध्याश्च मुद्रणालयाधिपतयः । मुष्टिमेयाः संस्कृतवाचकाः । अङ्गुलिपरिगणनीया एव तत्रापि नियतं वार्षिक-धनप्रदातारः । एवंरूपायामपि वस्तुस्थित्यां सर्वथा प्रतिकूलेऽपि काले केवलं विष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थमेव तदीयान्येव "मा फलेषु कदाचन" "कार्यं कर्म सदाचर" "कर्मण्येवाधिकारस्ते" इत्यादि वाक्यान्येव अक्षरशः अनुसृत्य सप्तदशवर्षेभ्यः चालयन्ति इमां मधुरवाणीं निष्किञ्चनाः निर्बुद्धयः सम्पादकाः । एतेषां च सम्पादकानां बुद्धिशून्यताया इदमेव प्रथममुदाहरणम् यद् अस्माभिः द्वित्रवर्षेभ्यः सर्वेऽपि तूष्णीमेव मधुरवाणी अङ्काः साधु स्वीकृताः । एका पैकाऽपि नाद्यापि प्रमादादपि अस्माभिः तदर्थं प्रदत्ता । अथापि एते तु तपस्विनः ( वराकाः तापसाश्च ) नैकवारमपि अस्मत्सविधे मूल्यप्रेषणाय याचनां सूचनां वा कृतवन्त इयदवधि । नापि पत्रिकाप्रेषणं वा न्यरुन्धन् । विना मूल्यं द्वित्रवर्षेभ्यः सञ्चिकाः ग्राहं ग्राहम् अस्माकमेव चेतसि लज्जा समुदेति । कियन्मात्रमिदं वार्षिकधनमपि । केवलं पञ्चरूप्यकात्मकम् । तावद्धनं प्रतिदिनं क्वापि प्रणश्यति । यद्यस्माभिर्न प्रेष्यते पुनरप्यसौ बुद्धिहीनः वीतहिरण्मयत्वात् मृण्मयपात्रैः गलितविभवः तन्निम्ना स्तम्बेन नीवार इवाशिष्टो मूर्खसम्पादकः

पुनरपि सहस्राधिकरूप्यकानां ऋणे पतति । वयमपि वाणीऋणे पुनः पतिष्यामः । पुनश्चास्य सम्पादकस्य 'ऊर्ध्वबाहुर्विरौम्येषः न च कश्चित् शृणोति माम्' इत्यादि विविधविलापाः । अस्माकं पुनः यानालोक्यैव 'लज्जासिन्धावेव चेतो निमज्जेत्' । इत्यादि विचार्य वाचकैः **ह्रिया देयम्** ।

## भिया देयम् ।

मधुरवाण्याः वार्षिकधनाऽदाने उभयविधा हि अत्र भीः । ऐहिकी आमुष्मिकी चेति । पारत्रिकी भीर्तिर्नाम इयं हि सुरभाषासेवा नाम अत्यन्त-पुण्यकरं कर्म । एतादृशं च पुण्यकर्म निस्पृहवृत्त्या वितन्यते तत्सम्पादकैः एतत्पत्रिकामुखेन । यो यः इमां पत्रिकां गृण्हाति अनुवाचयति च तस्य तस्य पञ्चरूप्यकप्रदानं अवश्यकर्तव्यकोटिमवगाहते । अन्यथा सम्पादकवञ्चना संस्कृत-विद्रोह-वाणीविप्रलिप्सादिजनितपातकसम्पर्को भवेत् । यदि कार्पण्यदोषोपहत-स्वभावैरस्माभिः पञ्चरूप्यकप्रदानकर्मणि मुष्टिराबद्ध्यते दृष्टिर्वा संकुच्यते कर्तव्य-तांधीःकृतज्ञताभावो वा विमुच्यते विस्मर्यते च तदा श्रीकृष्णोक्तगीतागतवाक्यानुसारेण

"पापमेवाश्रयेदस्मानदत्वा वार्षिकं धनम्"

यतो हि

"वाणीस्वमप्रदायैव यो भुङ्क्ते स्तेन एव सः"

इत्यादिवाग्भिः अप्रदाने महती एव भीतिर्वरीवर्ति पारलौकिकी ।

ऐहिकी अपि भीरत्रैव जागरूकैव तिष्ठति । यदि वयं वार्षिकधनं न प्रेषयिष्यामः तर्हि विविधलेखभासुरा इयं वाणी समग्रदक्षिणभारत एव एकमात्र संस्कृतपत्रिका विलीयेत विलुप्येत वा । महती खल्वियं भीतिः संस्कृतप्रणयिनाम् । विद्यमाना यद्येकापि संस्कृतपत्रिका अस्माभिः न संरक्ष्येत धिगस्मान् संस्कृतज्ञान् । अथवा यथाकथंचित् सा जीवन्त्यपि नास्माकं सविधे पुनरागच्छेत् । तस्याश्च बृहदाकारमनोहरः समुज्वलदेशनायकचित्रविचित्रचारुतमकथासन्दर्भमनोरमः विशिष्टाङ्कः नास्मद् दृष्टिगोचरताभियात् । तदनवलोकने च "विशालाभ्यामाभ्यां किमिह नयनाभ्यां फलमिह ?" । यतो हि तस्मिन्नङ्के इयदवधि संस्कृतमाहित्ये

एव क्वाप्यनुल्लिखिताः सर्वेऽपि अस्माकं राष्ट्रपुरुषाः नवयुगनायकाः विविधवचो विलासैः चारु चित्रिता भविष्यन्तीति तन्निवेदनया ज्ञायते । यदि वयमेवमेव वाचंयमास्तूष्णीमुपविशामः तदा मधुरवाणीविशिष्टाङ्कः सप्ताणकाधिकपञ्च-रूप्यकात्मक व्ही. पी. सहित एव समागच्छेत् । ततश्च पुनः सप्ताणकाधिक-दानप्रसङ्गः परापतेत् । अतः अद्यैव मधुरवाण्याः देयधनम् देयमेव इति स्वयं विचार्य वाचकैः सर्वैरपि वाणी वार्षिकधनं **भिया देयम्** ।

## संविदा देयम् ।

एवं इयम् एका संस्कृतपत्रिका इति श्रद्धया, पञ्चरूप्यकं नाम कियन्मात्रमिदमिदानीं महार्घतासमयेऽपि यथापूर्वं सर्वमपि गृहकर्मोत्सवविवाहकुटुम्बपोषणादिकं निर्वर्तय-तामस्माकमिति श्रिया, शताधिकेषु पत्रेषु इतरभाषासु प्रचलत्सु अपि संस्कृत-भाषायामेकमात्रपत्रिका वाचकजनसहायवैकल्येन प्रतिबद्धा भवतीति तु महदिदं लाञ्छनास्पदमेव नः इति ह्रिया, यद्यस्माभिः धनं न प्रेष्येत तर्हि इयं पत्रिका नैव प्रादुर्भवेत् प्रादुर्भूता चेदपि व्ही. पी. रूपेण अस्मत्समीपमुपगच्छेत् इति भिया देयम् । एतत्सर्वमपि सम्यग् विदुषा **संविदा देयम्** । एतत्सर्वमपि विचार्यैव मया वर्षत्रयस्य ग्राहकधनं पञ्चदशरूप्यकात्मकमद्यैव प्रेषितमास्ते । कृपया स्वीकृत्य अनुगृण्हन्तु मामिति प्रार्थये सम्पादकान् । वस्तुतस्तु बहोः कालात् पूर्वमेव प्रेषयितुं मम इच्छा आसीत् । परन्तु मधुरवाणी नियतं प्रचलतीति मम विश्वासः नैव आसीत् । इदानीं च दशद्वादशसाब्दिका आसाद्य तस्याः भावि जीवनविषये जातविश्वासः अद्य प्रेषयितुं वाणीऋणमुद्यतोस्मि । सम्पादकानां सविधे वाचकप्रातिनिध्येन बहुवक्तव्यं बहुसूचनीयं चास्ते । यदि सम्पादकाः तितिक्षावृत्या श्रोतुं वाचकाज्ञां सूचनां वानुमन्तुं च सिद्धा भवन्ति तदा निर्माय निवेदयितुमुत्सहे । पत्रोत्तरेण स्वाभिप्रायं निवेदयितुं तान् प्रार्थये । वाचकान् प्रत्यपि सम्पादकीयपक्षेण तदा सूचनादिकं चिकीर्षामि । किं तु लेखनसमये स्फूर्तिप्रवाहपारवश्येन उच्चरितानि परुषाक्षराणि उभाभ्यामपि क्षन्तव्यानीति सम्प्रार्थ्य विरम्यते ।

---

## "इदं न मम"

मान्याः वाचकाः अस्मिन् श्रीदेशपांडेमहोदयानां लेखे प्रकाशितं सर्वं "इदं न मम" न संपादकाभिप्रेतम् । लेखकानां भाषासौन्दर्यमुग्धा भूत्वा प्रकाशयाम तं लेखम् । तत्र अस्माकं वाचकान् प्रति वृथा परुषाक्षराणि अपमानावहशब्दाश्च उपयोजिताः । निरर्थकमेव उदारेषु कार्पण्यस्य नवनीतकोमलेषु काठिण्यस्य कृतज्ञेषु कार्तघ्न्यस्य अन्येषां च दुर्गुणानाम् आरोपः कृतः येषां पुनः अस्मद्वाचकवर्गः त्रिकालेऽपि नैव उपयायात् पात्रताम् । तत्रापि संस्कृतविद्रोहवाणीविप्रलिप्सा-दृष्टिसंकोच-मुष्टिबन्ध-स्तेनेतिशब्दास्तु नितरां मर्मभेदका एव । तदर्थं वयं वाचकानां क्षमामभ्यर्थयामः । न पुनरीदृशान् वाचकमनस्तोदकान् लेखान् प्रकाशयिष्याम इति आश्वासयामः । इदं तु परमार्थेन न गृह्यतां वचः । अस्मन्निन्दापरवाक्यानि अभिनन्दामः । अमुं च सुहृत्संमितम् उपदेशं सानन्दम् अङ्गीकुर्मः ।

## विशिष्टाङ्कविषये किञ्चित् ।

आगामि माघाङ्क एव विशिष्टाङ्को भविष्यति । तत्र च बहूनामेव स्वातन्त्र्यसङ्गराध्वरे आहुतीकृतसर्वस्वाणां देशधुरीणानां अत्युज्वलानि जीवनचरित्राणि चित्रविचित्राणि रोमहर्षणानि व्यक्तिचित्राणि च चारुतराकारेण प्रकाश्यन्ते । ऐदंप्राथम्येनैव भारतमातुर्मानसपुत्रा एते देशभक्ता संस्कृतशब्दसीम्नि अवतरन्ति । श्रीशारदापुरमहासम्पद्भाण्डारे देशभक्ताङ्कः अपूर्वः कौस्तुभमणिरेव भवेदित्यत्र नास्त्येव नः तिलतुलोऽपि सन्देहः । अनेन खलु अङ्केन संस्कृतस्य चारित्रिकग्रन्थवैरल्यप्रयुक्ता न्यूनता पूर्तिमुपेयात् इति दृढं प्रतीमो वयम् । शताधिकपृष्ठपरिमितः बृहदाकारप्रकारैरेकान्तमनोहरः मसृणतमकागदपरिशोभमानः अन्तरङ्गसौन्दर्य-बहिरङ्गसौष्ठव-विषयवैचित्र्य-उक्तिचातुर्य-व्यक्तिवैशिष्ट्य-वाङ्माधुर्यधुर्यैर्गुणैः स विशिष्टाङ्कः समेषामपि विशिष्टविदुषां रसिकश्रेष्ठानां वाचकप्रेष्ठानां तथैव अन्येषामपि विबुधवरिष्ठानां सहृदयगरिष्ठानां विशिष्टामेव मनस्तुष्टिं स्रष्टुमुपरिष्टादीष्टे इति स्पष्टमाचक्ष्महे । अत्यन्ताकर्षकमपूर्वमिदं ग्रन्थरत्नं सर्वेषामपि संस्कृतज्ञानां समीपे अवश्यंभावि एव । तदभावे महती एव न्यूनता भवेत् संस्कृतज्ञानभाण्डारस्य । अवश्यसंग्राह्योऽयं ग्रन्थमणिः सर्वैरपि सादरम् । अयमेव विशिष्टाङ्कः यैर्धनं न प्रेषितं तेषां सविधे व्ही. पी. द्वारा समेष्यति । न कैश्चिदपि तं परावृत्य पश्चात्तपनीयमिति सूचयामो वयम् । येषामधिकाः प्रतय आवश्यका तैरादावेव प्रार्थनीयम् । त्वर्यतां त्वर्यतां रसिकैः ।

# संस्कृतज्ञेषु विज्ञापना



ले०—**एस्. एस् हुक्केरी,** M. A. B. T. प्राध्यापक बी. टी. कॉलेज, बेळगांव.

आङ्ग्लशासकनिर्गमनादनन्तरम् आङ्ग्लभाषाया अधिराज्यं भारते नष्टप्रायमिति स्पष्टमेव । हिन्दीभाषा राष्ट्रभाषात्वमापन्ना खिस्त-शकस्य १९६५ वर्षादनन्तरं नूनं भारतराज्यभाषा भविष्यति । तस्या राष्ट्रभाषायाः पोषकभाषासु मुख्येति संविधानेनैव संस्कृतं स्वीकृतम् । एतादृशे काले संस्कृतस्य आवश्यकत्वम् अधिकं जातं किल । माध्यमिक-शालासु अवश्यं तत् पाठ्यम्, महाविद्यालयेष्वपि कलाभागे ( Art's section ) अनिवार्यं कर्तव्यमिति च संस्कृतविश्वपरिषदः द्वितीये अधिवेशने वाराणस्यां निर्धारः अङ्गीकृतः ।

एतादृशेषु शुभचिह्नेषु दृश्यमानेष्वपि केचिन्मन्यन्ते माध्यमिक-शालासु आङ्ग्लभाषा, राष्ट्रभाषा, मातृभाषा चेति भाषात्रयम् अवश्य-मध्यापयितव्यम् । तत्र यदि संस्कृतमनिवार्यं क्रियते भाषाचतुष्टयस्य अध्ययनं छात्राणां भारयुक्तं भवेदिति । किन्तु संस्कृतभाषा मातृभाषा राष्ट्रभाषयोः जीवनभूता आङ्ग्लभाषावत् न परकीया, यदि च मनः-शास्त्राधिष्ठितेन विधानेन पाठ्येत तर्हि न सा भारभूता भवेत् किन्तु उपयुक्ता उपकारका च भवेदिति विचारः कालगत्या बलमापद्येत इति विश्वसिमः ।

अस्मिन् महत्त्वपूर्णे काले संस्कृतस्य उपयुक्तत्वं न तथा वादग्रस्तं यथा सुलभत्वम् । अत्र खलु संस्कृतज्ञैः बहु कर्तव्यमस्ति । संस्कृतस्य सुलभीकरणं भाषाशिक्षणस्य नवनियमानुसारि स्थाने खलु भवेत् । तत्र काश्चित् सूचनाः उच्यन्ते संस्कृतज्ञानां विचारार्थम् ।

(१) यत्र समानार्थकः सुबोधः प्रचलितः शब्दः लभ्यते तत्र न कदापि दुर्बोधः अप्रचलितः शब्दः प्रयोक्तव्यः ।

(२) मण्डनीयः विषयः सरलतया स्वभावोक्त्या वक्तव्यः । अलङ्काराः विषयप्रकाशनार्थं यत्र उपयुक्ताः तत्रैव प्रयोज्याः। पाण्डित्यप्रदर्शनार्थं न कदापि तेषां प्रयोगः आदरणीयः ।

(३) सन्धिनियमाः संहिते एकपदे, धातूपसर्गयोः समासे

चैव पालयितव्याः । अन्यत्र यथा प्रमादलेपः न तिलमात्रो ऽपि भवेत् तथैव सन्धयः कर्तव्याः ।

(४) समासाः बह्वर्थम् अल्पशब्दैरेव कथयन्ति । सामान्यतः व्यवहारे मातृभाषाप्रयोगे यत्र समस्तपदानि उपयुज्यन्ते तत्रैव तेषाम् उपयोगः कर्तव्यः । सुबोधता न कुत्रापि समासैः क्लिष्टा भवेत् ।

यदि भाषणे लेखने च एते नियमाः अनुस्रियन्ते तर्हि संस्कृतं सत्यमेव अतीव सुलभं भवेत् । तत्र मुख्यं कारणं भारतस्य सर्वासु प्रादेशिकभाषासु प्रतिशतं पञ्चाशदारभ्य अशीतिपर्यन्तं संस्कृतशब्दाः अनिवार्यत्वेनैव उपयुज्यन्ते । यदि च राष्ट्रधुरीणाः सुलभीकृतं संस्कृतं पश्यन्ति श्रुण्वन्ति वाचयन्ति च तर्हि अस्माकं प्राचीनसंस्कृतिनिधानं संस्कृतम् सत्यं जीवति, अद्यापि अखिलभारतस्य भाषेति विद्वत्सभासु प्रयोक्तुं शक्येति संशयरहिता भवेयुः । महाविद्यालयेषु माध्यमिक-शालासु च मौखिकपद्धत्या एषा भाषा अध्यापयितुं शक्येति विश्वासं लभेरन् । डॉ पट्टाभिसीतारामय्याः मध्यप्रदेशस्य राज्यपालाः स्पष्टं कथयन्ति यत् सुलभं संस्कृतं दाक्षिणात्यानां हिन्दीभाषाया अपि सुलभतरं भवेदिति ।

अन्ते अन्यामेकाम् अत्यन्तमहत्त्वपूर्णां सूचनां निधातुमिच्छामि विशेषविचारार्थं विदुषाम् । संस्कृतज्ञाः सर्वे पुराणमतप्रतिपादकाः इति बहवः आधुनिकाः मन्यन्ते । आधुनिकसंस्कृतज्ञा वयम्

पुराणमित्येव न साधु सर्वम् ।
न चापि काव्यं नवमित्यवद्यम् ॥
सन्तः परीक्ष्यान्यतरद् भजन्ते ।
मूढः परप्रत्ययनेयबुद्धिः ॥

इति काव्यसम्बन्धिनीं कालिदासोक्तिं न केवलमुक्त्या किन्तु कृत्या प्रकृत्या च जीवने अनुसरामः इति विशदीकुर्याम । त्रिकाला-बाधितं सत्यम् अस्माकं प्राचीनसंस्कृतौ उपनिषद्गीतादिग्रन्थेषु बहुस्थानेषु लभ्यते । तस्मात् सर्वं पुराणं साध्विति असमञ्जसो विचारः अनावश्यकः । परीक्षाबुद्धिः सारासारविवेकबुद्धिरस्माकं जागर्तीति साधयामो वयम् ।

---

# प्रत्यक्षं ज्यौतिषं शास्त्रम् ।



दशद्वादशवर्षेभ्यः पूर्वतनी खलु इयं घटना । तदा तिरुपतिक्षेत्रस्य वेङ्कटगिरेरधस्तात् तिरुचानूरनाम्नि पद्मावतीक्षेत्रे प्रतिवर्षं दिसेंबरमासि विद्वत्सभा भवति स्म । तदा न्यायशास्त्रमधीयानोऽहं सामान्यनिरुक्ति-अवच्छेदकतानिरुक्ति-सत्प्रतिपक्ष-बाधोपाध्यादि-नव्यन्यायोद्ग्रन्थेषु परीक्षां प्रदित्सुः धूमशकट्या प्रस्थित आसम् । अस्मदधिष्ठिते च तस्मिन् लघिष्ठे प्रकोष्ठे पञ्चषाः पूरुषा उपाविशन् । तदा स्थूलकायः आजानुबाहुः लोलल्लुम्बोदरः पुलिनजघनः कश्चित् गुर्जरदेशीयः व्यापारी मां, मम विशिष्टं वैदिकवेषभूषादिकं, खाभिमुखीं शिखां च निरीक्ष्य समीपमुपगत्य 'जयगोपाल' इत्यभिवाद्य स्वस्य कराग्रं मम करतले समर्पयत् मां ज्योतिर्ज्ञं मन्यमानः । सहासं अवदत् च "शास्त्रिणः पश्यन्तु मम हस्तरेखाः । अहं तु सांप्रतं महालाभदायकाय व्यापाराय प्रस्थितोऽस्मि । तस्मिंश्च व्यापारे मम अपेक्षितप्रमाणे लाभो भवति वा न वा ?। निरीक्ष्य विचार्य च कथ्यतामिति"। तदाहं "महाशय नाहं ज्योतिर्वित् । न जाने सामुद्रिकविद्याम्" इति अवदम् । तदा सः श्रेष्ठी निराशः खिन्नविषण्णवदनश्च भूत्वा सचिन्तोऽवस्थितः । तदा तदीयां च विक्लवतां दृष्ट्वा द्रुतहृदयः कश्चित् गृहस्थः "अहो अहं जानामि किञ्चिदिव ज्यौतिषं शास्त्रम् । हस्तं देहि मे । पश्यामि तावत्" इत्यवदत् । तदा तेन च हर्षोत्फुल्लनयनेन व्यापारिणा अत्युत्साहेन अत्यादरपुरस्कारेण च तस्य हस्ते प्रदत्तः स्वहस्तः । तदा सः ज्योतिर्ज्ञः तस्य हस्तं समैक्षत । तत्समीक्षणक्षण एव तस्य मुखं विकृतमेवाभूत् । सः पुनः स्वस्य अक्षीणि अपमृज्य आकुञ्च्य च निरीक्षितवान् । तदा सः अधिकाधिकमेव संभ्रान्त इव समजनि । तदा स तत्रैव स्थितस्य अन्यस्यापि पुरुषस्य हस्तं पर्यैक्षत । तदा पुनरपि तस्य उद्विग्नता अभ्यवर्धत एव । सः पुनर्दिग्भ्रान्त इव भूत्वा सर्वेषामपि करतलान् परामृष्टवान् । तदा तु तस्य मुखं अतीव विवर्णं रोदनोन्मुखं च जातम् । तस्य शरीरं आचूलमूलमाकम्पितं

प्रारभत। तस्य कण्ठः गद्गदः। गात्रं स्वेदाकुलं। नयने च उद्भ्रान्ते। मुखचर्या च भयभ्रान्तिभिन्ना खिन्ना स्विन्ना च बभूव। तदा सः सहसोत्थाय यातायातं कर्तुमारेभे। क्षणानन्तरं किमपि ध्यात्वेव एकदैव उपरिलम्बमानां गतिनिरोधक-शृङ्खलामाकर्षितुं बाहुमुदधरत्। तदा प्रकोष्ठगताः तं निरुध्य "अरे किमेवं करोषि। तव किंवा जातं वर्तते। कोयं मोहः। किमेवं विकृतमस्तिष्कवत् यद्वा तद्वा चेष्टसे? इति वदन्तः बलादाकृष्य उपावेशयन्नधस्तात् तम्। तदा सः उत्शुष्कतालुः किमपि वक्तुमपारयन् 'केवलं भयं भयं। सर्वनाशः। प्रलयः। एतत्क्षण एव इयं शकटी अत्रैव निरोधनीया' इति प्रालपत्। अत्रान्तरे आगतः रेणीगुंटम् नामकः ग्रामः। स्वविश्रामस्थले तूष्णीमतिष्ठत् बाष्पयानम्। तदा सः मनुष्यः तत्क्षण एव वातायनादेव बहिरुत्प्लुत्य धावन् प्रकोष्ठान्तरं गतः। तत्र च सर्वेषामपि करतलानि निरीक्ष्य पुनरन्यं प्रकोष्ठमधावत्। एवं पञ्चषप्रकोष्ठगतजनानां करशतं परीक्ष्य स दिग्भ्रान्त इव भूत्वा अस्मत्प्रकोष्ठमागत्य "अहो अवतीर्यतां सर्वैरपि जिजीविषुभिः। इयं धूमशकटी अद्य क्वचिद् विनाशमेष्यति" इति स्वस्य पाथेयप्रस्तरादिकमवातारयत्। तदा सः मां प्रति 'शास्त्रिणः मृत्युना सह विनोदः नैव कार्यः। अवतरन्तु आगच्छन्तु च मया सह। उभौ अपि गत्वा यानपर्यवेक्षकाय ( गार्ड ) कथयिष्यावः। "शकटीं मा मुञ्च शताधिकप्राणहानिर्नूनं संभवित्रीति"। यदाऽहं विचारपन्नासंस्तदा मम हस्तमाच्छिद्य आकृष्य बलात् मां गृहीत्वैव पर्यवेक्षकस्य समीपं सः गतः। तत्र गत्वा "अहो मया अत्र शकटीस्थानां शताधिकानामेव हि पुरुषाणां नारीणां च करतलानि निरीक्षितानि। तत्र नैकस्यापि हस्ते आयुष्यरेखा दृश्यते। तवापि हस्ते सा न दृश्यते। अतः युगपदियतां जनानां करतलेषु आयूरेखाया सहसाऽदर्शनं कमपि महान्तमेव अचिराद् भाविनमनर्थं सूचयति। अतः न चालनीया कृपया शकटी। अन्यथा शताधिकप्राणहानिर्भवेदिति"। तदा सः पर्यवेक्षकः तमुपहसन् उच्चैर्हसन् उत्तरमप्ययच्छन् गलगद्भुजं शीटिकामनादयत्। अदर्शयत् च हारिद्रपताकाम्। ततः प्रचलिता

सा धूमशकटी । "वयं सर्वेऽपि मरिष्यामः त्वमेक एव मृत्युंजयः भवेति" अट्टहासमध्ये वदन्नेवारोहत् स्वकीयं प्रकोष्ठम् । यावदहमपि मत्प्रकोष्ठं सरभसमुत्प्लुत्य आरूढः तावदेव सः मदनुपदमेवाधाव्यागतः ज्योतिर्मार्तण्डः मां हस्ताग्रे आलम्ब्य अधस्तात् वेगादाचकर्ष । तेन चाहं प्रचलितात् शकटात् अधः कर्षितः पाटितजानुः स्फोटितशिराः उत्शलद्रुधिरः उत्तानपाणिपादः शिलाफलकोपरि वेगादपतम् । ततः सः गृहस्थः सरभसमागत्य मामुत्थाप्य क्षमामयाचत । ततोऽहं कोपसंरक्तनयनः यथेच्छमेव तमनिन्दम् । तद् दृश्यं दृष्ट्वा अन्तर्हसन्तोऽपि उपरि अनुकम्पामेव दर्शयन्तः रेल्वेअधिकारिणः रक्षापुरुषाश्च आगत्य ममैव पक्षं गृहीत्वा तं साधु निरभर्त्स्यन् अताडयंश्च ।

मां च सर्वकारीयौषधालयं नीत्वा क्षतानि सर्वाण्यपि वस्त्रपट्टिकादिभिः सम्यगाबध्य कन्याप्रदित्सव इव कुलगोत्रनामादिकं सकलं विचार्य अमुञ्चन् । अहं च कथमपि स्वस्थानमागतः । परेद्युः प्रातःकाले यदाहं वृत्तपत्रमद्राक्षं तदा महदेव मम आश्चर्यमभूत् । तत्र मुखपृष्ठ एव

"महान् अपघातः । रेणगुंटामद्रासमध्ये बाष्पयानस्य लोहमार्गात् प्रच्यवनम् । सहस्राधिकजनानां प्राणहानिः । लक्षाधिकरूप्यकाणां वित्तहानिः । अभूतपूर्वा भीकरी दुरन्तघटना" ।

इति मुद्रितमासीत् । तदवलोक्य मम शिरसि सहस्रभ्रमयः समुत्पन्नाः । शताधिकानि एव चक्राणि शिरोन्तर्भाग एव भ्रमन्तीव अवाभासत । हृदयस्पन्दनं तीव्रतरमभूत् । ततः कतिपयनिमिषानन्तरं प्रकृतिमापन्नः एकां घोटिकाशकटीं भाटकेन गृहीत्वा रेणगुंटास्टेशनस्थानमधावम् । तत्र च तं भविष्यद्वादिनं व्यचारयम् । सः स्वग्राममगच्छत् इति तेऽकथयन् । सर्वेषामपि तत्रत्यानां तद्विषये विचित्र एव विश्वासः समुत्पन्न आसीत् । परन्तु न केनापि तस्य नामग्रामादिकमापृष्टमासीत् । सर्वेऽपि पश्चात्तापदग्धा आसन् । तदाहमब्रवम् "प्रत्यक्षं ज्यौतिषं शास्त्रम् इति" ।

---

# केन्द्रमन्त्रि श्रीदातारमहोदयानामाध्यक्ष्ये मधुरवाण्याः अष्टादशवर्षीयोत्सवः ।



**निवेदकः—व्ही. प. कुलकर्णी, B. Sc. बागलकोट**

जनवरीमासस्य ३१तमे तारके मधुरवाण्याः अष्टादशवत्सरस्य वार्षिकोत्सवः महता उत्साहेन निर्वर्तितः । भारतसर्वकारस्य केन्द्रीयगृहशाखाया उपसचिवा मधुरवाण्याः पितृनिर्विशेषाः श्रीदातारबलवन्तरावमहोदया दिल्लीतः समागत्य अध्यक्षसिंहासनमलमकुर्वन् । बागलकोटनगरस्य दिव्यभव्ये सर्वोदयाभिख्ये वाचनालयमन्दिरे सायं पंचवादनावसरे समारब्ध औत्सविकः कार्यक्रमः । बहव एव सुप्रतिष्ठिता नागरिकाः सर्वकारीयाधिकारिणः सर्वेऽपि शिक्षकाः वकीलाः ड्राक्तराः छात्रा अपि अहमहमिकयाऽगत्य समाङ्गणं तारकपुञ्जवदलमकार्षुः ।

कुमारी शकुन्तला केरूर एम्. ए. नाम्नी काचन संस्कृतविदुषी हृदयङ्गमया सङ्गीतभङ्ग्या मङ्गलमयस्वागतगीतमगायत् । तेन रागबद्धचित्तवृत्तिः सर्वत आलिखित इवासीत् सभारङ्गः । सचिवोत्तमा अपि सङ्गीतसमाधिमग्नाः सुरभाषासौन्दर्येण कलकण्ठमाधुर्येण च सुतरां हृतहृदया अभूवन् । ततः मधुरवाण्याः प्रधानसंपादकाः श्रीगलगली रामाचार्याः स्वागतभाषणमकुर्वन् । ततः संपादकाः पण्ढरीनाथाचार्या यदा भाषितुमुत्थितास्तदामन्त्रिणः "अहो चिरादेव न श्रुतं श्रीमतां संस्कृतभाषणम् । अद्याहं श्रीमतां गीर्वाणगिरि एव भाषणं श्रोतुमुत्कण्ठितोऽस्मि अतः संस्कृते एव उच्यताम्" इति समसूचयन् । तेषां सूचनानुसारेण संस्कृते एव भाषणं संपादकैः प्रारब्धम् । मधुरवाण्या जन्मारभ्य अष्टादशवर्षाणामितिहासः सरसया वचोवैखर्या निरूपितः । मध्ये मध्ये वाक्प्रवाहपारवश्येन भावोद्रेकेण च तरङ्गिता मान्या रसिकामात्या वक्तुः पृष्ठतटं सबहुमानं सश्लाघं च समास्फाल्य

आत्मनः गुणग्राहितां सहृदयतां च व्यञ्जयामासुरञ्जसा । ततः दातारमहोदयेभ्यः संस्कृतमानपत्रं कुसुमहारः पुष्पगुच्छश्च समर्पिताः । ततः मुख्यातिथयः अध्यक्षाः श्रीदातारमहोदया मधुरवाण्याः संस्कृतसेवां संपादकानां महासाहसं तरुणसंपादकानां पंढरीनाथाचार्याणां च सर्वसंमोहिनीं संस्कृतवक्तृत्वशक्तिं च मुक्तकण्ठं प्रशस्य "इदानीं संस्कृतस्य उत्कर्षकालः समागतः । तस्य चिन्हं भारतराष्ट्राध्यक्षैः विहितं पण्डितानां पादप्रक्षालनमेव । ईदृशे च सुप्रसङ्गे मधुरवाणीसदृशसर्वोत्तमसंस्कृतपत्राणामुन्नतिः समुत्कर्षश्च अवश्यं भवेदेव । इयं मधुरवाणी समग्रभारते प्रसारं प्रचारं प्रसिद्धिं प्रतिष्ठां प्राबल्यं प्राधान्यं प्राशस्त्यं प्रवृद्धिं संसिद्धिं च प्राप्नोतु" । इत्याशास्य स्वकं भाषणमुपसमहरन् उपमन्त्रिणः। तदनु च अभिनन्दनकार्यार्थमुद्यतेषु स्थलिककांग्रेसधुरीणेषु विजयपुरमण्डलीय सर्वोदयसंचालकेषु श्रीजोरापूरगुरुराव (B. A. LL. B.) महोदयेषु श्रीमान्य-मन्त्रिणः स्वयमासनादुत्थाय "अलमलमीदृशैरनात्मीयताद्योतकैरुपचारैः । मदीयैवेयं मधुरवाणी । नात्र ईदृशसांप्रदायिकोपचाराणामीषदप्यावश्यकता । विरम्यतामिति, सहासमुक्त्वा उदतिष्ठन् । ततः मधुरवाणीसञ्चिकाः सर्वेभ्योऽपि वितीर्णाः । ततः सभा समाप्तिमगात् ।

---

# उडिपीक्षेत्रे तत्वज्ञानसम्मेलनम्

जानेवारीमासस्य चतुर्थतारके श्रीकृष्णाधिष्ठिते उडिपीक्षेत्रे बेंगळूर-नगरनिवासिनां रा. ब. वेंकटेशाचार्यमहोदयानाम् आध्यक्ष्ये अखिलमाध्वतत्त्वज्ञान-सम्मेलनं महता समारम्भेण बृहता वैभवेन च समुदजृम्भत । महीशूरराजप्रमुखाः समेलनमिदमुद्घाटयन्तः आर्यविद्याया आर्षतत्त्वज्ञानस्य आध्यात्मिकसंस्कृतेश्च पुनरुद्धारस्य आवश्यकतां साग्रहं प्रत्यपीपदन् । तथा सम्मेलनस्य स्वागताध्यक्ष-

द्दमलङ्कुर्वाणाः वयसा वपुषा वामना अपि महसा तपसा ज्ञान–वैराग्य–भक्ति-शम–दमादिसम्पत्त्या ब्रह्मवर्चसा च महतो महीयांसः श्रीकृष्णपूजापर्याय-पीठाधिष्ठिताः श्रीश्रीपेजावरस्वामिपादाः स्निग्धगम्भीरया प्रशान्तमधुरया च वाण्या राजप्रमुखानां समागतप्रतिनिधीनां च सुस्वागतं समाशास्य "वैषयिक-सुखानि तैलदीपवत् अचिरस्थास्नूनि क्षणभङ्गुराणि । आध्यत्मिकसुखशान्तयस्तु रत्नदीपवत् चिरस्थायिन्यः । वस्तुत आत्मस्वरूपं रत्नदीपवत् देदीप्यमानं जाज्वल्य-मानं चास्ते । जीवात्मनस्तादृशस्वस्वरूपरूपरत्नदीपसाक्षात्कारः यथा भवेत् तथा तादृशं सन्मार्गं प्रदर्शयितुमेव श्रीमदानन्दतीर्थभगवत्पादा भुवमिमामवातीतरन् । "जीवात्मभिः परमार्थतः सत्यभूते अस्मिन् प्रपञ्चरङ्गस्थले परब्रह्मणः सूत्रधारित्वे स्वोचितकर्मानुष्ठानेन स्वस्वपात्राणि यथावदभिनीय परेशितुः परमानुग्रहेण परम-प्रसादेन च परमसुखं प्राप्तव्यम्" अयमेवहि आचार्यतत्वज्ञानस्य सन्देश इति सरसमुपान्यस्यन् । अध्यक्षा अपि संस्कृतपण्डितानां निकृष्टावस्थां दैन्यं च उल्लेख्य प्रथमतः तत्वज्ञानिनः यथा जीवेयुः तथा कर्तव्यम् । तत्वज्ञानस्य सर्वतो मुखप्रसाराय सर्वैरपि सर्वात्मना प्रयतनीयम् इति प्रतिपादितवन्तः । समागतानां बहूनां पण्डितानां तत्तद्भाषासु भाषणान्यभूवन् । मधुरवाणी सम्पादकानां तु प्रादेशिकभाषातोऽपि अतीवसरलं सरसं च संस्कृतभाषणमभूत् । सुदीर्घविचार-विमर्शानन्तरं तत्वज्ञानप्रसारोपयिकाः संस्कृतपण्डितानां जीविकासमस्यापरिहार-पथप्रदर्शकाः आस्तिकसमाजस्य सर्वाङ्गीणसुखशान्तिस्वास्थ्यसम्पादनोद्देशकाः बहव एव हि प्रस्तावाः स्वीकृताः सम्मेलने । तेषां यशस्विता च जनतासहकारं श्रीस्वामिपादानां प्रयत्नपरम्परामेव चान्वायतते । वैजयन्तीमण्टपे सप्ताष्टपीठाधी-श्वराणां दिव्यसान्निध्ये प्रचलिता सहस्राधिकपण्डितप्रकाण्डपरिमण्डिता दश-सहस्राधिक आस्तिकप्रेक्षकपरिबृंहितेयं सभा देवेन्द्रस्य सुधर्मसभावत् परिशोभते स्म । [illegible] पुरस्कृतवन्तः श्रीपेजावरपीठाधीशान् श्रीविश्वेशतीर्थस्वामिपादान् पुनः सानन्दमभिनन्दामस्तमाम् ।

---

# किञ्चिदत्रावधीयताम् ।

अयि मान्या अनेन अङ्केन मधुरवाण्याः सप्तदशवर्षस्य दशमी सङ्ख्या पूर्तिमेष्यति । गतवर्षे त्रयोऽङ्काः समर्पिताः । आहत्य त्रयोदशाङ्का वाचकानां करकमलेषु समर्पिताः । महनीया इदानीमपि ग्राहकधनं याचितुं वयमर्हामो वा नवा? अद्य वा श्वो वा अन्ततो गत्वा वर्षान्ते दशद्वादशाङ्कान् लब्ध्वानन्तरमपि वा देयधनं स्वयमेव दद्युरेव कृतज्ञा उदारवाचका इति बलीयसा विश्वासेन यावद्वर्षसमाप्तिं तूष्णीमेव प्रेषिताः सर्वेऽप्यङ्काः । ते सर्वेऽप्यङ्काः श्रीमद्गाम्भीर्येण मौनमर्यादया च स्वीकृताः सदयहृदयैः सर्वैरपि सहृदयवाचकैः । तेषां च सञ्चिकास्वीकारमेव परमप्रसादं मन्यमानैः "अङ्कान् गृहीतवन्तो मूल्यमपि प्रेषयन्ति एव" इति सर्वसामान्यलोकरीतिमक्षरशोनुरुन्धानैः अधिकाधिकोत्साहेन महदेवहि ऋणं कृत्वा कथङ्कारमपि चालिता इयदवधि मधुरवाणी सम्पादकैः । अयं च अस्माभिर्वाचकेषु निहितः विश्वासः नैव वन्ध्यः अभूत् किन्तु वन्द्यः अभिनन्द्य एवाभूत् इति निवेदयितुम् आनन्दीति नश्चेतः । भूयांस एव हि विद्वांसो वाचकाः स्वयं प्रेरणया वार्षिकमूल्यं सम्प्रेष्य उपाकुर्वन्नः । कतिपय वाचकानामेव सकाशात् ग्राहकधनं प्राप्तव्यमास्ते । तेऽपि एतदङ्कनिरीक्षणक्षण एव अनुपदमेव प्रेषयिष्यन्त्येवेति बलवद्विश्वसिमः । कैश्चन च वाचकैर्द्वित्रवर्षेभ्यः अपरैश्च कैचित् पञ्चषवर्षेभ्य एव एका पैकापि नैव दत्ता । एका सञ्चिकाऽपि नैव त्यक्ता । तेषां सद्भावे कृतज्ञताधियि च जातविस्रम्भैरस्माभिः तूष्णीमेव प्रेषिताः सर्वा अपि सञ्चिकाः । तेऽपि महनीया सपद्येव द्वित्रवार्षिकमूल्यमनुपदमनुप्रेषयेयुरेवेति आशास्महे । आग्रानगरनिवासिनः श्री. के. जी. नायिकमहोदयाः वर्षत्रयस्य १९ रूप्यकान् सम्प्रेष्य उपाकुर्वन् अन्वगृह्णंश्च नः । एभ्यः महनीयेभ्य इतरेभ्योऽपि दत्तधनेभ्यो वाचकेभ्यः सहस्रशो धन्यवादान् समर्पयामः । अदत्तधनांश्च आशु प्रेषणाय प्रार्थयामः सविनयमेव ।

# महासमाराधनमहोत्सवः ।



कलिकालकालुष्योपहतनिखिलमानवकुलस्य मलापहरणकलाकुशलाया ापहासरितः कल्लोलमालाक्षालितकूले जपतपोनुकूले श्रीअश्वत्थनरसिंहाधिष्ठिते त्वळ्ळीकट्टीति सुप्रसिद्धे अतिपवित्रे क्षेत्रे श्रीमदुत्तरादिमठाधीश्वरैः श्रीमत्सत्य-ोदतीर्थगुरुसार्वभौमैः स्वगुरूणाम् आराधनामहोत्सवः अत्यन्तमुत्साहेन निर्व-तः । तदैव च तत्रैव मध्वसिद्धान्ताभिवृद्धिकारिणी सभाऽपि श्रीस्वामिपादा-ामेव दिव्याध्यक्ष्ये अतियशस्वितया समुदजृम्भत । सर्वशास्त्रनदीष्णाः सुरवर-ुरुखर्वेतरगर्वसर्वंकषशेमुषीजुषः अप्रतिमस्वप्रतिभाप्रभाप्रभाविताः असङ्ख्या एव ङ्ख्यावन्तः राजहंसा इव सरसीम् अलमकुर्वन् इमामपि सदसीम् । सहस्रा-ेका एव हि छात्राः कण्ठस्थीकृतनैकशास्त्रीयग्रन्थाः परीक्षिताः विद्वद्वरेण्यैः । ाहत्य पञ्चाशत्सहस्राधिकानामेव हि भावुकजनानां सन्तर्पणं निर्वर्तितं सर्व-समर्थैः श्रीस्वामिपादैः । इयतामपि महतां जनानां स्नानपानभोजनभवनादि-व्यवस्था कृता अत्युत्तमैव आसीत् । वयसा कनीयांसोऽपि मनसा महीयांसः वपुषा तनीयांसोऽपि तपसा गरीयांसः वर्चसा वरीयांसः श्रीश्रीसत्यप्रमोदयतीन्द्राः समागतानां सर्वेषामपि स्वशिष्याणां तप्तमुद्रा-श्रीरामसन्दर्शन-तीर्थ-प्रसादादिलाभो यथाभवेत् तथाऽकलयन् अनालोच्यैव स्वकीयं कायक्लेशम् । न्यायवेदान्तादि-शास्त्रेषु प्रौढविद्यार्थिनाम् उद्ग्रन्थपरीक्षा स्वतः व्यधायि श्रीस्वामिपादैः । सायंकाले दिगन्तागतानां बहूनां विपश्चिदपश्चिमानां भाषणानन्तरं श्रीपादैः स्वयमुपन्यस्य गीतोपनिषत्सार एव उपदिष्टः । यतीन्द्राणाममोघमुपदेशामृतं पायं पायं संतृप्तमास्तिकैः । आनतं नास्तिकैः । आनन्दितं तत्वबुभुत्सुभिः । आन्दोलितं च विद्वन्मणिमस्तकैः । आनर्तितं सहृदयहृदयैः । मध्ये एकादश्यां च रात्रौ बेंगळूरनगरनिवासिनां कीर्तनाचार्यपण्डितमार्तण्डश्रीगोपालदासमहोदयानां अतीव हृदयङ्गमं कीर्तनमभूत् । अन्तिमे च दिने सर्वेषामपि महामहापण्डितानां

छात्राणां पौराणिकानां कीर्तनकर्तां वेदाध्यायिनां सदाचारसंपन्नानां भूसुराणां तथा सुवासिनीनामपि योग्यतानुसारं भूरि दक्षिणापि वितीर्णा श्रीपादैः स्वहस्तेन। अस्मिंश्च महोत्सवावसरे अर्धलक्षपरिमितं धनं व्ययितमभूत्। अहो औदार्य-महोवदान्यता अहो हृदयवैशाल्यं अहो विद्यापक्षपातः अहो सत्शास्त्रोपदिदिक्षा अहो ब्रह्मकुलानुजिघृक्षा अहो वैराग्यमहोत्यागः अल्पवयसामप्यनल्पवर्चसां श्री स्वामिपादानाम्। एतादृशेभ्यः कर्मन्दिवृन्दारकेभ्यः भगवान् जानकीजानिरायु-रारोग्यादिकं प्रदाद्विति प्रार्थयामः भक्त्या।

---

## "मधुरवाण्याः पितृगणः"

### प्रतिवर्षं इयद् विशेषधनसाहाय्यं कुर्वाणाः

### मधुरवाणी महासंरक्षकाः

| | रू. |
|---|---|
| श्रीश्रीमदुत्तरादिमठाधीशस्वामिपादाः | ३०० |
| भारतवित्तमन्त्री श्री सी. डी. देशमुख न्यू दिल्ली | १०० |
| श्री बी. एच्. पद्मनाभराववैद्य आत्मकूर | १०० |

### संरक्षकाः।

| | |
|---|---|
| श्रीश्रीमद् अघमारुमठाधीशस्वामिपादाः उडिपी | ५० |
| श्रीश्रीभण्डारकेरीमठाधीशस्वामिपादाः उडिपी | २५ |
| श्रीश्रीपेजावरमठाधीशस्वामिपादाः उडिपी | २५ |
| श्रीश्रीसिरूरमठाधीशस्वामिपादाः उडिपी | २५ |
| श्रीश्रीकाणूरमठाधीशस्वामिपादाः उडिपी | २५ |
| श्रीश्रीस्वादीमठाधीशस्वामिपादाः उडिपि | २५ |
| श्रीश्रीसुब्रह्मण्यमठाधीशस्वामिपादाः सुब्रह्मण्यं | २५ |
| श्रीश्रीभीमनकट्टीमठाधीशस्वामिपादाः दुर्वासपुरं | २५ |
| पर्तगाळगोकर्णमठाधीशस्वामिपादाः जीवोत्तमठ गोवा | १० |

---

# श्रीलोकनायकाभिनन्दनम् ।

कवि—'दुर्गेशः', नागपुरम् ।

आबाल्यान्नियमः कृतो भरतभूदुःखोपशान्त्यै मुदा
वृत्तिः पुष्कललाभदा तृणमिव त्यक्ता समं लाञ्छनैः ॥
देशार्थे च समर्पिता निजतनुर्येनानिशं धीमता
राष्ट्रात्मा ननु **लोकनायक**-सुधीर्वाग्भिः कथं स्तूयताम् ॥१॥

ख्यातो धीमान् सकलभुवने हिन्दुलोकाग्रणीर्यः
कार्यस्तोमैर्विदितधिषणो '**लोकमान्यो**'-द्वितीयः ॥
सोऽयं राष्ट्रोद्धरणनिरतो माननीयो बुधानां
प्रज्ञाराशिर्जयतु सुचिरं **माधवः** सत्यनिष्ठः ॥२॥

यो म्लानिं याति नैव प्रबलनरपतेश्चण्डभानोः प्रकाशे
तेजस्वी नापि राष्ट्रोद्धृतिगणरिपुणा राहुणा ग्रस्यते वा ॥
नानाविघ्नैरमायामविगलितरुचिः क्षीयते नापि लेशं
श्रीमँस्त्वत्कीर्तिचन्द्रो बुधमुखकुमुदं हर्षयत्वेव नित्यम् ॥३॥

दास्यक्लेशान्मलिनवदना जायते हिंदभूमिः
स्वातंत्र्याऽर्कोदयरुचिवशाल्लप्स्यते स्वामभिख्याम् ॥
जाताऽपूता यवनकुपतेः शासनात्सा प्रदीर्घात्
तच्छुद्ध्यर्थं जयतु सततं वैदिको **माधवो** नः ॥४॥

अर्पिता वाङ्मयी-पूजा **श्रीहर्यात्म**जपादयोः ॥
प्रीयतां तेन वैदर्भो **माधवोऽणे**-कुलोद्भवः ॥५॥

---

# लोकमान्यगीतारहस्य पञ्चकम् ।

ले०—**गीर्वाणज्ञानेश्वर अनन्त विष्णु खासनीस,** B. A., LL. B.
सेवानिवृत्तन्यायाधीशः ज्ञानींसंस्कृतानुवादकोविदः, ज्ञानमन्दिर जत ।

साधूच्छिष्टपविन्नपायसमिदं गीतान्तरङ्गस्रवम् ।
मिष्टं स्वादुरसायनं सुघटितं चैतन्यसञ्जीवनम् ॥
एकान्तस्फुरणं तपोऽमृतरसं बुद्धिप्रभासन्निभम् ।
बालार्कस्फुटकर्मयोगरुचिरं गीतारहस्यं पिब ॥ १ ॥

मेघाडम्बरमन्डलस्थसवितुस्तेजस्तिरोधीयते ।
ध्वान्तागारनिशासमावृतशिरः पिण्डस्य जीवस्य च ॥
कर्माकर्मविकर्मसङ्कुलकुलकर्तव्यकर्माच्युतः ।
कर्मज्ञानसमन्वितः प्रचुरधीः गीतारहस्यं पिबेत् ॥ २ ॥

मूढात्मा हतवीर्यदुर्बलमतिः स्वात्मप्रकाशान्धदृक् ।
संसारे समरे हरे हरिहरे दैन्येन लोलङ्गतः ॥
नानातर्ककुतर्कभ्रान्तमनसः स्यान्मे कथं सद्गतिः ।
सत्कर्मप्रभवोत्थहपटुमतिर्गीतारहस्यं पिबेत् ॥ ३ ॥

मालिन्याज्जडता तथा शिथिलता मोहान्धशून्या मतिः ।
धर्माधर्मविचारणा नहि कृता संसारपारप्रदा ॥
कर्माकर्मरहस्यज्ञानबधिरं धिक धिक् प्रभो जीवितम् ।
निष्कामं फलसक्तिवर्जनयुतं गीतरहस्यं पिब ॥ ४ ॥

प्रातःकालप्रभातदिग्दिनकराद् विश्रांतिराने तदा ।
सायंकालगभस्तिशान्तवरुणात् कर्मण्यभिप्रेरणा ॥
संध्याकालप्रसन्नशान्तसमये भानो तवास्तोदयौ ।
ज्ञातुं वांच्छसि कर्मयोगकुशलं गीतारहस्यं पिब ॥ ५ ॥

---

# प्रभाकरप्रभावः

( कविः—श्रीसिद्धनांगः सुब्रह्मण्यम् )

(१)

विद्वांसः प्रथमे मयूरसदृशाः भक्त्यार्यगृह्याः स्वयं
सूर्यं धार्यमहर्दिवं हृदि सतां श्लोकैरनेकैर्जगुः ।
किं दुष्येम नु तावता कतिपयैः पद्यैस्स्तुवानाः प्रभुं
शिल्पज्ञेषु नरेषु सत्सु मधुपा बध्नन्ति किन्नो गृहान् ॥

(२)

प्रातश्शीतगभस्तिरस्तशिखरिण्युष्णीषवल्लुम्बते
बिम्बं बिभ्रदशुभ्रवस्त्रशकलश्रीकं प्रभादुर्विधः ।
रुग्भिः कृष्णमृगस्य पाण्डुरपृषन्त्यृक्षाण्यधः कुर्वते
भात्यभ्रं विरताभिनायकमहारङ्गाङ्गणश्रीधरम् ॥

(३)

वातो वाति समन्ततोऽपि रसितैः शीतप्रभातोद्धतः
श्रोत्रप्रीतिकरं विरौति मुदितो जाग्रत्पतत्रिव्रजः ।
आकाशः परिपेशलः शरसुमश्रीहारिभिर्वारिदैः
स्वान्तं हन्त विकासयन्ति परितः शान्ता दिगन्ता भृशम् ॥

(४)

अस्तोकं भविकं क्रियासुरभिकश्रीकास्तमोघातुकाः
कोकीशोकनिवर्तकाः कमलिनीसम्पर्कसौख्योत्सुकाः ।
लोकानां परिपालकाः क्रमणतः कालस्य निर्वाहकाः
आर्काः पातकपावका हृदि ममालोकाश्चिरं नर्तकाः ॥

(५)

अर्चां पुष्पमार्चिकाभिरुचितां सङ्गच्छमानं दिवा
चञ्चन्मेचकवारिवाह चिकुरोदञ्चद्रुचाऽऽनीचया ।
मित्रं कञ्चुकितद्रुमाचलकुचा व्याकोचिनीमिश्वर–
न्त्युद्दृश्याच्छहृदश्च दाडिकुसुमच्छायं वनीदेवता: ॥

---

# श्रीमन्त्रालये श्रीमध्वनवमीमहामहः

( ले० अ. कृष्णाचार्यः महापाठशालाविद्यार्थी मन्त्रालयः )

माघशुक्लप्रतिपदमारभ्यनवमीपर्यन्तं श्रीपादपुत्राणां वेदान्तशिरोमणिः, कवितिलकः, इत्यादिसदुपाधिभूषितानां श्रीमतां राजाश्रीगुरुराजाचार्याणां सुनेतृत्वे दैनन्दिनं श्रीसमीरदेवस्य श्रीमन्त्रालयगुरुवराणां च महाक्षीराभिषेकाद्युत्सवः, नैकसद्विप्रसमाराधनामहः, श्रीगुरुसार्वभौमसंस्कृतमहापाठशालाप्रधानाध्यापक वेदान्तविद्वदर्चकराघवेन्द्राचार्याणां श्रीसुमध्वविजयस्यार्थानुवादश्च सतां प्रमोदमुदपादयन् । श्रीमध्वनवम्यां श्रीमज्जगद्गुरुसंस्थानाधीश्वरैः श्रीमत्परमहंसेत्यादिबिरुदावलीमण्डितैः श्रीराघवेन्द्रमठाधीशैः श्रीसुयमीन्द्रतीर्थश्रीमच्चरणैः सहसा मन्त्रालयोऽलंकृत इति कोऽपिहर्षनिर्भरो नेति न । तद्दिने तु श्रीरामदेवसंदर्शनेन रजतमयसुन्दरतरस्यन्दनोत्सवप्रेक्षणेन च अधिकं मुमुदिरे जना सर्वे । तद्दिने सायं श्री गु. सा. सं म. पाठशालाप्राधानाध्यापकानां विद्याभूषणं शिरोमणि, इत्याद्यंकितानां श्रीआचार्यवेंकोबाचार्याणां तथा श्रीअर्चकराघवेन्द्राचार्याणां च वाङ्मुखौ प्रमोददावासाताम् ।

ततः श्रीप्रह्लादराजमहोत्सवः कस्य वा चेतोऽक्ष्याह्लादकारी न भवेत् । श्रीपादपुत्रैः श्रीगुरुराजाचार्यैः प्रतिहायनं श्रीमदाचार्याणां रजतमयसुन्दरतररथोत्सवः श्रीश्रीगुरुराजप्रेरणयाविधीयते इति समाघोष्य सर्वमूलश्रीसुमध्वविजयादिपारायणकर्तॄन् अभिनन्द्य श्रीअर्चकराघवेन्द्राचार्याः ऊर्णवस्त्रदानेनापि संमानिताः ।

---

# आदर्शपत्रिका

महदिदं नः संन्तोषास्पदम् अभिमानावहं च यत् मधुरवाणीगताः लेखा इतरभाषापत्रिकाभिः अन्यसंस्कृतभाषापत्रिकाभिश्च सादरं गृहीत्वा पुनः प्रकाश्यन्ते। कर्मवीरसदृशदेशभाषापत्राणि मधुरवाण्याः लघुकथाः पुनः प्रकाशयन्ति। 'भारतीयविद्या' नाम्ना सुप्रसिद्धा संस्कृतहिन्दी उभयभाषात्मिकपत्रिका मधुरवाण्या भूयस एव लेखान् अत्युत्तमानाकलय्य 'स्ववाचका ईदृशसरसविचार-प्रचुरलेखावलोकनसौभाग्याद् मा भवेयुर्वञ्चिता इति सुबुध्या उपचिकीर्षया च पुनः प्रकटीकृत्य प्रीणयति सहृदयान्। अनया हि पत्रिकया मधुरवाण्यां गतवर्षे अस्माभिः प्रकाशितपूर्वः पण्डितजवाहरलालमहोदयस्य "संस्कृतभाषाया अन्तः शक्तिः अमरत्वं च" इति लेखः, पण्ढरीनाथाचार्येणैव नन्दकिशोरनाम्ना लिखितः "चीनादेशे संस्कृतप्रचारः" इति लेखश्च सादरं संमुद्रितौ। तत्रैव गताङ्के "वैजयन्ती" नामककवयित्रीकथामपि प्रकाश्य तदुपरि संपादकीयं लिखति गुणग्राही संपादकः।

सत्यमभिनन्दनीयोयं "गुणगृह्याः वचने विपश्चितः" इति उक्तिमनुसरन् संपादकः। तदीया इमाः पङ्क्तीर्वाचकावगाहनाय उदाहरामः।

## भारतीयविद्या

### "वैजयन्ती तथा संस्कृत-ग्रन्थाः"

"अत्र अङ्के अन्यत्र पण्डितराज-पण्ढरीनाथाचार्यविलिखिता 'वैजयन्ती' प्रकाश्यते। सा तु नायिका अस्य लेखस्य वङ्गदेशीया आसीत् अधुना यत्र पूर्वपाकिस्तानं निर्मितम्। इदानीम् अपि पूर्ववङ्गे बहवः विदुष्यः मेधसाश्रमादौ चट्टग्रामीये आसन्। तत्र ढाका-मैमनसिंह-पावना-फरिदपुरादि-मण्डलेषु बहूनि

संस्कृतविद्यायतनानि अतिष्ठन् । ब्राह्मणपण्डितानां गृहेषु तालपत्रेषु लिखितानि सहस्रशः पुस्तकानि आसन् । बहवः पूर्वपाकिस्तानात् भारते आगताः पण्डित-महोदयाः सहस्रशः तालपत्र-लिखितान् ग्रन्थान् विहाय स्वगृहोदरे । तेषाम् अमूल्यग्रन्थानां का गतिः भविष्यति इति भारतवासिभिः मननीयम् । इत्थं हि प्राचीनकालीनाः बहवः अमूल्यग्रन्थाः नष्टाः नाशिताः वा ।

पुरा भारतीया संस्कृतिः किंविधा आसीत् अधुना च सा का इति विचारणाय पण्डितराजपण्ढरीनाथाचार्यस्य 'वैजयन्ती' अत्र प्रकाश्यते । सर्वे संस्कृतं जानन्तु, सर्वाः स्त्रियः चम्पूकाव्यं लिखन्तु इति अस्माभिः न कथ्यते, परन्तु स्त्रियः स्वामि-तिरस्कृताः अपि किंविधचारित्र्यवत्यः स्युः, तथा हि ताः कथं स्वामिसहकारिण्यः एव भवेयुः इति विचार्यते । आधुनिक-भारतीयानां स्त्रियां का प्रगतिः, क्व च स्वपतिमनोवृत्त्यनुसारिणीत्वं स्वसंस्कृत्यादर्शप्रच्युतिः वा कथम् इति विवेकपरायणैः विचारणीयम् ।"

## मञ्जूषायां मधुरवाणी

**कलकत्तातः प्रकाश्यमाना 'मञ्जूषा' मधुरवाणीविषये एवं लिखति—**

"यास्तावद्देवभाषामय्यः पत्रिकास्तृणीकृतस्वार्थाः प्रचरन्ति भारतभूम्यां तेष्वेवेयमन्यतमा प्रधानतमा च मधुरवाणीत्यन्वर्थनाम्नी मासपत्रिका । अस्याश्च सम्पादकवर्यैर्महतीमपि हानिमुररीकृत्य साम्प्रतमपि प्रकाश्यते मधुरवाणीति सहस्रशस्ते धन्यवादानर्हन्ति । प्रियवाचकमहाभागाः, आसीदस्माकं बलवती प्रत्याशा यद् भारतवर्षस्य स्वाधीनतासमधिगमादनन्तरं पुनरपि प्रोड्डीना स्याद्देवभाषा-वैजयन्ती सर्वत्रैवाप्रतिहतम् । परं के वयमेवमाशंसितुम् । दुर्भाग्यतः खल्वस्माक-मिदानीं सर्वैरपि हिन्दी हिन्दीति रारट्यते संस्कृतभाषायै चासूय्यते । आर्याः, हिन्दीभाषाया अपि मूलं संस्कृतमेव, हिन्दीभाषाया अप्यभ्युदयो नान्तरेण

संस्कृतभाषाविज्ञानं सुघटः संसाधयितुमिति न खलु विस्मर्तव्यं भवद्भिः । अत एव संस्कृतभाषामयपत्रिकादीनां समुन्नतिविधौ सर्वात्मना प्रयतनीयमेव ।

साम्प्रतमस्माभिर्मधुरवाण्याः षोडशवर्षस्य ४—६ सञ्चिकाः समधिगताः । अत्र च मङ्गलाचरणम्, मासावतरणिका, सम्पादकालोकः, आर्यसंस्कृतिः, किर्लोस्कर-दिल्लीविशेषाङ्कः, संस्कृतभाषाया अन्तःशक्तिः, मैथिलिपते, कविता कामिनी कौतुकाय, संस्कृतसाहित्ये गद्यकाव्यविरलतायाः कारणम्, मधुरवाणी-शुभाशंसनम्, अनामिका सार्थवती बभूव, वैजयन्ती, सङ्गीतसम्राट्, अहो विस्मरणम्, समासविचारः, संस्कृतसमाचारः, सम्पादकानां संस्कृतभाषणम् इत्येते गद्यपद्यप्रबन्धा विलसन्ति । सम्पादकमहोदयानां लेखाः पीयूषयूषकल्पाः प्रतिपद-मेव मधु निष्यन्दमाना कस्य वा सचेतसश्चेतो न विद्रावयेयुः । अन्येषामपि लेखा नितरामेवावर्जयिष्यन्ति मानसानि सहृदयानामित्यस्माकं बलीयसी प्रतीतिः । संस्कृतभाषायां व्युत्पत्तिमधिगन्तुकामैश्छात्रैर्व्युत्पन्नैश्च प्रवयोभिः सर्वैरेव मधुरवाण्या ग्राहकत्वमङ्गीकर्तव्यम् । चिरं जीवतु मधुरवाणी, अनुदिनं च समेधमानवैभवा संसाधयतु हितं भारतवर्षस्य भव्यं च भारतवर्षीयाणामिति भगवान् भूतभावनः प्रार्थ्यते । वार्षिकं मूल्यं रूप्यकपञ्चकमात्रम् Pandit Pandharinathacharya Galgali, House No. 472, Bagal-kot, Bijapur इत्यत्र प्रेषणीयम् ।"

**समालोचकः—श्रीसितीशचन्द्रचतर्जी**, M. A. D. LITT, Lecturer Culcutta University Culcutta, संपादकः **मञ्जूषा** Formerly Editor Culcutta Oriental Journal Surabharati, Oriental Literary Digest etc. etc.

* एते त्रयोपि लेखाः बहुषु सामयिकपत्रेषु पुनर्मुद्रिताः पुनरनूदिताश्च ।

॥ श्रीराष्ट्रदेवो भव ।

भारतसर्वकारकेन्द्रगृहोपसचिवेभ्यः श्रीमद्भ्यः **दातारबलवन्तराव** महोदयेभ्यः तेषामेव मानसपुत्र्या मधुरवाण्या सादरं समर्पितं

# मानपत्रम् ।

---

विद्वत् श्रेष्ठजनेष्टदुर्लभतयाऽस्मनेतृरत्नावलौ
पल्लीपट्टणलोकवल्लभतया चानन्यचातुर्यतः ॥
दिल्यां वल्लभपीठ उल्लसति यो राजेन्द्रसल्लालितो
दातारेत्युपनामको विजयते मन्त्रीह कर्णाटकः ॥ १ ॥

नो प्रान्तीयतया नवा विकटया जातीयताव्याजतः
काराया ऋणतो न दक्षिणतया नो लेशसंबन्धतः ॥
धैर्यौदार्य-जनानुराग-कृति-वाक्चातुर्य-धुर्यैर्गुणैः
सिंहेनेव मृगेन्द्रता सचिवता तेनार्जिताऽत्यूर्जिता ॥ २ ॥

वेदान्तेषु यमाहुरेकपुरुषं किंचार्थशास्त्रे पटुं
"झाला" तात्विकपरितोषिकमहोलब्धं स येनोत्तमम् ॥
"तत्वज्ञैकक एव राष्ट्रियधुरां वोढुं क्षमो नेतरः"
प्लेटोवाक्यमिदं गृहोपसचिवःसत्यापयन् जृम्भते ॥ ३ ॥

मन्त्रित्वे कटजोर्गृहोपसचिवे त्वय्यत्र पूर्वं यथा
बाभात्वद्य गृहे गृहे पुनरपि स्वर्भारती भारते ॥
दातृत्वं बलवत्वमाभिधमिदं कैलासनाथत्वम-
प्येतस्यां चरितार्थमस्तु भवतोः **वाणी** च राष्ट्रादृता ॥ ४ ॥

बाल्यात् सप्तदशाब्दकैर्ननु भवद्भस्तावलम्बोदिता
"**वाणीयं मधुरा**" पितुः समुदयं दृष्ट्वाऽद्य तुष्टा परम् ॥
आरोग्यं चिरभोग्यभाग्यमधिकैश्वर्यं च पूर्णायुषम्
आशास्तेप्यधिकारवृद्धिममलां बुद्धिं प्रसिद्धिं च वः ॥

इति श्रीश्रीमतां सचिवोत्तमानां भूयोभूयः प्रेयः श्रेयश्च समाशंसमानाः

**बागलकोट ।**

**मधुरवाणी संपादकाः ।**

# नियमावलिः

(१) मधुरवाणीनाम्नीयं संस्कृतपत्रिका प्रतिमासं पौर्णिमायां प्रकाशते.

(२) अस्यां प्रायः प्रत्यङ्कमेका लघुकथा, सनातनधर्मविषयकाः प्रबन्धाः प्राचीनसाहित्यं चान्ये प्रचलितविषयका विवेचनात्मका लेखाः प्रकटीक्रियेरन् । सनातनधर्मद्रोहिणो लेखा नावकाशं विन्देरन् । ग्राहकेतरेषां लेखाः पद्यानि वा न प्रकाश्येरन् ।

(३) पत्रिकाया अस्याः अग्रिमदेयं मूल्यं मार्गव्ययसहितं रूपकपञ्चकम् । अङ्कस्यैकस्याणकाष्टकं मूल्यम् । द्वीपान्तरवासिनां तु वार्षिकं मूल्यं सप्त-रूप्यात्मकम् । विना मूल्यमादर्शसञ्चिका न प्रदीयेत । तदिच्छुभिश्च आणकाष्टकमूल्यानि शुल्कपत्राणि प्रहीयन्ताम् ।

(४) मधुरवाण्याः श्रेयोभिवृद्धये दशरूपकाणां दातारः सहायकाः, पञ्चविंशितिरूपकप्रदाः पोषकाः, पञ्चाशद् रूप्यकदायिनोऽनुग्राहकाः शताधिक-प्रदाः संरक्षका इति व्यपदिश्येरन् ।

(५) मधुरवाण्यां नीरसा असुवाच्याक्षरा एकपार्श्वे एवालिखिता लेखा नावसरमासादयेयुः । लेखपरिवर्तनादिषु निरनुयोज्याधिकाराः खलु संपादकाः । अप्रकाशिता लेखा विना प्रापणव्ययं न प्रतिप्रहीयरेन् ।

(६) लेखा, विज्ञापनानि, समलोचनापेक्षिणो ग्रन्थाः, पत्रिकाश्चेत्यादिसकलं **मधुरवाणी कार्यालय बागलकोट** इति संकेतेन प्रेष्यम ।

पत्रं मूल्यधनं वा प्रेषयद्भिः निजसंकेतादिकं देवनागरीलिप्यैव सुस्पष्टं विलेखनीयम् । भूतपूर्वैर्ग्राहकैः पत्रस्य धनस्य वा प्रेषणसमये ग्राहकसंख्यालेखनं नैव विस्मरणीयम । उत्तरप्रेप्सुभिरवश्यं प्रेषणीयः प्रापणव्ययः ।

संपादक मधुरवाणी

**मधुरवाणी कार्यालय, पो. मु. बागलकोट,**
**जि. विजापूर ( कर्नाटक )**

